क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥ ३
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ४
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ५
हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ ६
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ ७
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद् द्रौपदि संधाय न मे मन्युः प्रवर्धते ॥ ८
आत्मानं च परं चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ ९
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ १०
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।
तस्माद् द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ ११
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ।
स नाशयित्वा क्लेष्टारं परलोके च नन्दति ॥ १२
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ॥ १३
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १४
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ।
तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ।

C. 3. 1079
B. 3. 29. 15
K. 3. 29. 18

---

Dn D2. 4–6 M2 भव° ; T1 भवा° (for भाव°). Ś1 transp. भावः and तस्य. S शुभानने (but cf. 102*). — After $2^{ab}$, S (except M2) ins.:

102* यो न संहरते क्रोधं तस्याभावो भवत्युत ।
अभावकरणं तस्मात्क्रोधो भवति शोभने ।

— D5 om. $2^{cd}$. — $^{c}$) T1 कोपं (for क्रोधं). — $^{d}$) S विसृजते (M2 संहर°) (for न सह°). — $^{e}$) Dc M2 तस्याभवाय.

**3** $^{d}$) Ś1 K3 B1 Dc D2. 5 विसृ° (for उत्सृ°).

**4** $^{a}$) T1 न कुर्यात्कः; G (except G3) न कः कुर्यात्. — M2 transp. $4^{cd}$ and $5^{ab}$.

**5** K3 D2 om. $5^{ab}$. M2 transp. $4^{cd}$ and $5^{ab}$. — $^{a}$) B2. 3 °वाच्यो; Dn D5 G2 °वाच्यौ; G4 M2 °वाच्यं (for °वाच्ये). — $^{d}$) Ś1 नावध्यं (for °वाच्यं).

**6** $^{a}$) K2 Dn D6 तु (for च). — $^{b}$) Ś1 B1. 2 संपूजयेत च; K2 B3. 4 Dc Dn D4. 6 °यीत च; D5 °येत्ततः. — $^{c}$) S (except G4) वा (for च).

**8** $^{a}$) B3. 4 G1. 2 M निर्जितं; D2 T1 विजि°; G4 निश्रि° (for वर्जि°); cf. $15^{d}$. Ś1 K3 D2. 5 G2. 4 वीरैः (for धीरैः). Cnp तं क्रोधं विक्रमं धीरैः. — $^{c}$) S संस्मृ(G1 °हृ)त्य (for संधाय). — $^{d}$) K2. 3 B Dc D2. 4–6 G1 M2 प्रवर्तते.

**9** $^{a}$) K2 B1. 4 Dc Dn D4–6 च परान्; B3 अपरान् (for च परं). — $9^{b}$ = Gītā (Vulg.) 2.$40^{d}$. — M2 om. $9^{c}$–$20^{d}$. — $^{d}$) Ś1 K3 B1 D2 जयेल्लोकांश्च शाश्वतान्.

**10** M2 om. 10 (cf. v.l. 9). — $^{b}$) Ś1 कुरुते; K3 B1 D2 कुप्य°; B2. 4 Dn D4. 6 T G3 क्लिश्य° (for क्रुध्य°). — $^{d}$) K2 B2–4 Dc Dn D4–6 आत्मना (for अन्ततः). Ś1 K3 B1 D2 आत्मनैव विपद्यते.

**11** M2 om. 11 (cf. v.l. 9). — $^{a}$) S (M2 om.) परित्यज्य (for संत्य°). — $^{b}$) Ś1 K3 D2 अचेतसः (for अनात्मनः).

**12** M2 om. 12 (cf. v.l. 9). — $^{a}$) T2 G (except G1) तु चैव (for तथैव). — $^{b}$) Ś1 K3 क्लेश्यमानो. S (M2 om.) प्र- (for न). — $^{c}$) K2 B Dc Dn D2. 4–6 अ- (B2 वि-) (for स). Ś1 नाशयति. B2 G1 द्वेष्टारं; G2 क्षेप्तारं. — $^{d}$) K3 परलोकं स; B1 परलोकेषु. B4 स; T1 G1 न; M2 तु (for च). K3 B4 विंदति; T1 विंदते; T2 G (except G1) M1 निंद्यते (for नन्दति).

**13** M2 om. 13 (cf. v.l. 9). — $^{b}$) T2 G3 नित्यशः; G4 °तः. — $^{d}$) Ś1 K3 D2. 5 विपश्चिता (for विजानता).

**14** M2 om. 14 (cf. v.l. 9). — $^{b}$) T1 [इ]व; G2 हि (for [इ]ह). — $^{d}$) Ś1 इति (for इह). B4 Dc D5 मतः (for मतम्).

**15** M2 om. 15 (cf. v.l. 9). — $^{a}$) Ś1 D2 चैवानृतात् (for चानृततः). G2. 4 सत्याच्चानृतमश्रेयो. — $^{b}$) Ś1 Dc2 D5 नृशंस्याच्चा°; K2 नृशंसायानृशंसता; G2. 4 योनृशंस्यो नृशंसतः. — $^{c}$) T1 G2. 4 तदेवं. — $^{d}$) T1 G (except G3) M1 सद्भिर् (for साधु-). — $^{e}$) B4 S (M2 om.) वि° (for प्र°). Ś1 को वै (for कस्मात्). — $^{f}$) K3 °भयाद् (for °वधाद्). S (M2 om.) सर्वलोकविनाशनं.

C. 3. 1080
B. 3. 29. 16
K. 3. 29. 18

मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि ॥ १५
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥ १६
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १७
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ १८
हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥ १९
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ २०
क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥ २१
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते ।
रजस्तल्लोकनाशाय विहितं मानुषान्प्रति ॥ २२
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २३
यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥ २४
यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः ।
न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ २५
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥ २६
आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ २७
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।

---

**16** M2 om. 16 (cf. v.l. 9). — a) Ś1 D2 S (M2 om.) तेजस्विनं (for °स्वीति). Ś1 D5 यदाहुर्; K3 तदाहुर्. K3 B (except B1) Dc D2 T1 G (except G3) M1 हि (for वै). K3 om. (hapl.) $16^{c}$–$17^{d}$. — c) G2. 4 ह्यंतरं; M1 [ऽ]भ्यंतरं. Ś1 B1. 4m तत्र (for तस्य).

**17** K3 M2 om. 17 (cf. v.l. 9, 16). — b) S (M2 om.) परि- (for प्रति-). — c) T1 G1. 4 विदुषो (for विद्वांसो).

**18** M2 om. 18 (cf. v.l. 9). — a) Ś1 Dc क्रोधो; T1 G2. 4 क्रोधी (for क्रुद्धो). K2 om. (hapl.) $18^{cd}$. — c) B D2. 5 M1 नाकार्यं.

**19** M2 om. 19 (cf. v.l. 9). — b) Ś1 K2. 3 B D (D1. 3 missing) क्रुद्धस् (Dc वृद्धं) (for रूक्षैस्). — c) T G3. 4 श्रेयसि (for तेज°). K2 B Dn D4. 6 कर्तव्यः (for °व्ये). Ś1 K3 B4m Dc D2. 5 तस्मात्तेजस्विभिर्नित्यं. — d) K2 B2. 3 Dn D4 दूरे; B1. 4 D6 दूर- (for दूरात्). Ś1 K3 Dc D2. 5 विवर्जितः (for प्रति°).

**20** M2 om. 20 (cf. v.l. 9). — a) T1 दाक्षिण्यमर्षं; G1 दाक्ष्यं मर्षं च; M1 दाक्ष्यमक्षश्च (for दाक्ष्यं ह्यमर्षः). T2 G2–4 ह्यमर्षं शौंडीर्यं (for °र्षः शौर्यं च). — b) Ś1 शीघ्रत्वाद्. Ś1 G1 अति-; T1 असि; T2 G2–4 अपि (for इति). T2 G (except G1) चेतसि (for तेजसः).

**21** c) D4. 6 °प्रज्ञे; T1 G2. 4 °प्राज्ञैः; G1 °प्राज्ञः (for °प्राज्ञे). — d) B4 सम्यक् (for क्रुद्धैस्). B4 Dc D5 तु (for सु-). S °दुर्लभं (for °दुःसहम्).

**22** a) B2–4 Dn D4. 6 T2 G3 M2 पंडितैः; T1 पुरुषैः; Cnp [अ]पण्डितैः (as in text). Ś1 पुमांसः पंडिताः क्रोधः; K2. 3 B1 Dc D2. 5 पुमांसो(B1 °सं)पंडिताः क्रोधं. — b) K2 B2–4 Dn D4. 6 M2 °निश्चितं; K3 B1 Dc D2. 5 °जानते (for °धीयते). Ś1 क्रोध इत्यवजायते (sic). — c) Ś1 राज्ञि; K3 राज्ञः; D2 तेजः; T1 राजन् (for रजः). B2. 4 Dc D5. 6 T2 G तु (G1 ते) (for तल्). — d) K2 B Dc Dn D4–6 मानुषं प्रति.

**23** a) K3 नित्यं त्यजेत्; B1 शक्तस्त्यजेत्; Dc D5 समुत्सृजेत् (for शश्वत्त्यजेत्). — c) Ś1 Dc D5 M2 स्वधर्मादपगो; K3 °र्मादपि यो; B1 °र्मणि रतो; T1 G1 °र्मानुवशो; T2 G2–4 °र्मानुचरो.

**24** a) B1 यतः; Dc D2 G2 इति (for यदि). S (except T2 G3) अबुद्धानाम्. — b) K2. 3 B2 Dn D4. 6 T2 G अचेतसां (for अमेधसाम्). — d) Ś1 K3 B1 हि स्याद्; B2 (by transp.) स्यात्स्विद्; Dc Dn2. n3 D2 -चित्स्याद्.

**25** a) K2 Dn D4. 6 T2 G3 मानुषेषु. — c) K3 T2 G सिद्धिर् (for संधिर्).

**26** Ś1 om. $26^{ab}$. — d) Ś1 B1 अधर्मं (B1 °र्मः)प्रतिमो; K3 अधर्मप्रभवो.

**27** a) T2 G (except G1) क्रुधितः (for पुरुषः). B1 Dn T2 G3 सर्वं.

**28** a) B (except B2) S (except T2 G3) च (for हि).

हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥ २८
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां संधिमूलं हि जन्म विद्धि शुभानने ॥ २९
ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३०
यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ३१
क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने ।
क्षमा भवो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ३२
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥ ३३
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ३४
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावता कृष्णे काश्यपेन महात्मना ॥ ३५
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति ॥ ३६
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ॥ ३७
अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ।
अति यज्ञविदां चैव क्षमिणः प्राप्नुवन्ति तान् ॥ ३८
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।

C. 3. 1104
B. 3. 29. 40
K. 3. 29. 43

— $^{b}$) S (except $T_2$ $G_3$) चैव (for चापि).

**29** $^{a}$) $B_4$ संक्षयिते; $T_1$ संक्षुभिते; $G_2$ संकुचिते; $M_1$ प्रकुपिते. — $^{b}$) $K_2$ समः; $K_3$ धर्मः; $B_4$m Dc $D_5$ शर्म (for जन्म). — $^{c}$) $T_1$ बुद्धि-; $T_2$ $G_{2-4}$ $M_1$ वृद्धि-; $G_1$ विद्धि (for संधि-). — $^{d}$) $K_2$ समं; $B_4$m Dc शर्म (for जन्म). S (except $M_2$) शुचिस्मिते (for शुभा°). — ❀ **C**n: शम इति पाठे क्षमा। ❀

**30** $^{a}$) $Dn_1$ $D_4$ तां (for ताः). $Ś_1$ क्षयेरन्; $K_2$ $B_2$ क्षिये°; $B_1$ Dc $Dn_1$. $n_3$ $D_{4-6}$ $T_2$ $G_3$ क्षिपे°. — $^{b}$) $T_{1.2}$ (before corr.) $G_{2.4}$ M तादृशाः; $G_1$ °शः.

**31** Cf. $25^{ab}$. — $^{a}$) $Ś_1$ $D_2$ $T_1$ $M_1$ तस्मात्. $Ś_1$ Dc $D_{2.5}$ लोकेषु; $K_2$ नु लोके; $K_3$ लोके ह (for तु लोके). — $^{d}$) $K_3$ Dc $D_{2.5}$ भवाय; $B_1$ भूयश्च; S (except $G_1$ $M_2$) भावश्च (cf. v.l. $32^{c}$). $Ś_1$ धर्मश्च प्रथितो भवेत् (cf. $26^{d}$).

**32** $^{b}$) $K_2$ B ($B_1$ corrupt) Dn $D_{4.6}$ सर्वापत्सु सुशोभने. — $^{c}$) $Ś_1$ $K_3$ Dc Dn $D_{2.5.6}$ $T_2$ $G_3$ -वतो; $T_1$ $G_4$ $M_1$ भावो; $G_2$ भावे (for भवो).

**33** $^{a}$) $Ś_1$ $K_3$ $B_{1.2}$ Dc $D_{2.5}$ $G_2$ क्षिप्तः; $M_2$ चैव (for क्रुद्धः). — $^{b}$) $Ś_1$ $K_3$ $D_2$ सहते यो. $Ś_1$ $D_2$ बलीयसां; $K_2$ B (except $B_1$) $Dn_1$. $n_3$ $D_{4.6}$ °सः. — $^{c}$) T $G_{1-3}$ यस्तु ($T_2$ before corr. यः स्म); $G_4$ यस्मिन्; $M_1$ सत्यं; $M_2$ स तु (for यश्च).

**34** $^{b}$) $Ś_1$ $K_2$ $G_1$ लोकः °तनः. — $^{c}$) $Ś_1$ $K_3$ $B_2$ T $G_{3.4}$ स्वल्प° (for त्वल्प°).

**35** $^{ab}$) T $G_{2.3}$ $M_2$ इमां. $D_{5.6}$ $T_2$ $G_{2.3}$ $M_2$ गाथां. $K_3$ क्षमावतः. — $35^{b} = 44^{b}$. — $^{c}$) T $G_{2.3}$ गीता. $K_2$ $B_{2.4}$ Dn $D_{2.4.6}$ T $G_{1.3.4}$ क्षमावतां. — $^{d}$) $Ś_1$ $K_{2.3}$ $D_2$ कश्यपेन.

**36** $^{a}$) $Ś_1$ transp. धर्मः and यज्ञः. $K_3$ क्षमा यज्ञाः क्षमा धर्माः. — $^{b}$) $G_{2.4}$ $M_2$ दानं (for वेदाः). — $^{c}$) $Ś_1$ $D_2$ एव (for एवं). $Ś_1$ $K_3$ Dc $D_{2.5}$ विजानीते. $K_2$ B (except $B_1$) Dn $D_{4.6}$ य एतदेवं जानाति.

**37** $^{a}$) $Ś_1$ $K_3$ Dc $D_{2.5}$ विद्या (for सत्यं). — $^{d}$) $Ś_1$ [इ]व धृतं; $K_2$ B D ($D_{1.3}$ missing) [इ]दं धृतं; $K_3$ वै धृतं (for चोद्धृतं). — After 37, $Ś_1$ $D_2$ read 40 (followed by 103*), while $K_3$ reads $40^{abcd}$ only.

**38** $Ś_1$ reads 38–39 in this sequence: 39, $38^{cd}$, $38^{ab}$. $K_3$ om. $38^{ab}$. $K_2$ $B_{3.4}$ Dc Dn $D_{4-6}$ $G_3$ transp. (like $Ś_1$) $38^{ab}$ and $38^{cd}$. — $^{a}$) $D_2$ धर्म° (for ब्रह्म°). — After $38^{ab}$, $K_2$ $B_{2-4}$ Dc Dn $D_{4-6}$ read $40^{ef}$, followed by 103*. — $B_2$ $D_2$ om. $38^{cd}$. — $^{c}$) $K_2$ क्रियावतां; $K_3$ $T_2$ G (except $G_1$) यज्ञवतां; $T_1$ यंत्रवतां (for यज्ञविदां). $K_2$ $Dn_1$ चापि; $B_{1.3.4}$m Dn $D_{4.6}$ $G_1$ लोकान् (for चैव). — $^{d}$) $Ś_1$ $K_3$ वै; $K_2$ $D_1$ हि; B ($B_2$ om.) Dc Dn $D_{4-6}$ $G_1$ च (for तान्). — After 38, $B_3$ $D_6$ read $40^{ef}$, followed by 103*.

**39** For $Ś_1$ cf. v.l. 38. $D_2$ om. $39^{ab}$. $M_1$ om. from ब्रह्म up to कथं (in $40^{b}$). — After $39^{ab}$, $K_3$ (which om. $39^{cd}$) reads $41^{cd}$, and $B_1$ reads $40^{ef}$ (followed by 103*). — $^{c}$) $D_5$ (by transp.) सत्यवतां सत्यं. — $^{d}$) $Ś_1$ $K_2$ B D ($D_{1.3}$ missing) यज्ञः (for दानं). $Ś_1$ Dc -वतां; $K_2$ B Dn $D_{4-6}$ शमः ($Dn_{1}$. $n_2$ श्रमः) (for यशः). — After 39, $D_2$ reads $41^{cd}$.

C. 3. 1104
B. 3. 29. 40
K. 3. 29. 43

क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः ॥ ३९
तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ।
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः ।
भुज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा ॥ ४०
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ४१
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह संमानमृच्छन्ति परत्र च शुभां गतिम् ॥ ४२
येषां मन्युर्मनुष्याणां क्षमया निहतः सदा ।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥ ४३
इति गीताः काश्यपेन गाथा नित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः ॥४४
पितामहः शांतनवः शमं संपूजयिष्यति ।
आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः ।
कृपश्च संजयश्चैव शममेव वदिष्यतः ॥ ४५
सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ ४६
एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ॥ ४७
कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भामिनि ॥ ४८
सुयोधनो नार्हतीति क्षमामेवं न विन्दति ।

---

**40** Ś$_1$ K$_3$ D$_2$ read 40$^{abcd}$ after 37. M$_1$ om. up to कथं (cf. v.l. 39). — $^{a}$) B (except B$_3$) Dn D$_{4.6}$ तादृशीं (for ईदृशीं). — $^{c}$) S (except G$_1$) यत्र (for यस्यां). Ś$_1$ K$_3$ Dc D$_{2.5}$ वेदाश्च (for सत्यं). — $^{d}$) T$_1$ G$_1$ यत्र (for यज्ञा). K$_2$ B$_{3.4}$ Dn D$_{4.6}$ च धिष्ठिताः; B$_{1.2}$ प्रतिष्ठिताः (for च विष्ठिताः). Ś$_1$ K$_3$ Dc D$_{2.5}$ सर्वमेव (K$_3$ सर्वं सम्यक्) प्रतिष्ठितं. — K$_2$ B$_{2-4}$ Dc Dn D$_{4-6}$ read 40$^{ef}$ after 38$^{ab}$; B$_1$, after 39$^{ab}$. K$_3$ om. 40$^{e}$–41$^{b}$. — $^{e}$) Ś$_1$ K$_2$ B D (D$_{1.3}$ missing) अन्ये वै; T$_1$ इज्येते; G$_1$ इज्यंते; M$_2$ अन्ये च (for भुज्यन्ते). K$_2$ Dn D$_{4.6}$ यजुषां; B Dc D$_{2.5}$ G$_4$ M$_2$ यज्विनां (for यज्वनां). — $^{f}$) Ś$_1$ K$_2$ B Dn D$_{4.6}$ कर्मि°; D$_{2.5}$ धर्मि° (for क्षमि°). — After 40, Ś$_1$ K$_2$ B D (D$_{1.3}$ missing) ins.:

103* क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः ।

[Dn$_3$ ब्रह्मविदां; D$_{2.5}$ °लोकः. D$_5$ लोकः परमपूजितः.]

**41** Ś$_1$ om. 41; K$_3$ D$_2$ om. 41$^{ab}$ (for K$_3$ cf. v.l. 40). — $^{c}$) K$_3$ Dc D$_{2.5}$ च (for हि).

**42** 42$^{ab}$ = 1. 38. 9$^{cd}$. — For 42$^{ab}$, Ś$_1$ *repeats* 39$^{cd}$ (with v.l. यज्ञः for दानं and -वतां for यशः). — $^{b}$) K$_2$ Dc D$_{2.5}$ लोकः; B$_3$ चापि (for चैव). — $^{c}$) K$_{2.3}$ B$_1$ Dc Dn D$_{2.6}$ T$_1$ G$_4$ सन्मानम्. Ś$_1$ K$_{2.3}$ Dn$_1$ D$_4$ अर्छंति; B Dc D$_5$ अर्ह(B$_2$ °र्चं)ति; Dn$_2$ D$_2$ G$_1$ इच्छंति (for ऋच्छन्ति). — $^{d}$) S परां (for शुभां).

**43** $^{b}$) K$_2$ [अ]भिहितः; B (except B$_1$) Dn D$_{4.6}$ [अ]भिहतः (for निहतः). — $^{c}$) Ś$_1$ B$_2$ Dc °तरा; K$_3$ T$_1$ G$_{1.4}$ M °तरो; G$_2$ °मतो (for °तरे). T$_1$ G$_{1.2.4}$ M लोकः.

**44** $^{a}$) Dc D$_{2.5}$ G$_{2.4}$ गीता. Ś$_1$ K$_2$ D$_5$ कश्यपेन. — $^{b}$) = 35$^{b}$. M$_2$ नित्यमेव (for गाथा नित्यं). — $^{c}$) S (except M$_2$) तु (for त्वं). — $^{d}$) T$_1$ G (except G$_3$) M$_1$ मा द्रौपदि (by transp.).

**45** K$_3$ B D (D$_{1.3}$ missing) M$_2$ ins. after 45$^{ab}$; K$_2$, after 45$^{cd}$: G$_4$, after 45$^{ef}$: M$_1$, after 46:

104* कृष्णश्च देवकीपुत्रः शमं संपूजयिष्यति ।

[Cf. 45$^{b}$. K$_2$ समयं पूजयिष्यति; M$_2$ शममेव वदि°.]

— T$_2$ G$_3$ om. 45$^{cdef}$. — $^{c}$) K$_{2.3}$ D$_2$ S (T$_2$ G$_3$ om.) चैव (for क्षत्ता). — $^{d}$) K$_2$ सममेव; Dc परमेव. Ś$_1$ B$_{2-4}$ Dn$_{2}$.n$_3$ D$_4$ वदिष्यति. B$_1$ शमं संपूजयिष्यति (= 45$^{b}$); S (T$_2$ G$_3$ om.) पौरवृद्धास्तथैव च. — D$_2$ om. 45$^{ef}$. — $^{f}$) T$_1$ G$_{1.2.4}$ M$_1$ वदिष्यति.

**47** G$_1$ om. 47. — $^{b}$) K$_2$ नोद्यमानः. — $^{c}$) S (G$_1$ om.) आदास्यतेति (for राज्यं दातेति). — After 47, D$_2$ ins.:

105* यत्र पार्थो धनुष्पाणिर्भीमः कृष्णश्च वीर्यवान् ।

**48** $^{b}$) Dc विपत्तये (for अभूतये). — After 48$^{ab}$, D$_2$ ins.:

106* क्षयः सर्वस्य लोकस्य पृथिव्यामिति मे मतिः ।
भीष्मो द्रोणश्च कर्णश्च किं शेषं तत्र पश्यसि ।

— $^{c}$) K$_2$ D$_5$ सदा चैतत्. — $^{d}$) K$_2$ एव (for अपि). K$_{2.3}$ B D (D$_{1.3}$ missing) G$_1$ भाविनि.

**49** $^{b}$) B$_2$ विनिंदति; B$_3$ न निंदति. S क्षमा मामेव विंदति. — $^{c}$) B$_4$ Dc Dn D$_{2.5}$ T$_2$ G$_3$ तत्र (for तस्य). K$_2$ एवेह; B$_{2-4}$ D (D$_{1.3}$ missing) G$_1$ इत्येवं. B$_1$ M$_2$ अर्हस्तस्या अहमिति. — $^{d}$) K$_3$ G$_{2.4}$ M$_2$ मा (for मां). Ś$_1$ K$_{2.3}$ B$_1$ विंदति.

अर्हस्तस्याहमित्येव तस्मान्मां विन्दते क्षमा ॥ ४९
एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्तास्म्यहमञ्जसा ॥ ५०

इति श्रीमहाभारते आरण्यकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

# ३१

द्रौपद्युवाच ।
नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥ १
नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ २
त्वां चेद्व्यसनमभ्यागादिदं भारत दुःसहम् ।
यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ३
न हि तेऽध्यगमज्जातु तदानीं नाद्य भारत ।
धर्मात्प्रियतरं किंचिदपि चेज्जीवितादिह ॥ ४
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ५
भीमसेनार्जुनौ चैव माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ६
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ ७
अनन्या हि नरव्याघ्र नित्यदा धर्ममेव ते ।

C. 3. 1125
B. 3. 30. 9
K. 3. 30. 9

---

**50** $^{a}$) $Ś_1$ धर्मवतां; $K_3$ $B_1$ $D_2$ ह्यात्मवतां; $M_1$ आत्मविदां. $K_3$ धर्मम् (for वृत्तम्). — $^{c}$) T $G_{2.3}$ क्षमां. $Ś_1$ °नृशंसस्य; $K_2$ °नृशंसा च.

Colophon. $K_{1.4}$ $D_{1.3}$ missing. — *Major parvan:* $Ś_1$ $Dn_2$ T $G_{2-4}$ आरण्य. — *Sub-parvan:* $B_3$ $D_2$ (both om. sub-parvan name) mention only द्वैतवनप्रवेश; likewise $B_4$ $D_5$ only द्वैतवन. — *Adhy. name:* $K_2$ $B_4$ $G_1$ युधिष्ठिरवाक्यं; Dc युधिष्ठिरवाक्ये क्षमाप्रशंसा; $D_2$ क्षमाप्रशंसा; $T_2$ $G_{2.3}$ $M_1$ क्षमास्तुतिः. — *Adhy. no.* (figures, words or both): Dn S 29. — *Śloka no.:* Dn 53.

## 31

☞ This adhy. is missing in $K_{1.4}$ $D_{1.3}$ (cf. v.l. 3. 1. 1; 22. 30; 23. 28); the MSS. are mostly ignored here.

**1** $1^{a}$ = 3. 38. $25^{a}$. — $^{c}$) S (except $T_1$ $M_2$) राज्ये (for वृत्ते). — After 1, $K_2$ B (except $B_1$) Dc Dn $D_{4-6}$ ins.:

107* कर्मभिश्चिन्तितो लोको गत्यागत्या पृथग्विधः ।
तस्मात्कर्माणि नित्यानि लोभान्मोक्षं यियासति ।

[(L. 1) $K_2$ $B_2$ (m as in text) Dn $D_{5.6}$ गत्यां गत्यां. $D_5$ पृथक्पृथक्.]

**2** $^{a}$) $D_5$ ते न (for नेह). $K_3$ B Dc $D_5$ $T_1$ G (except $G_3$) $M_2$ °साभ्यां (for °स्याभ्यां). — $^{d}$) $Ś_1$ $K_{2.3}$ $D_2$ न यज्ञैर्भूरिदक्षिणैः.

**3** $^{b}$) T $G_2$ M दुष्षहं; $G_1$ दुष्प्रभं. $K_3$ इदं च भरतर्षभ. — $^{c}$) $K_3$ $D_5$ न त्वं; B (except $B_3$) Dc यस्त्वं; T G स त्वं; $M_1$ राजन् (for यत्त्वं). — $^{d}$) $Ś_1$ $K_{2.3}$ Dc $D_{2.5}$ [ऽ]मितौजसः; $B_1$ महायशाः; $B_4$ बलीयसः (for महौ°).

**4** $^{a}$) $T_1$ $G_1$ $M_1$ तु (for हि). $Ś_1$ $K_3$ $D_5$ ते व्यगमज्; $K_2$ $B_{2.3}$ $M_2$ तेध्यगमज्; Dc तेध्यगमं; $D_2$ ते ह्यभवज्; $T_1$ corrupt; $T_2$ $G_{2-4}$ तेभ्यगमञ्. — $^{b}$) Dc $D_5$ om. न. $T_2$ G (except $G_1$) चाद्य (for नाद्य). — $Dc_2$ om. (hapl.) $4^{cd}$. — $^{c}$) $Dc_1$ $D_5$ पर° (for प्रिय°). — $^{d}$) $D_4$ ते (for चेज्). $Dc_1$ जीवितं. $K_{2.3}$ S अपि; $Dc_1$ च ते (for इह).

**6** $^{a}$) $K_3$ B $Dn_2$. $n_3$ $D_{5.6}$ $T_2$ $G_3$ चोभौ; $Dn_1$ $D_4$ $T_1$ $G_{1.2.4}$ $M_1$ चेमौ (for चैव). — $^{b}$) $M_2$ यमौ चैव (for माद्रेयौ च). — $^{c}$) $T_2$ G (except $G_1$) त्यजेयमिति ते बुद्धिर्. — $^{d}$) $B_2$ कदाचन (for परि°).

**8** $D_2$ *repeats* $8^{ab}$ (with v.l.). — $^{a}$) $D_2$ अत्यंतं हि (second time); $T_1$ $G_4$ त्यक्त्वान्या ($T_1$ °न्यौ) हि; $T_2$ $G_{1-3}$ त्यक्त्वान्यान्हि ($G_1$ °नि); $M_1$ त्यक्त्वान्यत्तु; $M_2$ अन्येभ्यो हि (for अनन्या हि). $G_{1.4}$ °व्याघ्राः; $G_2$ °श्रेष्ठ. $K_3$ $D_2$ (first

C. 3. 1125
B. 3. 30. 9
K. 3. 30. 9

बुद्धिः सततमन्वेति छायेव पुरुषं निजा ॥ ८
नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः ।
अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्धत ॥ ९
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् ।
दैवतानि पितॄंश्चैव सततं पार्थ सेवसे ॥ १०
ब्राह्मणाः सर्वकामैस्ते सततं पार्थ तर्पिताः ।
यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ ११
आरण्यकेभ्यो लौहानि भाजनानि प्रयच्छसि ।
नादेयं ब्राह्मणेभ्यस्ते गृहे किंचन विद्यते ॥ १२
यदिदं वैश्वदेवान्ते सायंप्रातः प्रदीयते ।
तद्दत्त्वातिथिभृत्येभ्यो राजञ्शेषेण जीवसि ॥ १३
इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ।
वर्तन्ते पाकयज्ञाश्च यज्ञकर्म च नित्यदा ॥ १४
अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ॥ १५
अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः ।
एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः ॥ १६
राजन्परीतया बुद्ध्या विषमेऽक्षपराजये ।
राज्यं वसून्यायुधानि भ्रातॄन्मां चासि निर्जितः ॥१७
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ १८
अतीव मोहमायाति मनश्च परिदूयते ।
निशाम्य ते दुःखमिदमिमां चापदमीदृशीम् ॥ १९
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ॥ २०
धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।

---

time) इ($D_2$ अ)तिशक्तिर्यथाशक्तिः. — $^b$) $T_2$ G (except $G_1$) नित्यता. $K_3$ $D_5$ धर्मं सेवते ($D_5$ °ने); $T_1$ सा ममैव ते; $T_2$ G (except $G_1$) धर्मं एव ते. — $^c$) $B_1$ संततम्. — After 8, $B_3$ ins.:

108* छायेवान्वेति पुरुषं धर्मः साधु मयार्जितः।

**9** $^c$) $Ś_1$ $K_3$ Dc $D_5$ [अ]पि महीं; $D_2$ हि महीं (for पृथिवीं). S सर्वां (for कृत्स्नां). — $^d$) $D_2$ प्रवर्धते (for अवर्धत).

**10** $^c$) T $G_{2-4}$ देवांश्चैव; $G_1$ M देवता($G_1$ °तां)श्च (for दैवतानि).

**11** $^a$) $Ś_1$ $K_3$ Dc $D_{2.5}$ कामभोगांस्ते; $T_1$ सर्वकामार्थैः. $T_2$ $G_{2-4}$ च; $M_1$ तु (for ते). — $M_2$ om. (hapl.) $11^b$–$12^c$. — $^b$) $B_3$ पूजिताः (for तर्पिताः). $Ś_1$ $K_3$ Dc $D_{2.5}$ सततं भुंजते गृहे. — $^c$) $M_1$ व्रतिनो (for यतयो). — After 11, $K_2$ B Dc Dn $D_{4-6}$ $T_2$ $G_{2-4}$ ins.:

109* भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका।

**12** $M_2$ om. $12^{abc}$ (cf. v.l. 11). — $^a$) Dc आरण्यकेथ; $T_1$ आरण्येभ्योथ. $Ś_1$ $K_3$ Dc लोहानि; S ($M_2$ om.) वन्यानि. — $^b$) B (except $B_3$) $T_2$ G (except $G_1$) $M_1$ भोजनानि.

**13** $^a$) $Ś_1$ $K_{2.3}$ B Dc $Dn_2$. $n_3$ $D_{2.4}$ $T_2$ $G_{3.4}$ वैश्वदेवं ते. — $^b$) $T_1$ M विधी° (for प्रदी°). N ($K_{1.4}$ $D_{1.3}$ missing) शांतये ($Ś_1$ $D_{2.5}$ सायं च; $K_3$ सायं वै) क्रियते गृहे. — $^c$) $K_2$ $B_{1.3}$ $Dn_1$. $n_3$ $D_{4-6}$ $T_2$ $G_{1.3.4}$ °भूते° (for °भृत्ये°). $Ś_1$ $K_3$ $D_2$ श्वभ्यश्च श्वपचेभ्यश्च (= 3. 2. $57^a$); see below. — $^d$) $Ś_1$ $K_3$ दत्त्वा (for राजन्). $Ś_1$ $K_{2.3}$ B Dc Dn $D_{4-6}$ $M_2$ शिष्टेन (for शेषेण). $D_2$ यज्ञकर्म च सर्वदा (cf. $14^d$). — After 13, $Dc_2$ $Dn_2$ $D_5$ ins.:

110* श्वभ्यश्च श्वपचेभ्यश्च दत्त्वा शिष्टेन जीवसि।
[ See above v.l. of $Ś_1$ $K_3$ $D_2$. ]

**14** $^b$) $B_2$ $G_{1.4}$ $M_2$ काम्या (for काम्य-). — $^d$) $Ś_1$ भारत (for नित्यदा). S सदा ($T_2$ $G_3$ °द) यज्ञा($T_2$ $G_3$ °ज्ञ)श्च तेनघ.

**15** $^b$) $Ś_1$ $B_{2.3}$ निर्जने (for वि°).

**16** $^b$) $T_1$ $G_{1.2}$ M पौंडरीको°. — $^{cd}$) S इष्टास्त्वया महायज्ञा बहवोन्ये सदक्षिणाः.

**17** $^c$) $B_2$ वसूंश्चा°; $D_2$ पशूना° (for वसून्या°). $Ś_1$ राज्यं च वसून्यादाय; $K_{2.3}$ S पार्थं ($K_2$ राज्यं) मित्राणि चास्मांश्च. — $^d$) $B_1$ अपि (for असि). $Ś_1$ भ्रातॄन् चापि विनिर्जितः; $K_{2.3}$ S वसूनि च पराजितः.

**18** $^a$) Dc $D_5$ अनसूयोर्वं°. — $^b$) S (except $M_2$) धीमतः. — $^{cd}$) $Ś_1$ $K_3$ Dc $D_{2.5}$ transp. कथं and बुद्धिः. T $G_{3.4}$ आपादिता (for आपतिता).

**19** $^a$) $K_3$ मा मोहयति; S मोह आयाति. — $^b$) $K_2$ B $Dn_3$ $D_5$ $G_1$ °भूयते; $D_2$ °हीयते. — $^c$) $Ś_1$ $K_3$ न शाम्यति ($K_3$ °ते); $K_2$ B $Dc_2$ $D_{5.6}$ निशम्य वे. S निशाम्य व्यसनं पार्थ. — $^d$) $Ś_1$ दृष्ट्वानापदमीदृशीं; S तवेदमतिदुःसहं (M °दुष्षहं).

**20** $20^{ab}$ = 1. 29. $1^{ab}$; etc. — $^{cd}$) $Ś_1$ $K_{2.3}$ Dc Dn $D_2$ लोकास्तिष्ठंते.

दधाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २१
यथा दारुमयी योषा नरवीर समाहिता ।
ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥ २२
आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पापकम् ॥ २३
शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठन्नान्येषां नात्मनः प्रभुः ॥ २४
मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः ॥ २५
नात्माधीनो मनुष्योऽयं कालं भवति कंचन ।
स्रोतसो मध्यमापन्नः कूलाद्वृक्ष इव च्युतः ॥ २६
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च ॥ २७
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥ २८
आर्यकर्मणि युञ्जानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ॥ २९
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥ ३०
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः ।
यो हन्ति भूतैर्भूतानि मोहयित्वात्ममायया ॥ ३१
अन्यथा परिदृष्टानि मुनिभिर्वेददर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ३२
अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च ।
अन्यथैव प्रभुस्तानि करोति विकरोति च ॥ ३३
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ।
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥ ३४
एवं स भगवान्देवः स्वयंभूः प्रपितामहः ।

C. 3. 1152
B. 3. 30. 36
K. 3. 30. 36

---

**21** $^{a}$) Ś$_1$ धात्रैव; B$_2$ T$_2$ G (except G$_1$) तथैव. Ś$_1$ K$_3$ Dc D$_{2.5}$ किल (for खलु). — $^{c}$) Ś$_1$ D$_2$ T G$_{2.3}$ ददाति. — $^{d}$) = 5. 31. 2$^{d}$.

**22** $^{ab}$) S (except M$_2$) यथा दारुमयीं योषां नरो धीरः समाहितः. — $^{c}$) Ś$_1$ K$_{2.3}$ D$_2$ चेष्टय(K$_{2.3}$ °यं)ति; B$_3$ (m as in text) Dc इंग°; T$_1$ G (except G$_3$) M$_2$ ईह°; M$_2$ नेंग° (for ईर°). Ś$_1$ °मर्माणि; K$_{2.3}$ °कर्माणि (for °मङ्गानि). Cnp चेष्टयन्त्यङ्गकर्माणि. — $^{d}$) Dc D$_5$ -भूता (for राजन्). M$_1$ तथा धातुः प्रजा इमाः.

**23** $^{a}$) Ś$_1$ K$_{2.3}$ Dc D$_{2.5}$ आकाशमिव. — $^{d}$) K$_3$ B पातकं (for पापकम्).

**24** $^{a}$) T$_1$ G$_{1.2}$ °बद्धेव; M$_1$ °बद्धो हि. — $^{b}$) T$_1$ G$_{1.2}$ M नीयते (for नियतो). — $^{c}$) K$_2$ Dn$_1$. n$_3$ D$_4$ T$_2$ G$_{1.3}$ तिष्ठेन् (for तिष्ठन्). — $^{d}$) K$_3$ T$_1$ G$_{1.2}$ M$_1$ om. the *second* न.

**25** $^{a}$) Ś$_1$ स्तंभ (for सूत्र). — After 25$^{ab}$, B (B$_2$ om.) reads 26$^{cd}$.

**26** $^{a}$) B$_3$ नार्थाधीनो. — $^{b}$) K$_2$ B$_{3.4}$ Dn$_1$. n$_3$ D$_{4.6}$ T$_2$ G (except G$_1$) भजति (for भवति). B$_1$ D$_{2.5}$ T$_1$ G$_{1.4}$ किं° (for कं°). — B$_2$ om. 26$^{cd}$. — B (B$_2$ om.) reads 26$^{cd}$ after 25$^{ab}$. — $^{d}$) K$_3$ T$_1$ G (except G$_3$) M$_1$ कूल- (for कूलाद्).

**27** Cited (as a nyāya) in Sarvadarśanasaṃgraha (ed. Abhyankar), p. 176 (with v.l. वा श्वभ्रमेव वा for नरकमेव च); also in the Nyāyavārttika of Uddyotakāra on Nyāyasūtra 4. 1. 21. — $^{d}$) Dc T$_2$ G (except G$_4$) M वा (for च).

**29** $^{a}$) Dn D$_{2.5.6}$ T$_1$ M आर्यें (for आर्य-). — $^{b}$) T$_2$ G$_{3.4}$ पापो (for पापे). — $^{c}$) Ś$_1$ K$_3$ D$_2$ M$_2$ चरति.

**30** $^{a}$) B$_1$ प्राप्तः (for धातुः). — $^{b}$) Ś$_1$ K$_3$ B (except B$_2$) D$_{2.5}$ क्षेत्रसंज्ञकं.

**31** $^{c}$) Ś$_1$ यद्धंति; K$_3$ युद्धंति (for यो हन्ति). — $^{d}$) Ś$_1$ B$_2$ [अ]थ; K$_3$ Dc D$_5$ स्व-; B$_4$ [अ]र्थं-; D$_2$ स; G$_4$ तु (for [आ]त्म-).

**32** K$_3$ om. 32$^{ab}$. — $^{a}$) D$_5$ अथ वा (for अन्यथा). Dc परिद्रष्टास्मि. — $^{b}$) M$_2$ कविभिर्. K$_2$ B$_4$ तत्वदर्शिभिः; Dc$_2$ वेदवादिभिः; T$_2$ G (except G$_1$) वेदपारगैः. — B$_1$ M$_1$ om. (hapl.) 32$^{d}$–33$^{a}$.

**33** B$_1$ M$_1$ om. 33$^{a}$ (cf. v.l. 32). — $^{a}$) Ś$_1$ एवं च (for एव हि). T G$_{2-4}$ वर्तंते (for मन्यन्ते). G$_1$ अन्यथा वा ऽयवर्तंते; M$_2$ °था परिवर्तंते. — $^{b}$) T$_1$ G$_1$ M ह; T$_2$ G$_{2-4}$ हि (for च). Ś$_1$ K$_3$ Dc D$_{2.5}$ भविष्यंतीति मानवाः.

**34** $^{a}$) Ś$_1$ काष्ठस्य (for वा काष्ठं). — $^{b}$) K$_2$ Dc$_2$ D$_6$ M$_2$ वा° (for चा°). B$_2$ om. च. Ś$_1$ चाश्मानमश्मना; T$_1$ अश्मनीवात्मना; G$_1$ ह्यश्मानं चाश्मना; G$_{2.4}$ M$_1$ अ(G$_2$ ह्य)श्मना ह्यश्म वा. — $^{c}$) Ś$_1$ K$_3$ B$_{2.4}$ G$_{1.4}$ M$_1$ वा° (for चा°). — $^{d}$) Ś$_1$ Dc अचेतनः; K$_3$ D$_2$ अचेतसं.

**35** $^{a}$) T$_2$ G (except G$_1$) अंते (for देवः). — $^{c}$)

C. 3. 1152
B. 3. 30. 36
K. 3. 30. 36

हिनस्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ॥ ३५
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ।
क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ॥ ३६
न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथायमितरो जनः ॥ ३७
आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान्सुखिनश्चैव विह्वलामीव चिन्तया ॥ ३८
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ३९
आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥ ४०
कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४१
अथ कर्म कृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ४२

इति श्रीमहाभारते आरण्यकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

# ३२

युधिष्ठिर उवाच ।
वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ १
नाहं धर्मफलान्वेषी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २
अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहानावसता कृष्णे यथाशक्ति करोमि तत् ॥ ३
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।

---

K3 T G2. 3 M1 निहंति (for हिनस्ति). — $^{d}$) T1 M1 जन्म (for छद्म).

**37** $^{c}$) Ś1 K2 B2 Dc D6 T2 G3. 4 एव (for इव). K3 प्रकुत्या; S (except M2) प्रयुक्तो (for प्रवृत्तो). K2. 3 Dc D5 [ऽ]सौ (for ऽयं).

**38** $^{b}$) Ś1 K3 B Dn2. n3 D4. 5 G4 °कर्षितान्. — $^{d}$) Ś1 विह्वलयामीव चिंतया (hypermetric!); K2 G2. 4 °लानि विचिंतये (K2 °या); K3 D2 °लानीव चिंतया; B1. 2. 4 Dc Dn D4–6 °लानिव चिंतया; B3 T1 M1 °लामि वि(B3 न)चिंतये; T2 G3 °लेव विचिंतये; G1 चिंतयाम्यतिविह्वला; M2 °लास्मि विचेतना. The reading विह्वलामीव was found in two of the MSS. collated for the ed., but not included in our apparatus. The conjecture was made already by Aufrecht; see PW s. v. वि+ह्वल्.

**39** $^{d}$) Ś1 K2. 3 D2 समं यो नानुपश्यति.

**40** $^{b}$) Ś1 K2 D2 Cnp धर्माभि(D2 °ति)शंकिनि; K3 चौर्यातिशंसिनि; D5 धर्मविशंकिते.

**41** $^{b}$) Ś1 नानुगच्छति; K2 Dc नान्यमर्छति; B2. 4 °मर्च्छति. — K2 D2 om. (hapl.) 41$^{c}$–42$^{b}$. — $^{c}$) Ś1 K3 Dc D5 कर्मणा बहु(K3 marg. *sec. m.* तेन)दोषेण.

**42** K2 D2 om. 42$^{ab}$ (cf. v.l. 41). — $^{b}$) Ś1 K3 B (except B1) D4. 6 अर्छति; Dc अर्हति.

Colophon. K1. 4 D1. 3 missing. — *Major parvan:* Ś1 K2 Dn2 T2 G आरण्य. — *Sub-parvan:* B4 D5 (both om. sub-parvan name) mention only द्वैतवन. — *Adhy. name:* K2 B4 Dc द्रौपदीवाक्यं; D2 ईश्वरमाहात्म्यं; T2 G2–4 विधातृ(G4 धातृ)गर्हणं; G1 द्रौपदिमते विधातुकरणं (sic). — *Adhy. no.* (figures, words or both): Dn S 30. — *Śloka no.:* Dn 43.

## 32

☞ This adhy. is missing in K4 D1. 3 (cf. v.l. 3. 1. 1; 22. 30; 23. 28). 1$^{a}$–4$^{a}$ is missing in K1 (cf. v.l. 3. 1. 1); the MSS. are mostly ignored here.

**1** $^{a}$) B4 बहु (for वल्गु). — $^{c}$) K2 D2 S (except G4) यत्; B3 Dc D5 तु (for तत्). — $^{d}$) D5 च; S सं (for तु).

**2** $^{a}$) K2 B2. 4m Dn कर्म°; S °फलाकांक्षी. T1 om. (hapl.) 2$^{cd}$. — $^{c}$) Ś1 Dc Dn1 D4–6 G1 M2 ददानि; T2 G3 ददाति. T2 G3. 4 एवं (for एव). — $^{d}$) Ś1 K2. 3 D2 अपि (for उत).

**3** $^{a}$) Ś1 नात्र; D5 G1 चात्र; M2 मेत्र (for वात्र). — $^{c}$) K2 गृहवासता नित्यं च; B Dn D4. 6 गृहे वा वसता कृ°; S गृहे निवसता कृ°.

आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ।
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ॥ ४
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥ ५
अतिवादान्मदाच्चैव मा धर्ममतिशङ्किथाः ।
धर्मातिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥ ६
धर्मो यस्यातिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ॥ ७
वेदाध्यायी धर्मपरः कुले जातो यशस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ८
पापीयान्हि स शूद्रेभ्यस्तस्करेभ्यो विशेषतः ।
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते ॥ ९

प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविताम् ॥ १०
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सिद्धा धर्मेणैव सुचेतसः ॥ ११
प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवैरपि गरीयसः ॥ १२
एते हि धर्ममेवादौ वर्णयन्ति सदा मम ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ १३
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ १४
धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति ।
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ॥ १५

C. 3. 1176
B. 3. 31. 17
K. 3. 31. 17

---

**4** K3 om. $4^{ab}$. K1 resumes from $4^{b}$ ! — $^{d}$) B Dc2 वृत्तिम्; G4 धर्मम् (for वृत्तम्). — Ś1 K1 D2 om. $4^{ef}$; B Dc D4–6 read it after $5^{ab}$ (B4, after 111*). — K2. 3 B Dc1 Dn D4–6 ins. after $4^{ef}$ (B4, after $4^{cd}$): Ś1 K1 D2 (which om. $4^{ef}$), after $4^{cd}$:

111* धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ।

[ Ś1 K3 B2–4 D2. 5 °वाणिजको. Ś1 K3 D2. 5 दीनो (for हीनो).]

Thereafter Dc1 D6 *repeat* $5^{ab}$.

**6** $^{a}$) D2. 6 T2 G3 अतिवादान्. Ś1 K1–3 वदाम्येतत्; B Dc Dn D4. 6 T2 G3 वदाम्येष (B3 वदत्येष); D2. 5 वदस्येतान् (D5 °तत्) (for मदाच्चैव). — $^{b}$) K2 D6 नाधर्मम्; D5 न धर्मम्. Ś1 K1. 2 B Dc Dn D4–6 अभि- (Dc2 अवि-; Dn2 अपि); D2 इति (for अति-). Ś1 T1 G (except G3) M1 -शंकथाः. — D5 transp. $6^{cd}$ and $7^{ab}$. — $^{c}$) Ś1 K1. 2 B Dn2. n3 D4. 6 धर्माभिशंकी. — $^{d}$) K2 D5 तिर्यग्योनि-; Dn D2 °गेति (!).

**7** D5 transp. $6^{cd}$ and $7^{ab}$. — $^{a}$) Ś1 K1. 2 B Dc Dn D4–6 अभि- (for अति-). — $^{b}$) K2 D5 Cnp अर्थे; K3 अर्थो; Dc1 दोषं; D2 आर्ष्यो (for आर्षं). G1 M1 अदोषो; M2 दृश्यते (for आर्षं वा). T G2. 3 दोषो दुर्बलम् (T1 °बोध) आत्मनः; G4 broken. — $^{d}$) K2 D5 Cnp स्वर्लोकाद् (for स लो°).

**8** $^{a}$) Ś1 K1 D2 धर्मरतिः; G2 कर्मपरः. — $^{b}$) B Dn D4. 6 G2 मन° (for यश°). — $^{c}$) K2 न; Dc [अ]भि-; Dn2 D5 नि-; D2. 6 प्र- (for स). D2 om. (hapl.) $8^{d}$–$9^{c}$. — $^{d}$) K1 B1. 4 Dn D4. 6 राजर्षिर्. K1 धर्मवादिभिः; B2 धर्मयोक्तृभिः (m as in text). D2 न धर्ममतिशंकते (cf. $9^{d}$).

**9** D2 om. $9^{abc}$ (cf. v.l. 8). — $^{a}$) K1. 2 B2. 3 Dc Dn D4–6 transp. हि and स. — $^{b}$) Ś1 K1–3 [ऽ]पि वा पुनः; B (except B1) Dc Dn D4–6 विशिष्यते; G4 broken. — $^{c}$) Ś1 M1 [ऽ]धर्म° (for मन्द°). — $^{d}$) = $17^{b}$. K1. 2 B Dc Dn D4–6 अभि° (for अति°).

**10** $^{c}$) Ś1 K1 मार्कंडेयो°. — $^{d}$) Ś1 K2. 3 °जीविनः; K1 Dc D2 °तः; B1 °तं; B3. 4 Dn D4. 5 M1 °ता; M2 °कां.

**11** $^{a}$) Some MSS. वशिष्ठो. — $^{b}$) Some S MSS. रोमशः शुकः; G1 रोमहर्षणः. — $^{c}$) Ś1 K1. 3 Dc D5 S (avoiding hiatus !) चाप्यृषयः; K2 वा ऋषयः. B (except B2) Dn D4. 6 सर्वे (for सिद्धाः). — $^{d}$) B3 T1 G (except G3) M1 सुतेजसः; B4 सुवेधसः.

**12** $^{a}$) Ś1 K1 Dc2 G1 M1 ह्येनान्. — $^{b}$) M1 दिव्यान् शोभासम°. — $^{d}$) K1. 2 B Dn D4–6 देवेभ्योपि.

**13** $^{b}$) B Dn D4. 6 [अ]नघे (for मम). — $^{c}$) D2 कर्तारो ह्यम°.

**14** $^{a}$) T2 G (except G1) ततो (for अतो). — $^{b}$) K3 कर्म (for धर्मम्). — D2 om. (hapl.) $14^{cd}$. — $^{c}$) B Dc Dn D4. 6 राज्ञि (for रजो-). — $^{d}$) Ś1 K1 T1 वा (for च). — Ś1 K1. 2 B D (D1. 3 missing) ins. after 14 (D2, which om. $14^{cd}$, ins. after $14^{ab}$):

112* उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ।

C. 3. 1176
B. 3. 31. 17
K. 3. 31. 17

इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावान्मन्यते बालो मोहमन्यत्र गच्छति ॥ १६
प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ॥ १७
प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥ १८
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥ १९
आर्षं प्रमाणमुत्क्रम्य धर्मानपरिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ २०
शिष्टैराचरितं धर्मं कृष्णे मा स्मातिशङ्किथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ २१
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमृच्छतः ॥ २२
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ २३
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं किंचिदाप्नुयुः ॥ २४
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ २५

---

[ K1 उन्मत्तो. K1 मूढः (for बालः). Dc2 D2 आगम° (for आगत°).]

**15** $^{a}$) K1. 2 B1. 3 Dc2 सर्वाभिशंकी; K3 साध्वाति°; B2. 4 Dc1 Dn D4. 6 धर्माभि°; D2. 5 सर्वाति°; T1 सर्वाव°. Ś1 K1 नान्यस्य; K2 B Dc Dn D4. 6 नान्यस्मात्. — $^{c}$) K2 °प्रभाव (for °प्रमाण). Ś1 K1 Dc2 -सन्नद्धः; B3. 4 -तत्वज्ञः; S (except M2) चोन्नद्धः. — $^{d}$) Ś1 K1-3 Dc D2. 5 T1 M1 [ऽ]पि; G1. 4 [ऽ]भि- (for हि). Dc D5 अवमानकः; S अवमन्यते.

**16** $^{a}$) B3 D2 T2 G1-3 M °प्रति°; T1 G4 °संबंधं. — $^{b}$) K3 लोकविश्रुतं; G4 कालसाक्षिकं. — D2 om. 16$^{c}$–17$^{b}$. — $^{c}$) Ś1 K1. 2 B D (D1. 3 missing; D2 om.) T1 G1. 4 M एतावन्. B1. 4 लोको (for बालो).

**17** D2 om. 17$^{ab}$ (cf. v.l. 16). — $^{b}$) = 9$^{d}$. Ś1 K1. 2 B D (D1. 3 missing; D2 om.) अभि- (for अति-). — $^{c}$) K2. 3 पुण्यान् (for पापो). D2 धर्मं प्रमाणमध्यायन्.

**18** K3 om. (hapl.) 18$^{a}$–19$^{b}$. — $^{a}$) K1 प्रमाणान्यनिवृत्तो; K2 D2 प्रमाणेत्यति°; B1 Dc2 Dn1. n3 D4. 5 प्रमाणाद्धि नि°; B2. 4 Dc1 Dn2 D6 प्रमाणाद्धिनि°; B3 T G (except G1) प्रमाणादति°. — $^{c}$) Ś1 K1 B Dc Dn D4-6 °तिगो; K2 D2 °निवृतो (for °नुगो). — $^{d}$) M2 न लोकान् (for नरकं).

**19** K3 om. 19$^{ab}$ (cf. v.l. 18); T1 om. (hapl.) 19$^{ab}$. — $^{a}$) G1 धर्मं° (for कृत°). — $^{b}$) M अनु° (for अभि°). — $^{c}$) K3 पुण्यानि (for कल्याणि).

**20** K1 om. 20. — $^{a}$) K3 कर्म-; T1 आर्ष-; M1 यो हि (for आर्षं). K2 D2 T2 G3 उत्सृज्य (for उत्क्रम्य). — $^{b}$) B Dn D4-6 T2 G3 धर्मं न प्रति(T2 G3 परि)पा°; Dc धर्मं प्रति न पा°. — $^{c}$) Dc S (except G1 M2) धर्मं° (for सर्व°). — $^{d}$) K2 अशुभं जन्म विंदति; K3 आजन्मं तु न विं°; B4 भृशं जन्मसु विं°; Dc D5 सुजन्म न स (D5 स न) विं°; D2 corrupt; T1 आजन्म स निकृंतति; T2 G1. 3. 4 M2 आजन्म स (M2 -सु) न नंदति; G2 आत्मानं संविनश्यति; M1 आ जन्मसु न विं°. — Ś1 K2 B D (D1. 3 missing) T2 G2-4 ins. after 20: K1, which om. 20, ins. after 19:

113* यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ।
नैव तस्य परो लोको नायमस्तीति निश्चयः ।

[ (L. 1) K2 यस्यानार्षे; B3 यस्य नार्य. Ś1 शिष्टाचारस्त; K1 °चाराश्चं; D5 °चारस्य. B Dc Dn D4 भाविनि. — (L. 2) Ś1 Dn D2. 6 G2. 4 न वै (for नैव).]

**21** $^{b}$) K3 B1 मा मा; T1 मास्तु; M2 नास्मान् (for मा स्म). Ś1 K1. 3 B Dc Dn D4-6 अभिशंकि(Dn3 °क by corr.)थाः; K2 S (except G1) [अ]ति(M2 वि)शंकथाः. — $^{c}$) K3 दृष्टं (for प्रोक्तं).

**22** $^{a}$) T1 G1 नान्यत् (for नान्यः). — $^{c}$) S स वै (G1 सेव; M2 स च) नौः. K3 D2 पारगस्येव. — $^{d}$) N (K4 D1. 3 missing) पारमिच्छतः.

**23** $^{b}$) Ś1 K1-3 B1 Dc2 D2. 5 धर्मदर्शिभिः. — $^{c}$) Ś1 K1 [आ]रात्; K3 स्यात् (for [ए]तत्). — $^{d}$) K3 चेदम् (for मज्जेद्).

**24** $^{c}$) D5 युज्येरन्; T1 युंजीयुर्; T2 (before corr.) G2. 4 युंजेयुर्; M1 युंजीरन् (for युज्येयुर्). Ś1 K1-3 B1 Dn D2. 4. 6 T2 (by corr.) G3 विद्यां (Ś1 K2 °द्या) ते नैव युज्येयुर् (Ś1 K1-3 D2 °ज्येरन्); B2. 3 Dc विद्यया नैव युंजेयुर् (Dc पूज्येयुर्). — $^{d}$) K1 T1 M1 कंचिद्; K2 B D (D1. 3 missing) केचिद् (for किंचिद्). Ś1 आयुषः (for आप्नुयुः).

**25** $^{b}$) Ś1 K1-3 Dc D2. 5 स्वाध्यायशीलता.

नाचरिष्यन्परे धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ २६
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥ २७
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवे ।
धर्मं ते ह्याचरन्कृष्णे तद्धि धर्म सनातनम् ॥ २८
स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥ २९
त्वय्येतद्वै विजानीहि जन्म कृष्णे यथा श्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥ ३०
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥ ३१
बहुनापि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किंचित्प्रेत्य शर्मास्ति कर्म वा ॥ ३२
कर्मणामुत पुण्यानां पापानां च फलोदयः ।
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ३३
नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ॥ ३४
कृशाङ्गाः सुव्रताश्चैव तपसा दग्धकिल्बिषाः ।
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ॥ ३५
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ।
यष्टव्यं चाप्रमत्तेन दातव्यं चानसूयता ॥ ३६

C. 3. 1198
B. 3. 31. 38
K. 3. 31. 38

---

**26** $^a$) $K_2$ $T_1$ परे धर्मं; $G_1$ पतेद्धर्मं. — $^b$) Ś$_1$ $K_{1.3}$ परैः. S [ऽ]पि च (for च ये). $K_2$ वैरः परचरे च यैः (sic). — $^d$) $K_1$ विफलाः (for अ°).

**27** $^a$) $K_{2.3}$ $D_2$ हि (for [ए]व). — $^b$) $K_1$ °र्वोरग° (for °र्वासुर°). — $^d$) Ś$_1$ $K_{1.3}$ Dc $D_{2.5}$ $M_2$ ईदृशं (for आदृताः).

**28** $^b$) $K_2$ $B_2$ Dn $D_{4-6}$ ध्रुवं; S (except $M_2$) स्थितं (for ध्रुवे). — $^c$) B Dn $D_{4.6}$ $G_1$ व्य($G_1$ व्या)चरन्; $T_2$ प्राच°; $G_{2-4}$ [ऽ]प्याच°; $M_1$ ह्यच°. — $^d$) Ś$_1$ $K_{1-3}$ Dc $D_{2.5}$ श्रेयः; $Dn_1$ धर्म्यं; $Dn_2$ धर्मः; $Dn_3$ $T_1$ धर्मं; B (except $B_4$) $D_{4.6}$ $G_1$ $M_1$ शर्मं; $M_2$ वर्त्मं (for धर्म). $T_2$ $G_{2-4}$ स हि धर्मः सनातनः.

**29** $^a$) $M_1$ न (for स). Ś$_1$ $M_1$ अफलो (for स°). $K_1$ न चायमपरो धर्मो; $K_2$ सदायमफलो धर्म्यो; $K_3$ B D ($D_{1.3}$ missing) स नायमफलो धर्मो. — $^b$) T $G_3$ नाधर्मो (for न धर्मो). Ś$_1$ °फलवानपि (for °फल उच्यते). $K_{1-3}$ B D ($D_{1.3}$ missing) नाधर्मो($K_2$ Dc $D_2$ °र्मः)फलवानपि; $M_2$ नाधर्मः फलमृच्छति. — $^c$) Ś$_1$ $K_{1-3}$ Dc $D_{2.5}$ ह्यपि; $M_1$ [ऽ]पि च (for ऽपि हि). $Dn_1m$ यज्ञानां (for विद्यानां).

**30** $^a$) Ś$_1$ $K_1$ स्व($K_1$ त्व)मेव तद्; $K_{2.3}$ B D ($D_{1.3}$ missing) $T_2$ $G_3$ त्वमात्मनो; $M_2$ त्वय्येवैतद्. $K_2$ विजानासि; $K_3$ Dc $D_{2.5}$ °नीषे. — $^b$) Ś$_1$ श्रुता; $K_2$ [अ]श्रुवं; $M_2$ [अ]ग्नितः (for श्रुतम्). — $^c$) $K_3$ वेद्यां (for वेत्थ). $K_2$ $B_4$ $T_2$ G (except $G_1$) वापि (for चापि).

**31** $^b$) Ś$_1$ $K_{1-3}$ Dc $D_2$ अनुमानं; $D_5$ उपायानां (for उपमानं). — $^c$) Dn आप्नोति (for अस्तीति)!

**32** $^a$) $K_3$ $B_1$ Dn $D_{4.6}$ ह्यपि ($Dn_1$. $n_2$ °प्य-) विद्वांसो (for [अ]पि ह्यवि°). — $^c$) B (except $B_1$) Dc S (except $G_4$) येषां (for तेषां). S (except $M_2$) धर्मतः — $^d$) $T_2$ G $M_1$ transp. शर्म and कर्म. Ś$_1$ $K_1$ नर्म वा; $K_{2.3}$ $B_1$ Dn $D_{2.5}$ वा पुनः; $T_1$ [अ]शर्म वा; $M_2$ वर्म च (for कर्म वा).

**33** $^a$) Ś$_1$ शत-; $K_1$ बत; $K_2$ गुप्त-; B Dc Dn $D_{4.6}$ श्रुत-; $T_1$ युक्त-; $T_2$ G (except $G_1$) अपि (for उत). — $^c$) Ś$_1$ $K_1$ $B_2$ $Dc_1$ Dn $D_{4.6}$ $T_2$ [अ]त्यय°; $B_{1.4}$ $Dc_2$ $D_5$ $G_1$ $M_2$ [अ]व्यय°; $M_1$ द्विजा° (for [अ]प्यय°). — $^d$) $K_1$ वेद° (for देव°). B Dc Dn $D_{4-6}$ भाविनि.

**34** $^a$) Ś$_1$ $K_{1.3}$ Dc Dn $D_{2.4.5}$ एतानि वेद (om. न); $T_2$ G (except $G_1$) तानि वेद न. — $^b$) B Dn $D_{4.6}$ मुह्यंतेत्र. Ś$_1$ $K_{1-3}$ Dc $D_{2.5}$ $M_2$ मानवः शुभदर्शने. — After $34^{ab}$, Ś$_1$ $K_{1-3}$ $B_4$ D ($D_{1.3}$ missing) ins.:

114* अपि कल्पसहस्रेण नरः श्रेयोऽधिगच्छति ।

[ $B_4$ Dn $D_{4-6}$ न स (for नरः). ]

**35** $G_1$ om. 35. — $^a$) $D_{2.5}$ कृशाशाः (for कृशाङ्गाः). Ś$_1$ सुकृशाशाः सुवृत्ताशाः; $K_1$ सुव्रताः सुकृशाशाश्च; $K_{2.3}$ कृशाशाः सुव्रताशाश्च; B Dc Dn $D_{4.6}$ कृ(Dc हृ)ताशाश्च व्रताशाश्च. — $^b$) $K_1$ तथैव. $M_1$ $G_{2.4}$ दग्धकल्मषाः. — $^c$) N ($K_4$ $D_{1.3}$ missing) प्रसादैर् (for प्रसन्नैर्). — $^d$) Ś$_1$ $K_2$ $Dc_2$ पश्यंते तानि (for °न्त्येतानि). $D_2$ पश्यंतीह फलोदयं.

**36** $^b$) $T_2$ $G_{2.3}$ शंकितव्या. — $T_1$ om. (hapl.) from चाप्रमत्तेन up to ईश्वरं (in $39^a$). — $^c$) B Dc Dn $D_{4-6}$ $T_2$ G च प्रयत्नेन. — $^d$) Ś$_1$ $K_3$ $T_2$ G (except $G_1$) चानसूयया.

**37** $T_1$ om. 37 (cf. v.l. 36). — $^a$) $K_2$ B Dc Dn $D_{4-6}$ [इ]ह (for [इ]ति). — $^b$) Ś$_1$ $D_2$ यथैतद्; $K_3$ Dc

3.1198
3.31.39
3.31.39

कर्मणां फलमस्तीति तथैतद्धर्म शाश्वतम् ।
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ॥ ३७
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ।
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ॥ ३८
ईश्वरं चापि भूतानां धातारं मा विचिक्षिपः ।
शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ॥ ३९
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमं दैवतं कृष्णे मातिवोचः कथंचन ॥ ४०

इति श्रीमहाभारते आरण्यकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

# ३३

द्रौपद्युवाच ।
नावमन्ये न गर्हे च धर्मं पार्थ कथंचन ।
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥ १
आर्ताहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्तन्निबोध मे ॥ २
कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ ३
आ मातृस्तनपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥ ४
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।

---

तथैव. K1 कर्म (for धर्मं). T2 G M1 -शासनं (for शाश्वतम्). — c) Ś1 K1 देवानां; M2 पुत्रेभ्यः (for पुत्राणां). — d) D6 S (T1 om.) काश्यपः.

**38** T1 om. 38 (cf. v.l. 36). — c) S (except M2; T1 om.) विसृज्य (for व्यवस्य). — d) D4. 6 नास्तिकं. G1 M2 उत्सृजेः. D2 नास्तिभावं समुत्सृज.

**39** T1 om. ईश्वरं (cf. v.l. 36). — a) Ś1 K1. 3 D2 सर्वं- (for चापि). — b) Ś1 K1 माधिचिक्षिपः; K2 B Dc Dn D4. 6 मा च वै (B3. 4 Dc वि-) क्षिप; K3 T2 G3 मा विचिक्षिप. — c) K3 योक्षस्वैनं; D2 बुध्य°; D5 रक्ष° (by corr. स्तुद°); G4 ईड° (for शिक्ष°).

**40** a) Ś1 K1. 3 D2 संभूतो; Dc D5 तत्वज्ञा; M2 तज्ञत्त्या (for तद्भक्तो). — b) K2 Dc D5 M2 मर्त्यां गच्छंत्य°. — c) K1–3 B D (D1. 3 missing) T1 G1 M उत्तमां (G1 °रां) देवतां. — d) K1. 2 B1. 2 Dn D4. 6 T2 G3 मावमंस्थाः; B3 मा च निंदीः; B4 मा राधेथाः.

Colophon. K4 D1. 3 missing. — *Major parvan:* Ś1 K1 T1 G2–4 आरण्य. — *Sub-parvan:* B4 D5 (both om. sub-parvan name) mention only द्वैतवन. — *Adhy. name:* K1 द्रौपदीवाक्यं; B4 Dc युधिष्ठिरवाक्यं; D2 धर्मप्रशंसा; T2 G2. 3 नास्तिक्यनिराकरणं; G1 द्रौपदीमते नास्तिक्यनिन्दाकरणं. — *Adhy. no.* (figures, words or both): K1 Dn S 31. — *Śloka no.:* Dn 41.

## 33

☞ This adhy. is missing in K4 D1 (cf. v.l. 3. 1. 1; 22. 30); the MSS. are mostly ignored here.

**1** 1–7a missing in D3 (cf. v.l. 3. 23. 8). — a) M2 °मंस्ये (for °मन्ये). D5 G1 च (for the *second* न). — b) K3 D2 कदाचन. — d) T1 M1 °मन्ये (for °मंस्ये).

**2** D3 missing (cf. v.l. 1). — d) K2 B Dn त्वं; G1 सन् (for तन्).

**3** D3 missing (cf. v.l. 1). — a) Ś1 K1 कर्तव्यं किल; K3 Dc D2. 5 कर्म वै (D5 कर्मैव) किल; B1 धर्म खल्विह. — b) K3 B (except B3) Dn D4. 5 T2 G3 जानता; D6 न ज्ञाता (for जातेन). Ś1 B D5 °कर्षण. — c) Ś1 D2 अकर्मेणेह (D2 °णे हि); K3 स्वकर्मणा हि; D5 सुकर्मणो हि; D6 T2 G3 अकर्मणो हि; T1 G1. 2 M अकर्मिणो हि (T1 -पि). — d) K3 स्थावराणि न चेतनी; D5 T1 स्थावराणीतरे जनाः.

**4** D3 missing (cf. v.l. 1). — a) N (K4 D1. 3 missing) यावद्गोस्तन° (Ś1 °दुस्थान°; B3 Dc1 D6 °द्रोः स्तन°). — b) Ś1 K1 छायोपमं (K1 °मे) नृणां; K2. 3 B Dc Dn D4–6 छायोपसेवनात् (K3 Dc °सर्पणात्; Dn1 °सर्पणां); D2 इच्छोपसर्पणात्. — c) Ś1 जंतुश्च; K1. 2 B Dn2. n3 D4–6 T2 G3 जंतवः (for जङ्गमाः). — Ś1 D2 om. (hapl.) 4d–5c. — d) T1 प्राप्नुवंति. K1 प्रयांति प्रेत्य चेह च (cf. 5d).

इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ॥ ५
उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥ ६
पश्यामि स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथायमुदके बकः ॥ ७
स्वकर्म कुरु मा ग्लासीः कर्मणा भव दंशितः ।
कृत्यं हि योऽभिजानाति सहस्रे नास्ति सोऽस्ति वा ॥
तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनावापः क्षीयते हिमवानपि ॥ ९
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि ।
अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान् ।
नान्यथा ह्यभिजानन्ति वृत्तिं लोके कथंचन ॥ १०
यश्च दिष्टपरो लोके यश्चायं हठवादकः ।
उभावपसदावेतौ कर्मबुद्धिः प्रशस्यते ॥ ११
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं स्वपेत् ।
अवसीदेत्सुदुर्बुद्धिरामो घट इवाम्भसि ॥ १२
तथैव हठबुद्धिर्यः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥ १३
अकस्मादपि यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ १४

C. 3. 1217
B. 3. 32. 16
K. 3. 32. 16

---

**5** D3 missing (cf. v.l. 1). Ś1 D2 om. $5^{abc}$ (cf. v.l. 4). — $^{a}$) K3 जंगमानां. — $^{d}$) D2 चेह वा; T2 G (except G1) चैव हि (for चेह च).

**6** D3 missing (cf. v.l. 1). B3 om. $6^{ab}$. — $^{a}$) Ś1 K1. 3 D2 °नंदंति (for °जानन्ति). — $^{d}$) T2 G3 कर्मिणां.

**7** D3 resumes from $7^{b}$ (cf. v.l. 1)! — $^{a}$) Ś1 K1–3 Dn D2 सर्वे हि; B3 S (except T2 G3) पश्यंतः (for पश्यामि). G1. 2 स्वयमु° (for स्वं समु°). — $^{d}$) T2 G2–4 [अं]डजः (for बकः). — After 7, N (K4 D1 missing) T2 G1. 3 ins.:

115* अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन ।
तदेवाभिप्रपद्येत न विहन्यात्कथंचन ।

[ (L. 1) K3 Dc2 D2. 3. 5 T2 G3 अकर्मणा. K3 वृत्ति: (for वृत्तिः). D4. 6 T2 G3 नैव (for न हि). — (L. 2) Ś1 K1. 3 D2 °द्येरन्; B1 °द्येयुः (for °द्येत). Ś1 K1 D2 विहन्युः; B1 Dc2 हि हन्यात्. K1. 2 Dc1 Dn D4. 6 कदा° (for कथं°). ]

**8** $^{a}$) N (K4 D1 missing) G1 स (for स्व-). G2 -धर्म (for -कर्म). D3 श्लाघीः; G2. 4 M2 हासीः (for ग्लासीः). — $^{b}$) D5 M1 कर्मणो; M2 कर्मणे. K3 वंदितः; S (except T1) दंसितः. — $^{c}$) N (K4 D1 missing) कृतं (for कृत्यं). Ś1 K1. 3 D2. 3 यो वि°; B2 व्यति° (for योऽभि°). — $^{d}$) Ś1 K1 वास्ति वा न; K2 B Dc Dn D4. 6 T2 G3 M2 सोस्ति नास्ति (by transp.); K3 D5 सोस्ति वा न. B1. 3 Dc Dn D4. 6 T2 G3 च (for वा). D5 सहस्रेष्वस्ति वा न वा. D3 broken.

**9** T1 om. 9–10. — $^{b}$) K1 [S]पि वा (for तथा). — $^{c}$) Ś1 K1 Dc D2. 3. 5 निरादा(Dc1 D2 °दी)नः; K2 B Dn D4. 6 ह्यनादानात्; K3 निराहारः (for ह्यनावापः). — $^{d}$) K2 B Dn D4. 6 T2 G2–4 क्षीयेत.

**10** T1 om. 10 (cf. v.l. 9). — $^{a}$) Ś1 K1 M1 उत्सीदेयुः. — $^{b}$) Ś1 K1. 3 B4 D2 इह; K2 B2. 3 Dn D4. 6 भुवि; D3 broken; T2 G3 अपि (for यदि). — After $10^{ab}$, Ś1 K1. 3 B4 Dc Dn D2. 3. 5 ins.:

116* तथा ह्येता न वर्धेरन्कर्म चेदफलं भवेत् ।
[ Ś1 न ह्येरन्; Dc न वर्तेरन्. ]

— B3 om. $10^{cd}$. — $^{c}$) K1 Dc अपि चास्य फलं; T2 G (except G1) दृष्ट्वापि च फलं. — $^{e}$) B Dc D4 M2 om. न. K1 ह्यधि-; K2 B1 Dn D5 ह्यपि; B2 वै वि-; Dc ह्यति-; D6 त्वभि- (for ह्यभि-). Ś1 K1–3 Dc Dn D2. 5 -गच्छंति (for -जानन्ति). — $^{f}$) Dn वृत्तिं लोकाः; G1 लोके वृत्तिं (by transp.). B Dc D2. 4–6 M2 संतो (B2 शांता; M2 संति) लोके हि दांभिकाः (D2 °कान्).

**11** $^{b}$) Ś1 K1 चैव; K3 Dc G1 चाहं; B3 Dn D2. 3 T2 G2–4 चापि; D5 चार्थं- (for चायं). Ś1 K1 B Dn D3–6 °वादिकः; Dc °वेदिनः; M1 °वाचकः. — $^{c}$) K2 Dn D4. 5 अपि शठौ; Cnp अपसदौ (as in text).

**12** $^{a}$) Ś1 उदासीनो; B Dc D4 S उपासीत. — $^{b}$) B2 निर्विशंकः. K2. 3 B Dn D4. 6 M2 सुखं स्वपन् (K2 Dn शयेत्; K3 सचेत्); T G M1 स्वपन्सुखं. — $^{c}$) K1. 3 B Dn D4. 5 G4 M1 स (for सु-). — $^{d}$) K2 Dn T1 इवोदके (for इवाम्भसि).

**13** $^{a}$) Ś1 K1 तथेति (for तथैव). Dn °दुर्बुद्धिः (for °बुद्धिर्यः)! — $^{b}$) D5 अपुण्य° (for अकर्म°). — $^{c}$) K3 D5 आसीनो; B4 आसीदेन्. T2 G2. 3 कृपणं (for न चिरं).

**14** $^{a}$) K2 B Dc Dn D4–6 M2 इह (for अपि). Ś1 K1 D2. 3 अकस्मात्कस्यचिद्योर्थं; K3 अकस्माद्धेवधः कश्चित् (sic).

3.1218
3.32.17
3.32.17

यच्चापि किंचित्पुरुषो दिष्टं नाम लभत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ १५
यत्स्वयं कर्मणा किंचित्फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम् ॥ १६
स्वभावतः प्रवृत्तोऽन्यः प्राप्नोत्यर्थानकारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ १७
एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणः ॥ १८
धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥ १९
यद्ध्ययं पुरुषः किंचित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥ २०
कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।
स यथा प्रेरयत्येनं तथायं कुरुतेऽवशः ॥ २१
तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥ २२
मनसार्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं धीरः पुरुषस्तत्र कारणम् ॥ २३
संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ २४
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
धिया धीरो विजानीयादुपायं चास्य सिद्धये ॥ २५
ततः प्रवर्तते पश्चात्कारणेष्वस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥ २६
कुशलेन कृतं कर्म कर्त्रा साधु विनिश्चितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥ २७
इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥ २८

— b) K3 Dc D5 मानवः (for पूरुषः). Ś1 K1 D2. 3 प्राप्नोत्यनयपूरुषः; T1 फलमाप्नोति पू°. — c) K3 हठादिति (for हठे°). K3 D2 मन्येत (for मन्यन्ते). — d) T1 G2. 4 M1 तु (for हि).

**15** G1 om. 15. — a) S (G1 om.) यश्चापि कश्चित्पुरुषो. — b) Ś1 K1. 2 B2. 3 Dn भज°; D2. 3 वद° (for लभ°). B1 दिष्टं नालभते क्षित (sic); T2 G2–4 दि(G4 द्द)ष्टादुपलभत्युत; M2 दिष्टं नाम लभेत वै.

**16** a) B3 M2 यत्त्वयं; T G (except G1) M1 यत्नवान् (for यत्स्वयं). K3 D5 कर्मणां; T2 G3 कर्मणः. — c) Ś1 K1–3 Dc Dn D2. 3. 5 (m as in text) प्रत्यक्षमेतल्लोकेषु. — d) K2. 3 Dn श्रुतं; T1 स्फुटं (for स्मृतम्).

**17** K2 om. $17^a$–$18^b$. — a) B Dc Dn D4. 6 यः (for ऽन्यः). — b) B (except B4) Dn D4. 6 T2 G (except G1) M2 अर्थं (for अर्थान्). K3 B Dn D3. 4. 6 T G (except G1) न कारणात्; M1 अकारणं.

**18** K2 om. $18^{ab}$ (cf. v.l. 17). — c) T2 G यद्यत् (G1 यदि); M2 यच्च (for यानि). — d) Ś1 K1–3 Dc Dn D2. 3. 5 पूर्वं (D2 सर्वं) कर्मणां.

**20** a) Ś1 B Dn2 यद्ययं; K1. 3 D2, 3 M2 यदयं; Dc D5 यत्स्वयं; T1 यद्धि यत्; G (except G3) M1 यद्धि यः (for यद्ध्ययं). D2 S (except G1 M2) कश्चित्. — c) S (except T1 M2) धात्रा (for धातृ-).

**21** b) B Dc Dn D4. 6 T2 G3 कर्मणि वर्तते; D5 कर्म प्रवर्तते (for कर्मणि कर्मणि). — d) K1 स (for [अ]यं).

**22** b) Ś1 K3 Dc D2. 5 °योज्य; G2. 4 °युक्तो; M2 °युज्य (for °योक्ता).

**23** a) Ś1 स न पार्थ; D5 मनसात्मा. — c) Ś1 K1. 2 B Dn D2–4. 6 वीर; K3 Dc D5 वीरः (for धीरः).

**24** c) Ś1 आगारं न°; K1. 3 D3. 6 आगारन°. M °दीनां (for °णां हि). — d) Ś1 K1 °हेतुका; K3 °दैविकी; D3 T1 G1 °हेतुकी.

**25** b) K2 °संततिः; D3 °मेव च (for °मन्ततः). T1 G (except G3) M1 काष्ठे वा पावकं ततः. — c) T G एवं (for धिया). — d) Ś1 K2 उपायाश्च; D2. 3 उपायांश्च. Ś1 K1–3 Dc D2. 3. 5 चार्थ-; B2 चापि; M1 तस्य (for चास्य).

**26** B2. 3 om. (hapl.) $26^{ab}$. — b) Ś1 K1–3 D2. 3. 5 सिद्धिस्तस्येह कारणैः; B1. 4 Dc Dn D4. 6 M2 कारणैस्तस्य सिद्धये; G1 कारणेष्वर्थसि°. — d) Ś1 K1. 3 B1 Dn D2–6 कर्मजाम्; Cnp कर्मणाम् (as in text).

**27** b) K2. 3 Dc D3. 5. 6 T1 G4 कर्ता (for कर्त्रा). K1 स्वनिष्ठितं; K2 त्वनिष्ठितं; K3 Dn D4. 5 स्वनुष्ठितं; D3 M2 सुनिष्ठितं (for विनि°). Ś1 कर्त्रा साधुष्वनुष्ठितं; D2 कर्ता साधुष्वनु(धि)ष्ठितं. — c) Ś1 त्वाकुशलेनेति; K2 तु कु°; T2 G M1 चाकु°. T1 इदं चाकुलतां नेति.

कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ २९
सर्वमेव हठेनैके दिष्टेनैके वदन्त्युत ।
पुरुषप्रयत्नजं केचित्त्रैधमेतन्निरुच्यते ॥ ३०
न चैवैतावता कार्यं मन्यन्त इति चापरे ।
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः ।
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ॥ ३१
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मतः ।
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ।
कुशलाः प्रतिजानन्ति ये तत्त्वविदुषो जनाः ॥ ३२
तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥ ३३
यं यमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तत्सफलमेव स्याद्यदि न स्यात्पुराकृतम् ॥ ३४
त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।
तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ३५
कर्तव्यं त्वेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः ॥ ३६
कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर ।
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥ ३७
असंभवे त्वस्य हेतुः प्रायश्चित्तं तु लक्ष्यते ।
कृते कर्मणि राजेन्द्र तथानृण्यमवाप्यते ॥ ३८

C. 3. 1242
B. 3. 32. 41
K. 3. 32. 41

---

**29** D2 om. $29^{ab}$ (along with 28). — $^{a}$) Ś1 ह्येव; K3 S (except M2) चैव (for एव). — $^{c}$) G2. 4 असिद्ध्यां. — $^{d}$) Ś1 K1 कर्मसिद्धौ; B1. 2. 4 Dn T2 G3 कर्मनाशात्; B3 Dc D4. 6 कर्ता नासीत्; D2 कर्तृनाशः.

**30** $^{a}$) S एतद् (for एव). — $^{b}$) K2 B Dn D4. 6 दैवे° (for दिष्टे°). G2. 4 भवंति (for वदन्ति). K2 पुनः (for उत). — $^{c}$) Hypermetric! K2 पौरुषः; B2 Dn D5 G4 पुंसः (for पुरुष-). B1 प्रभूतं (for प्रयत्नजं). K2 B Dc Dn3 D4. 5 किंचित् (for के°). Ś1 K1 पौ(Ś1 पु)रुषं यत्नजं विद्धि (Ś1 किंचित्). — $^{d}$) K2 corrupt. K3 न चैवेतद्; D5 S दैवमेतद् (T G3 °मेव) (for त्रैधमेतन्). Ś1 निरुध्य-(*sup. lin.* च्य)ते; K3 D3 विकृष्यते; Dc D5 हि दृश्यते; S विशिष्यते (M2 प्रतीयते). D2 त्रेधा ह्येतद्विभज्यते.

**31** $^{a}$) D3 किंचित् (for कार्यं). Ś1 K1. 2 न चैवं (Ś1 चैनं; K2 च वै) तावता कार्यं; B D4. 6 न चैवैतानि कार्याणि (D4. 6 कर्माणि). — $^{b}$) Dc मंस्यंत (for मन्यन्त). D3 किंचिदेव स्वभावतः. — $^{c}$) K3 D2 तद् (for तु). Ś1 K1 अस्ति पूर्वमदृष्टं (K1 °ष्टे) तत्. — $^{d}$) K2 [अ]दृष्टं; K3 दृष्टं; T1 G1 M दैवात्; T2 G2–4 दैवं (for दिष्टं). K2 B1 D3. 5 दैवं; K3 चैतत्; S दिष्टं (for चैव). T1 G4 हठे; T2 G2. 3 हठं (for हठः). — $^{e}$) Ś1 [ऽ]पि; S वै (for हि). — $^{f}$) Ś1 D4. 6 दृष्टात् (for दिष्टात्). B1. 3. 4 Dc2 D5 चै(B4m दै)वार्थ-; B2 D4. 6 दैवाच्च; Dc1 सर्वार्थ-; G1 अन्नस्य (for चार्थस्य). T1 M1 संनिधिः; M2 संततिः.

**32** $32^{ab}$ = (var.) 3. 181. $32^{ab}$. — $^{b}$) Ś1 K1 चैव (for एव). Ś1 K1–3 Dc Dn D2. 3. 5 स्वभावतः; B D4. 6 M2 °कर्मभिः; T1 °कर्मणा; text as in T2 G M1. — $^{d}$) K1 T2 G3. 4 नैव; D3 नार्थ- (for नात्र). — $^{f}$) Ś1 K1 तत्वनिपुणा. K2 Dn D2. 3. 5 M1 ये वै (M1 च) तत्वविदो जनाः; B Dc D4. 6 एतद्धि (B2 D4. 6 °द्वै) विदुषो जनाः.

**34** $^{d}$) T1 G1. 2 M1 इदं (for यदि). S (except G3; T2 before corr.) किलासुखं (for पुराकृतम्).

**35** $^{a}$) K2 त्रिविधाम्; K3 त्रिधानाम्; D3 त्रिधाराम्; T1 अद्वाराम् (for त्रिद्वाराम्). — $^{b}$) D5 तां न (for नानु-). — $^{c}$) Ś1 M2 तु; D2. 3 वै (for च). — $^{d}$) Ś1 K1–3 B4 D2. 3 बालास् (B4 °लस्); B1–3 Dc D4. 5 M2 लोकस् (B3m अंधस्); Dn [ए]वात्मा(!) (for लोकास्). Cnp यथा लोकाः (as in text).

**36** $^{a}$) K2 D3 G1 चैव; Dn एव (!) (for त्वेव). D2 कर्तव्यं कर्म चैवेति. — $^{b}$) K1 एवं (for एष). D5 कर्मणामेव निश्चयः. — After $36^{ab}$, M1 ins.:

117* आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ।

— $^{c}$) K2 ह्यनीशो°; T2 G1 M1 ह्यनीहे°; G2. 4 M2 ह्यनर्थो°. — $^{d}$) S वर्ततेस्मासु संप्रति. — After 36, S (except G4) ins.:

118* तत्तु निःसंशयं न स्यात्त्वय्यकर्मण्यवस्थिते ।

**37** G4 om. $37^{a}$–$41^{b}$. — $^{a}$) T1 [ऽ]भि-; G1 [ऽ]पि (for हि). K3 [ए]ते; Dc D5 [ए]वं (for [ए]व). Ś1 भवंतोपि भवंत्येव; K1 कुर्वतोपि भवंतोपि; D2 कुरुते लभते सिद्धिं. — $^{b}$) K3 Dc D4. 6 M1 हि; T G2. 3 [ए]व (for [इ]ह). — $^{c}$) Ś1 K1 च (for तु). — $^{d}$) Ś1 K1. 3 D2 विंदंत्यलसाः.

**38** G4 om. 38 (cf. v.l. 37). — $^{a}$) K3 D5 असंभवस्. Ś1 यस्य हेतुः; K2 T1 G1 M तत्र हेतुः; K3 D5 त्वत्र हेतुः; B Dc त्व(B1 वा; Dc तु)हेतुः स्यात्; T2 G2. 3 तस्य हेतुः. — $^{b}$) K1 च (for तु). K2 लक्षति; K3 B Dc Dn D4–6 लक्षयेत्. — $^{c}$) Ś1 कृतकर्माणि; K1 कृत्वा कर्माणि; K2 कृते कर्माणि.

C. 3. 1243
B. 3. 32. 42
K. 3. 32. 42

अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ३९
अनर्थं संशयावस्थं वृण्वते मुक्तसंशयाः ।
धीरा नराः कर्मरता न तु निःसंशयं क्वचित् ॥ ४०
एकान्तेन ह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
न तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ४१
अथ वा सिद्धिरेव स्यान्महिमा तु तथैव ते ।
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥ ४२
अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुध्येत कृतकर्मा यथा फलम् ॥ ४३
पृथिवीं लाङ्गलेनैव भित्त्वा बीजं वपत्युत ।
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥ ४४
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्कृतं तत्सकलं मया ॥ ४५
तच्चेदफलमस्माकं नापराधोऽस्ति नः क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत् ॥ ४६
कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।
निर्वेदो नात्र गन्तव्यो द्वावेतौ ह्यस्य कर्मणः ।
सिद्धिर्वाप्यथ वासिद्धिरप्रवृत्तिरतोऽन्यथा ॥ ४७
बहूनां समवाये हि भावानां कर्म सिध्यति ।

— $^{d}$) B Dn D$_{4.6}$ अवाप्नुते.

**39** G$_4$ om. 39 (cf. v.l. 37). — $^{a}$) Ś$_1$ K$_1$ नाशयति; B (except B$_1$) D$_{4.6}$ लंघयति (for आविशति). Ś$_1$ एव; K$_{1.3}$ एवं (for एनं). — $^{d}$) Ś$_1$ K$_1$ एवं (for दक्षो). Ś$_1$ बुद्धिम्; K$_1$ पूतिम्; D$_6$ भूमिम् (for भूतिम्).

**40** G$_4$ om. 40 (cf. v.l. 37). — $^{a}$) K$_3$ D$_2$ अनर्थं संशयावस्था; Dn अनर्थाः संशयावस्थाः (!). — $^{b}$) Ś$_1$ K$_{1.3}$ Dc$_1$ D$_6$ शृण्वं(K$_{1.3}$ °ण्व)ते; B Dc$_2$ D$_4$ शृणुते; Dn सिध्यंते (!); D$_2$ G$_1$ M$_2$ वृणुते; D$_5$ शृणु मे; T$_1$ शृण्वंतो (for वृण्वते). K$_{1.3}$ Dc D$_{2.4.5}$ मुक्तसंशयः. T$_2$ G$_3$ गृणंत्यामुक्त°; G$_2$ गृह्णंत्यामुक्त°. — $^{c}$) K$_{2.3}$ T$_1$ वीरा (for धीरा). M$_1$ °कराः (for °रताः). — $^{d}$) K$_2$ B (except B$_3$) Dn D$_{2.4.6}$ ननु; G$_1$ न च (for न तु). Ś$_1$ K$_{1-3}$ Dn D$_{2.3}$ निःसंशयाः.

**41** G$_4$ om. 41$^{ab}$ (cf. v.l. 37). — $^{a}$) Ś$_1$ K$_1$ एकार्थेन; D$_4$ एकत्वेन. — $^{b}$) K$_1$ संप्रतं; B (except B$_1$) Dc D$_{4-6}$ T$_2$ G$_3$ M$_2$ संप्रति. — $^{c}$) K$_{2.3}$ B (except B$_4$) D (except D$_2$; D$_1$ missing) T$_2$ G$_3$ स (for the first न). Ś$_1$ K$_1$ D$_{2.3}$ निःसंशयो. Dc यः (for the second न). Ś$_1$ om. (hapl.) 41$^{d}$–42$^{a}$. — $^{d}$) K$_1$ महिमा ह्ययमेव ते (cf. 42$^{b}$).

**42** Ś$_1$ om. 42$^{a}$ (cf. v.l. 41). — $^{a}$) K$_2$ सिद्धयेव. — $^{b}$) Ś$_1$ K$_{2.3}$ Dc D$_{2.3}$ महिमानं; K$_1$ साभिमानं; B Dn D$_{4.6}$ T$_2$ G$_{1.3}$ अभिमानं; D$_5$ अभिमानात् (for महिमा तु). Ś$_1$ K$_3$ D$_3$ तमेव; K$_1$ B Dn D$_{2.4.6}$ T$_2$ G$_3$ तदेव; K$_2$ मयेव (for तथैव). Dc च (for ते).

**43** $^{c}$) K$_3$ D$_3$ युध्येत; T$_2$ G युज्येत (G$_1$ दुर्बुद्धे) (for बुध्येत). — $^{d}$) T$_1$ G$_{1.4}$ M$_1$ कथं कर्म; G$_2$ कृतं कर्म. G$_{2.4}$ M यथाबलं.

**44** $^{a}$) K$_2$ B Dn D$_{2-4.6}$ M$_2$ [इ]ह; K$_3$ Dc D$_5$ [इ]व (for [ए]व). — $^{b}$) S कृष्ट्वा (for भित्त्वा). T$_1$ बीजानि (for बीजं). K$_{1.3}$ वपंत्युत; K$_2$ च यत्पुनः; T$_1$ उपंत्युत. — $^{c}$) K$_1$ [ऽ]त्र; K$_2$ D$_2$ प्र-; T$_1$ G$_1$ M$_1$ स; T$_2$ G$_{2-4}$ स्म (for ऽथ). Ś$_1$ कार्षिक°; K$_1$ कर्षिक°. — $^{d}$) Ś$_1$ K$_2$ Dc$_2$ D$_{2.3}$ भावकः (Ś$_1$ *sup. lin.* कारणं as in text); K$_3$ पावकः; B (except B$_2$) साधकः; D$_5$ भावुकः; M$_2$ भावनः.

**45** B$_1$ om. 45$^{ab}$. — $^{a}$) Ś$_1$ °गृह्णीत. — $^{b}$) Ś$_1$ K$_1$ निरर्थो; K$_2$ D$_{2.3}$ निर्दोषस्; M$_2$ अनृणस् (for अनेनास्). Ś$_1$ K$_1$ ननु (for तत्र). Ś$_1$ K$_3$ कार्षकः; K$_1$ कार्षिकः. — $^{d}$) B$_1$ Dn$_3$ तत्कृतं (by transp.). B Dc Dn D$_{5.6}$ T$_2$ G$_3$ सफलं. T$_2$ G (except G$_1$) त्वया (for मया).

**46** $^{a}$) Ś$_1$ B Dc D$_6$ G$_2$ M$_1$ तच्चेदं फलम्. — $^{b}$) B Dn D$_{4.6}$ अप° (for नाप°). K$_1$ नरः; K$_2$ B D$_{4-6}$ [ऽ]स्ति न; Dn न मे (!) (for ऽस्ति नः). — $^{c}$) K$_3$ G$_4$ °वेक्ष्यैवं; B Dc D$_6$ °वेक्षेत.

**47** $^{a}$) Ś$_1$ नात्म-; Dn$_2$ नास्ति; D$_3$ G$_{1.2}$ M$_1$ नात्र (for नार्थ-). — $^{b}$) Ś$_1$ G$_4$ [इ]ह; K$_1$ B Dc D$_{4.6}$ T$_2$ G (except G$_4$) M$_1$ हि; D$_2$ च (for ह). — $^{c}$) K$_2$ नानु-; Dc नाव- (for नात्र). Ś$_1$ K$_1$ B Dn D$_{4.6}$ T$_2$ G$_{3.4}$ कर्तव्यो; K$_{2.3}$ D$_5$ मंतव्यो (for गन्तव्यो). — $^{d}$) Ś$_1$ K$_{2.3}$ D$_{2.3}$ G$_1$ M$_2$ अंतौ; Ś$_1$m K$_1$ B$_4$ D$_{4.6}$ अन्यौ; B$_{1.2}$(m as in text).$_3$ Dc अर्थौ (for एतौ). Ś$_1$m K$_1$ B$_{1.3.4}$ Dn D$_{4.6}$ ह्यत्र; B$_2$ तत्र; G$_1$ यस्य; M$_2$ अस्य (for ह्यस्य). Ś$_1$m K$_1$ B Dn D$_{4.6}$ कारणं (for कर्मणः). — $^{f}$) T$_2$ G (except G$_1$) न प्रवृत्तिर् (for अप्र°).

**48** $^{a}$) B$_{1.2}$ D$_5$ समवायो हि; D$_2$ हि समावाये. — $^{b}$) B (B$_2$m as in text) Dn D$_{4.6}$ कर्मसिद्धयः (B$_4$ °ये); D$_5$ °भिर्धृतिः. — $^{d}$) T$_1$ G$_4$ M$_1$ फल° (for भव°). K$_2$ Dn D$_{4-6}$ च (for वा). — $^{e}$) Ś$_1$ K$_{1-3}$ Dn D$_{2.3}$ हि न; B$_3$

गुणाभावे फलं न्यूनं भवत्यफलमेव वा ।
अनारम्भे तु न फलं न गुणो दृश्यतेऽच्युत ॥ ४८
देशकालावुपायांश्च मङ्गलं स्वस्ति वृद्धये ।
युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥ ४९
अप्रमत्तेन तत्कार्यमुपदेष्टा पराक्रमः ।
भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ॥ ५०
यं तु धीरोऽन्ववेक्षेत श्रेयांसं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ॥ ५१
व्यसनं वास्य काङ्क्षेत विनाशं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वापि किं पुनर्मर्त्यधर्मिणः ॥ ५२
उत्थानयुक्तः सततं परेषामन्तरैषणे ।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ५३
न चैवात्मावमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस्य भूतिर्भवति भारत ॥ ५४
एवंसंस्थितिका सिद्धिरियं लोकस्य भारत ।
चित्रा सिद्धिगतिः प्रोक्ता कालावस्थाविभागतः ॥ ५५
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सोऽस्मा *अर्थमिमं प्राह पित्रे मे भरतर्षभ ॥ ५६
नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मेऽग्राहयत्पुरा ।
तेषां सांकथ्यमश्रौषमहमेतत्तदा गृहे ॥ ५७
स मां राजन्कर्मवतीमागतामाह सान्त्वयन् ।
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ५८

C. 3. 1263
B. 3. 32. 62
K. 3. 32. 62

इति श्रीमहाभारते आरण्यकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

$T_2$ $G_3$ न तु (by transp.). — f) $Ś_1$ $K_{1-3}$ $B_3$ Dc Dn $D_{2.3.5}$ क्वचित्; $T_2$ $G_{1.3}$ M ह्युत; $G_2$ [ऽ]प्युत (for ऽच्युत).

**49** a) $K_1$ $D_4$ $G_1$ उपायं च; $K_3$ $T_1$ $G_2$ उपायाश्च. — b) $K_1$ S (except $M_2$) सिद्धये (for वृ°). — c) $K_3$ $D_4$ $G_1$ वीरो; $G_{2.4}$ वीतो (for धीरो). — d) $K_1$ $B_{2.3}$ $D_4$ यथोत्साहं; $B_{1.4}$ S यथायोगं (for °शक्ति).

**50** a) $K_2$ कर्तुमानेन (sic); $T_1$ $G_1$ M अभ्युपायेन; $T_2$ $G_{2-4}$ अप्युपायेन (for अप्रमत्तेन). — $D_2$ om. (hapl.) $50^{cd}$. — c) $B_1$ °योगेन; $M_2$ °योगे तु. — d) $Ś_1$ दृष्टम्; $K_1$ दृष्ट; $K_{2.3}$ $D_3$ दिष्टम्; B (except $B_1$) Dc $D_{5.6}$ $T_2$ $G_3$ सिद्धिर्; Dn $D_4$ दृश्यम् (for सर्व). $Ś_1$ पराक्रमं; $B_{2-4}$ Dc $D_{5.6}$ °क्रमे; $B_1$ °क्रमाः. $M_2$ सिध्यंत्येव पराक्रमाः.

**51** a) B (except $B_3$) Dc $D_5$ $G_1$ यस्तु; Dn यत्र; $D_4$ $T_1$ यत्तु; $M_1$ येन (for यं तु). $K_2$ $D_2$ $T_1$ $G_1$ वीरो; Dn धीमान् (!) (for धीरो). $K_2$ ह्यवे°; Dn अवे° (!) (for ऽन्ववे°). — b) $B_1$ श्रेयान्स (for श्रेयांसं). — c) $M_2$ स्वल्पेप्यर्थं (for साम्नैवार्थं). $K_2$ तथा (for ततो). — d) $Ś_1$ $K_{1.2}$ कर्मणास्मै; $K_3$ कर्म चास्मिन्; $D_3$ कर्म नास्मै; $T_2$ G कर्म वास्मै ($G_4$ वा सं-).

**52** a) $Ś_1$ $K_1$ $D_2$ नाप्यवेक्षेत; $K_2$ वाथ व्यक्तंत (sic); $K_3$ कस्य लिप्सेत; B (except $B_3$) Dc $D_4$ चास्य कांक्षेत; $D_3$ चास्य वेक्षेत; $D_5$ नास्य वीक्षेत; $T_1$ $G_{2.4}$ नाभिकांक्षेत; $G_1$ M वाभिकां°. — b) $Ś_1$ $D_{2.3}$ निधनं वा; $K_1$ न निपक्तं; $K_2$ निवासं वा; Dn विवासं वा (!).

**53** b) $K_3$ अंतरेक्षणे; Dc $D_2$ अंतरेषणे; $D_3$ अंतरैषणः; $D_5$ मंत्ररक्षणे; S अंतरेक्षणः. — c) $K_1$ ततः (for नरः). — d) $Dc_1$ $D_2$ परमात्मन. $Ś_1$ वा (for च). $K_1$ परेषामात्मनस्तथा.

**54** a) $K_2$ $Dn_2$. $n_3$ त्वै° (for चै°). $K_1$ $D_5$ न (for [अ]व-). — d) $K_2$ B Dn $D_{4.6}$ $T_2$ (by corr.) $G_3$ शोभना (for भारत).

**55** $Ś_1$ om. (hapl.) $55^{ab}$. — a) $K_1$ तत्र (for एवं). $K_1$ सिद्धिगतिः; $K_3$ सांसारिका; $B_2$ संस्थितिजा; $B_3$ Dc $D_3$ सांस्थितिका; $D_2$ हि संस्थिका; S (except $M_2$) सुसंस्थिता; Cnp सांसिद्धिकी (for -संस्थितिका). — b) S पांडव ($M_2$ सत्तम) (for भारत). — c) $Ś_1$ $K_{2.3}$ Dn $D_3$ तत्र (for चित्रा). $K_1$ B $D_{4.6}$ चित्रावस्था; $M_2$ विचित्रा हि (for चित्रा सिद्धि-). $Ś_1$ $K_2$ Dn $G_1$ सिद्धिर्गतिः. — d) $K_3$ $Dc_2$ S °भागशः.

**56** In $D_3$, the portion of the text from $56^b$ up to 3. 34. $23^{ab}$ is lost on a missing fol. — b) $Ś_1$ $K_1$ धारयामास; Dc चाल°; $T_2$ G (except $G_1$) वर°. B $D_{4.6}$ वै गृहे (for पण्डितम्). — c) $Ś_1$ सोस्मायाहमिदं; $K_1$ सोस्मायार्थमिमं; $K_2$ B Dc Dn $D_{4-6}$ सोपि सर्वमिमां; $K_3$ विस्मायर्थमिमं; $D_2$ सोस्मयार्थमिति; T G सर्वं चार्थमिदं ($T_1$ $G_1$ °मं); $M_1$ स स्म चार्थमिमं; $M_2$ सोस्माचार्थमिदं.

**57** $D_3$ missing (cf. v.l. 56). — c) $K_2$ Dn सकाशाद्; $K_3$ संकथाम्; $B_{1.2}$ $D_4$ संकथ्यम्; S (except $T_2$ $G_3$) संकथम् (for सांकथ्यम्). — d) $K_2$ $B_1$ Dn एतां (for एतत्). $B_2$ पुरा (for तदा).

**58** $D_3$ missing (cf. v.l. 56). — a) $T_1$ G (except $G_3$) मा (for मां). — d) $T_1$ एव (for अङ्के).

# ३४

3. 1264
3. 33. 1
3. 33. 1

वैशंपायन उवाच ।
याज्ञसेन्या वचः श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निःश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् ॥ १
राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ २
नैव धर्मेण तद्राज्यं नार्जवेन न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन नः ॥ ३
गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।
आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥ ४
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।
अर्थमुत्सृज्य किं राजन्दुर्गेषु परितप्यसे ॥ ५
भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ६
कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ७
भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ८
कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतः शास्त्रे नियम्य भरतर्षभ ॥ ९
यद्वयं न तदैवैतान्धार्तराष्ट्रान्निहन्महि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥ १०
अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।

Colophon om. in K$_3$. K$_4$ D$_{1.3}$ missing. — *Major parvan:* Ś$_1$ K$_1$ Dn$_2$ T G$_{2-4}$ आरण्य. — *Sub-parvan:* B$_4$ D$_5$ (both om. sub-parvan name) mention only द्वैतवन. — *Adhy. name:* K$_2$ B$_4$ Dc Dn D$_{4.6}$ द्रौपदीवाक्यं; D$_2$ कर्मप्रशंसा; T$_2$ G$_{1.3}$ M$_1$ द्रौपदीमतोपन्यासः. — *Adhy. no.* (figures, words or both): Dn S 32. — *Śloka no.:* Dn 62.

## 34

☞ This adhy. is missing in K$_4$ D$_1$ (cf. v.l. 3. 1. 1; 22. 30); the MSS. are mostly ignored here. 1–23$^{ab}$ is missing in D$_3$ (cf. v.l. 3. 33. 56); the MS. is ignored up to the end of the lacuna.

**1** $^{b}$) Ś$_1$ K$_{1.3}$ Dc D$_{2.5}$ महामनाः; B$_{1.3}$ Dn D$_{4.6}$ ह्यमर्षणः (for ऽत्यमर्षणः). — $^{d}$) D$_2$ वचनम् (for राजानम्). M$_2$ राजानमिदमब्रवीत्.

**2** $^{a}$) T$_2$ G$_{2-4}$ राजन्स्व(G$_{2.4}$ °न्सत्)पदवीं. — $^{b}$) T$_2$ G$_4$ भज (for व्रज). — $^{c}$) Dc D$_5$ धर्मार्थकामहीनानां.

**3** $^{b}$) A few MSS. नार्जवेण. Dc न तेजसा; G$_4$ तथौजसा (for न चौजसा). — $^{c}$) K$_1$ (? gloss) °मायाम् (for °कूटम्). — $^{d}$) Ś$_1$ D$_5$ कृतं (for हृतं). K$_2$ B Dn D$_{4.6}$ M$_2$ वै; Dc D$_5$ मे; D$_2$ च; T$_2$ G (except G$_1$) तत् (for नः).

**4** $^{d}$) D$_5$ तत्र; G (except G$_3$) M$_1$ महद् (for तद्वद्).

**5** $^{a}$) K$_3$ धर्मेण स प्रति°. — $^{b}$) T$_2$ G$_{2.3}$ प्रभावाद्; M$_1$ प्रभावं. — $^{c}$) S (except M$_2$) अर्थान् (for अर्थम्). — $^{d}$) K$_2$ B Dn D$_{4.6}$ दुःखेषु; T G दुःखेन (for दुर्गेषु).

**6** $^{a}$) N (K$_4$ D$_{1.3}$ missing) [ऽ]नवधानेन. — $^{d}$) K$_{2.3}$ D$_2$ G$_4$ °धन्विना.

**8** $^{a}$) K$_1$ B$_1$ D$_{2.5}$ T G$_{2.3}$ M$_1$ एव (for एवं). — $^{b}$) K$_3$ (marg. *sec. m.*) प्राप्तं (for महद्). — $^{c}$) K$_1$ B$_1$ D$_2$ S (except G$_1$ M$_2$) धर्मकाम-; K$_3$ कर्मकाम्य-; B$_2$ धर्मकाम्ये; B$_3$ धर्मकार्ये. K$_2$ om. from तस्य up to यद्वयं न (in 10$^{a}$). D$_2$ -प्रदीपस्य; G$_4$ -प्रपन्नस्य; M$_2$ -परीतस्य (for -प्रतीतस्य). ❀ Cn: धर्मकाम्याप्रतीतस्य इति पाठे धर्मेच्छायां विश्वस्तस्य। ❀

**9** K$_2$ om. 9 (cf. v.l. 8). — $^{a}$) Ś$_1$ B Dn D$_{4-6}$ कर्ष°; K$_1$ हर्षयंतः (for कर्श°). Ś$_1$ Dc$_1$ D$_2$ स्म; K$_3$ Dc$_2$ स-; B$_{1.3}$ T$_2$ G M च; D$_5$ सु- (for स्व-). T$_1$ कथयामास मि°. — $^{b}$) G$_{2.4}$ न जयामः (for नन्दयामः). Dc D$_2$ G$_2$ स्म; D$_5$ स्व- (for च). K$_1$ बांध° (for शात्र°). — $^{c}$) B$_{2.4}$ Dn D$_4$ भवतां; T$_1$ अभवः (for भवतः). K$_3$ B Dc Dn D$_{4-6}$ T$_2$ G$_3$ शास्त्रैर्.

**10** $^{a}$) K$_2$ om. यद्वयं न (cf. v.l. 8). K$_1$ न यद्वयं (by transp.). Ś$_1$ तु; K$_3$ Dc D$_2$ S (except T$_2$ G$_3$) हि (for न). Dc तदेव (for तदैव). K$_{1.3}$ D$_5$ S (except T$_2$ G$_3$) एनान् (for एतान्). — $^{b}$) D$_2$ G$_1$ न (for नि-). D$_4$ G$_1$ हन्मि हि. — $^{c}$) K$_3$ D$_2$ S (except T$_1$) आस्थाय (for आदा°).

अवीराचरितां राजन्बलस्थैर्निषेविताम् ॥ ११
यां न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृञ्जयः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥ १२
भवान्धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् ॥ १३
दुर्मनुष्या हि निर्वेदमफलं सर्वघातिनम् ।
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् ॥ १४
स भवान्दृष्टिमाञ्शक्तः पश्यन्नात्मनि पौरुषम् ।
आनृशंस्यपरो राजन्नानर्थमवबुध्यसे ॥ १५
अस्मानमी धार्तराष्ट्राः क्षममाणानलं सतः ।
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ १६
तत्र चेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।
सर्वशो हि वधः श्रेयान्प्रेत्य लोकाँल्लभेमहि ॥ १७
अथ वा वयमेवैतान्निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥ १८
सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥ १९
आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे ।
अन्यैरपहृते राज्ये प्रशंसैव न गर्हणा ॥ २०
कर्शनार्थो हि यो धर्मो मित्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन्न स धर्मः कुधर्म तत् ॥ २१
सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम् ।
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ २२
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डितः ।

C. 3. 1286
B. 3. 33. 23
K. 3. 33. 23

---

**11** a) K3 Dc D5 M2 अथेमाम्; M1 अंगेमाम् (for अथैनाम्). — c) K2 B Dc Dn D4. 6 दुर्बला°; G1 M2 अधीरा° (for अवीरा°).

**12** b) Ś1 K1 Dc2 D2 संजयः; K2. 3 B Dc1 Dn D4. 5 T1 G1. 2 M2 सृंजयाः. — c) T2 G (except G1) अपि (for अभि-).

**13** a) Ś1 K1 भजन् (for भवान्). — b) T2 G (except G1) वृत्ति- (for व्रत-). Ś1 K1. 3 B D2. 4–6 कर्षितः (B4 -कालतः) (for -कर्शितः). — c) T2 G3 राजा (for राजन्). — d) T1 पापजीविकां; G2. 4 क्लीबजीवितां. — After 13, D2 ins.:

119* अशक्यमिति वा कश्चित्क्षात्रं नैव स्मरिष्यसि ।;

while T1 M2 ins.:

120* दुर्मनुष्या हि निर्वेदादापन्नाः क्लीबजीविकाम् ।

[Prior half = (var.) 14a; posterior half = (var.) 13d. T1 दुर्मनुष्यो, and आपन्नः.]

**14** Ś1 om. 14. — a) K3 Dc2 D2. 5 दुर्मनुष्यो. — b) K1 B (except B1) D6 सर्वघातकं; K2 Dn D4 स्वार्थघातकं; K3 D5 G1 सर्वघातिनां. — After 14ab, B2. 3 ins.:

121* प्रतिपन्ना विषीदन्ति पङ्के गौरिव दुर्बला ।

B3 cont.:

122* यदस्मान्सर्वकार्येषु समर्था धृतराष्ट्रजाः ।

— c) K1. 3 Dc D2. 5 T1 G1 अशक्तः. Dc स्वयम्; D5 प्रियम् (for श्रियम्). — d) K3 Dc D2. 5 कुरुते.

**15** a) Dc D5 तुष्टिं° (for दृष्टिं°). — b) K2 B (B3m as in text) Dn D2. 4. 6 T2 G (except G1) M2 अस्मासु (for आत्मनि). — d) S (except G1) आत्मार्थम्. T2 G (except G1) नाव° (for अव°).

**16** ab) S (except M1) ह्यमी (for अमी), and S (except M2) अहिंसतः (for अलं सतः). — c) Ś1 K1 इह; K2. 3 D2 इति; B Dc Dn D4–6 M1 इव (for एव). — d) K3 नो महत्तप (for नाहवे वधः).

**17** c) K1 S सर्वधा (K1 T1 M1 °था; M2 °तो) (for सर्वशो). K3 D5 S [ऽ]पि (for हि).

**18** a) T G एतान्हि (for एवैतान्).

**19** a) K1 सर्वतः; G2 सर्वधा. B3 T2 G3. 4 एवं (for एतन्). — K2 om. 19c–20b; K3 om. (hapl.) 19cd. — d) Ś1 °जिहीर्षतां; D2 °जिगीषतां.

**20** K2 om. 20ab (cf. v.l. 19). — b) Ś1 K1 विचित्रे; S (except M2) जीविते (for विदिते). K3 T1 कृत°; B Dc D4 T2 G3 नृप° (B2 कार्य°) (for कृत्य°). — c) Ś1 K1. 2 B Dc Dn D4–6 G अपि (for अप-).

**21** a) Ś1 K1 कर्मणोर्थो; K2 B Dc Dn D4–6 कर्षणार्थो; D2 G1 कर्शनार्थं. — b) G1 M1 विप्राणाम् (for मित्राणाम्). — c) Dc न स धर्मः स्मृतो नूनं. — d) Dn2 (by transp.) धर्मः स; D2 च धर्मः. B1. 3 कुधर्मतः; D5 S (except G1) कुवर्त्म तत्. K3 स धर्मः कुरुवर्त्म तत्; Dc एतद्राजन्नधर्मवत्.

**22** Dn2 om. 22. — a) B3 M2 सर्वदा. — b) T G (except G4) M1 धन°; M2 कर्म° (for धर्म°). — c) Ś1 K3 B3 जहीतस्; K1 जहीमस्; K2 B2 Dn1 D4. 6 त्यजतस्; M1 जुह्वतस् (for जहतस्). K1 तं हि; B1 तत्र; T1 तौ तु (for तात). Ś1 K1 B2 D2 कामार्थौ. — d) Ś1 K1 सुखदुःखे (by transp.).

C. 3. 1286
B. 3. 33. 23
K. 3. 33. 23

न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ २३
यस्य चार्थार्थमेवार्थः स च नार्थस्य कोविदः ।
रक्षते भृतकोऽरण्यं यथा स्यात्तादृगेव सः ॥ २४
अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ २५
सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥ २६
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ २७
तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥ २८
सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोनी तौ विद्धि मेघोदधी यथा ॥ २९
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसंकल्पः शरीरं नास्य विद्यते ॥ ३०
अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममृच्छति ।
अर्थमृच्छति कामार्थी न कामादन्यमृच्छति ॥ ३१
न हि कामेन कामोऽन्यः साध्यते फलमेव तत् ।
उपयोगात्फलस्येव काष्ठाद्भस्मेव पण्डितः ॥ ३२
इमाञ्शकुनिकान्राजन्हन्ति वैतंसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु च विहिंसताम् ॥ ३३
कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्यति ।

---

**23** $^{a}$) Ś1 [अ]नर्थज्ञः; D2 T G2. 3 M धर्मार्थः. — $^{c}$) Ś1 दुःख° (for धर्म°). — D3 resumes from धर्मस्य! — $^{d}$) Ś1 K1 अंतः- (for अन्धः).

**24** Ś1 om. 24. — $^{a}$) K2 B Dc Dn D4. 6 T2 G3 चात्मार्थम्; T1 सर्वार्थे; G1 चार्थस्य (with hiatus!); G2. 4 M2 चार्थार्थे; M1 चात्मार्थे (for चार्थार्थम्). — $^{c}$) K1 रक्षितो; K2. 3 Dn D2–4. 6 M2 रक्षेत. K1–3 Dn D2. 3 [ऽ]रण्ये; S पुण्यं (for ऽरण्यं). — $^{d}$) K2. 3 Dn D2–4 गास् (for स्यात्).

**25** K1 reads $25^{ab}$ after $26^{ab}$. — $^{a}$) T1 G (except G3) M1 तु (for हि). — $^{b}$) Ś1 D5 नेतरान्. D5 उप° (for अनु°). — Ś1 Dc1 D2 om. (hapl.) $25^{c}$–$26^{b}$; T1 om. $25^{c}$–$27^{b}$.

**26** Ś1 Dc1 D2 om. $26^{ab}$; T1 om. 26 (cf. v.l. 25). — $^{a}$) B (except B3) कामार्थे; T2 G3 कामार्थो. K1 D4. 6 यस्य धर्मश्च कामार्थे; Dn3 यश्च धर्मश्च कामार्थी. — After $26^{ab}$, K1 reads $25^{ab}$. — $^{d}$) K1 मित्रार्थाभ्यां स हीयते.

**27** T1 om. $27^{ab}$ (cf. v.l. 25). — $^{b}$) Dc कामार्थे. — $^{c}$) S क्रीडतो (for काम°). — After 27, G4 reads 29.

**28** D3 om. $28^{a}$–$30^{b}$. T2 G2–4 read 28 after 30. — $^{b}$) D5 T1 न प्रमाद्यति पंडितः. — $^{c}$) D2 G1. 2 M तौ हि; T1 °स्यो हि; T2 G3 स्वार्थ-; G4 तर्हि (for सा हि). — $^{d}$) S (except M2) यथारणिः (by transp.).

**29** D3 om. 29 (cf. v.l. 28). G4 reads 29 after 27. — $^{a}$) K1 स यथा; G2 सर्वधा. — $^{b}$) M2 धर्मश्चार्थस्य इष्यते. — $^{c}$) K3 Dc D2 G2 °योनी तौ (as in text); M2 अन्योन्ययोनी तौ राजन्; the rest °योनींतौ. — $^{d}$) B2 G2. 4 इव (for यथा).

**30** D3 om. $30^{ab}$ (cf. v.l. 28). — $^{b}$) G2 चोप° (for उप°). — $^{d}$) M2 नान्यदस्य वै (for नास्य विद्यते). K2. 3 B Dc Dn D4–6 G1 दृश्य° (for विद्य°). — After 30, T2 G2–4 read 28.

**31** $^{b}$) Ś1 K2. 3 B Dn D2. 4–6 इच्छति. Dc न धर्मं हंतुमिच्छति. — $^{c}$) N (K4 D1 missing) T2 G3 इच्छति (for ऋ°). T1 M1 धर्मार्थी; G2 कामार्थं. — $^{d}$) K1 D3 अन्यद्; T2 G (except G1) अर्थम् (for अन्यम्). N (K4 D1 missing) T2 G3 इच्छति. — After 31, T2 G (except G1) ins.:

123* कामार्थी चैव यः कामं न कामादन्यमृच्छति ।
[T2 G3 इच्छति (for ऋच्छति).]

**32** $^{a}$) Ś1 K1 न कामेन च (Ś1 न) (for न हि कामेन). — $^{b}$) B (except B1) T1 G2. 4 M1 सिध्यते. Dc सिध्यत्यफल°. — $^{c}$) B Dc D2. 4 उपभोगात्; G1 उपभोग-. Dc भवति (for फलस्य). Ś1 K1. 3 D2. 3 इह; K2 अथ; B Dc Dn D5 G4 M1 एव; M2 आहुः (for इव). — $^{d}$) D3 काष्ठ-; G2 कस्माद् (for काष्ठाद्). K1 भस्मीति (for भस्मेव). K3 इह; D2 M1 एव (for इव). Ś1 Dc पिंडितं; K1 पंडितैः; K3 पंडितान्; B1 विंदति; B2 पिंडितैः; B3. 4 पिंडितः; D2 जायते; D3 पंडितं; M2 पंडिताः.

**33** $^{a}$) Ś1 K3 Dc Dn D2–4. 6 T1 M1 शकुनकान्. — $^{c}$) T2 G (except G1) एष (for एतद्). — $^{d}$) K2 Dn D4–6 हि; D2 [ए]व (for च). Ś1 K1. 3 D3 वि(Ś1 K1 नि)हिंसतः; K2 Dn D5 °ता; D2 M °नं; T G °कः. B1 भूतेषु विहितं सतां.

**34** $^{a}$) Ś1 K1 कामलोभाच्च. — $^{b}$) K2 B Dc Dn D4–6

स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः ॥ ३४
व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।
प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ॥ ३५
तस्य नाशं विनाशं वा जरया मरणेन वा ।
अनर्थमिति मन्यन्ते सोऽयमस्मासु वर्तते ॥ ३६
इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विषये वर्तमानानां या प्रीतिरुपजायते ।
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ॥ ३७
एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च ।
न धर्मपर एव स्यान्न चार्थपरमो नरः ।
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ ३८
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ३९
कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ४०
धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥ ४१
मोक्षो वा परमं श्रेय एष राजन्सुखार्थिनाम् ।
प्राप्तिर्वा बुद्धिमास्थाय सोपायं कुरुनन्दन ॥ ४२
तद्वाशु क्रियतां राजन्प्राप्तिर्वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥ ४३
विदितश्चैव ते धर्मः सततं चरितश्च ते ।
जानते त्वयि शंसन्ति सुहृदः कर्मचोदनाम् ॥ ४४
दानं यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन्फलवान्प्रेत्य चेह च ॥ ४५
एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ॥ ४६
धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते । C. 3. 1311 B. 3. 33. 48 K. 3. 33. 48

---

प्रकृतिं (for प्रवृत्तिं). — $^{c}$) Ś1 स शत्रुः; K3 D2. 3 स शंक्यः; M1 न शंक्यः; M2 (*sup. lin.*) न वध्यः. — $^{d}$) G2 चैव हि (for चेह च).

**35** $^{a}$) K1 D2 T1 विदितं; D3 विहितं (for विदितो). — $^{b}$) Ś1 K1. 3 D2 अर्थं; Dn1 D5 नार्थो; T1 कामो; T2 G कामाद् (G1 अर्थे) (for अर्थो). — $^{c}$) Ś1 K3 D2. 3 प्रतिपत्तिं च (for प्रकृतिं चापि). T1 त्वं (for [अ]स्य). — $^{d}$) Ś1 K3 D2. 3. 5 विवृद्धिं (for विकृतिं). Ś1 K1 चैव; K3 B3 Dc D2. 3 चास्य (for चापि).

**36** $^{a}$) K2 B Dc Dn D4–6 नाशे विनाशे. Dc च (for वा). — After 36$^{ab}$, D2 ins.:

124* द्रव्यपरिग्रहायार्थो गरीयान्दुर्बलात्मनः।

— $^{c}$) K2 B Dc Dn D4–6 अनर्थ इति. B4 मंस्यंते.

**39** $^{a}$) K3 B2 D2. 3 S (except T2 G3) पूर्वे. — $^{b}$) S (except M2) एव च (for आचरेत्). — $^{c}$) K2 वयसि (for अहनि); cf. 40$^{c}$. S (except G1 M2) अहन्यहन्यनुचरेत्. — 39$^{d}$ = 40$^{d}$.

**40** Ś1 K1. 2 D2. 3 G1 om. (hapl.) 40. — $^{a}$) K3 B1 T2 G3 पूर्वे (for °र्वं). — 40$^{d}$ = 39$^{d}$.

**41** $^{a}$) K1 T2 G (except G1) om. the first च. — $^{b}$) M2 जयतां (for वद°). — $^{c}$) Ś1 धर्मज्ञान्; K1. 3 G1 कालज्ञ.

**42** $^{a}$) T G M1 मोक्षं (G1 °क्षे). Dc G1 परमश्रेयः. — $^{b}$) B (except B1) D4. 6 एषां (for एष). M2 नित्य (for राजन्). Ś1 K1. 3 D2. 3 T1 सुखार्थिनः; D5 शुभार्थिनां. — $^{c}$) K1. 2 B1 Dn D4. 6 प्राप्तिं; S (except M2) प्राप्तं. S (except M2) च (for वा). — $^{d}$) K1–3 B (except B1) Dc Dn D2. 4–6 सोपायां.

**43** $^{a}$) Dc तत्राशु; Dn1 तथाशु; D3 T G (except G4) M1 तदाशु; M2 तच्चाशु. K1 क्रियते. — $^{b}$) Dn2 D4 M2 प्राप्तिं वा. Ś1 K1 उपदिश्यतां (for अधि°). — $^{c}$) S (except M2) जीविका.

**44** $^{a}$) B2 Dn D4. 6 से (for ते). — $^{b}$) B1 G1. 2 चरितं च. Dn2. n3 D5 मे (for ते). Dc सततं चरिते शुभे. — M2 om. 44$^{c}$–46$^{b}$. — $^{c}$) K2 Dn D4. 5 T2 G3 जानतस्; B2 T1 M1 जानतस्. S (M2 om.) तु प्रशं° (for त्वयि शं°).

**45** M2 om. 45 (cf. v.l. 44). — $^{a}$) Ś1 K2 Dn D4. 6 यज्ञाः. — $^{b}$) Ś1 वेदपारंगमात्परं. — $^{c}$) K3 राज्ञः (for राजन्). — $^{d}$) K2 B (except B1) Dn D4. 6 G4 M1 बल° (for फल°). T2 G3 चेह वै; G1 चेह वा; G2 चैव वै; G4 चैव च.

**46** K1 om. (hapl.) 46–47; M2 om. 46$^{ab}$ (cf. v.l. 44). — $^{a}$) T2 G2. 3 स च (for एष). G4 स चार्थानर्थहीनेन. — D5 om. (hapl.) 46$^{c}$–47$^{d}$. — $^{c}$) B1. 4 सुखिनः; Dc आत्मनः (for अखिलाः). — $^{d}$) D2 गुणाः स्वरेषु संस्थिताः; S (except M2) गुणाः सीदंति निर्धने.

:. 3. 1311
:. 3. 33. 48
.. 3. 33. 48

धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥ ४७
न चार्थो भैक्षचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यः सदा राजन्केवलं धर्मबुद्धिना ॥ ४८
प्रतिषिद्धा हि ते याच्ञा यया सिध्यति वै द्विजः ।
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ॥ ४९
भैक्षचर्या न विहिता न च विट्शूद्रजीविका ।
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ॥ ५०
उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥ ५१
अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् ।
क्रूरकर्माभिजातोऽसि यस्मादुद्विजते जनः ॥ ५२
प्रजापालनसंभूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन्धात्रा धर्मः सनातनः ॥ ५३
तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि ।
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥ ५४
स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौन्तेय धुरमुद्वह धुर्यवत् ॥ ५५
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम् ॥ ५६
जिह्वां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।
निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ५७
भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।

---

**47** K1 D5 om. 47 (cf. v.l. 46). — b) Ś1 D3 T2 G (except G1) नान्यः; Dc नान्यं (for नान्यद्). Ś1 D3 तस्माद् (for धर्माद्).

**48** a) Some N MSS. भैक्ष्य°. — b) Ś1 K1. 3 Dc D2. 3. 5 M1 केनचित्. — c) Ś1 K1 जेतुं (for वेत्तुं). T1 तदा; T2 G (except G1) ततो; M1 तथा; M2 त्वया (for सदा).

**49** a) T1 हितो राज्ञे (for हि ते याच्ञा). — b) Ś1 यथा (for यया). D2. 6 S (except M2) सिध्यंति वै द्विजाः. — K3 om. 49cd. — c) D2. 3 ओजसैवार्थ°. — d) Ś1 K1 D3 भरतर्षभ.

**50** a) Some MSS. भैक्ष्यचर्या. — c) T2 G3 M2 क्षत्रियस्तु. — d) T1 M1 धर्मः स्यात्; T2 G3 धर्मस्य. Ś1 K1 परम् (for बलम्). D6 औजसं. — After 50, Ś1 K1. 3 B (except B3) Dc Dn D3–5 T2 (om. line 2) G2. 3 (om. line 2). 4 ins.:

125* स्वधर्मं प्रतिपद्यस्व जहि शत्रून्समागतान् ।
धार्तराष्ट्रवनं पार्थ मया पार्थेन नाशय ।

[(L. 1) T2 G3 सनातनान् (for समागतान्). — (L. 2) K3 °राष्ट्रे; D3 °राष्ट्रं (for °राष्ट्र-). Dc Dn1 -बलं (for -वनं). K1 राजन् (for पार्थ). G2. 4 धार्तराष्ट्राश्रणं प्राप्य पार्थ सर्वान्विनाशय.]

**51** T2 G3 om. (hapl.) 51a–52b. In D3, the portion of the text from °मेव up to 3. 37. 32b is lost on a missing fol. D2 om. 51ab. — a) K3 एवं; G1 एतद्; M2 एतं (for एव). B3 उदारा धर्मविद्वांसो. — b) K1 Dc D6 आहुर् (for प्राहुर्). K3 T1 G1. 2 M2 द्विजातयः (for मनीषिणः). — c) D2 स्वधर्मं (for उदारं).

**52** D3 missing (cf. v.l. 51). T2 G3 om. 52ab (cf. v.l. 51). — a) B1. 4 अनुगच्छस्व; T1 G1. 2. 4 M1 प्रतिपद्यस्व; M2 अवबुध्यस्व. — b) T1 G1. 2. 4 स्वार्थ- (for वेत्थ). Ś1 K1 धर्मं सनातनं. — c) G1 °कर्मा हि (for °कर्माभि-).

**53** D3 missing (cf. v.l. 51). — b) S (except M2) राज्ञां (for तव). — d) B1. 4 S (except G1) transp. धात्रा and धर्मः.

**54** D3 missing (cf. v.l. 51). — a) Ś1 K1 D2 अस्माद् (for तस्माद्). N (K4 D1. 3 missing) अपचितः (for विचलितः). — b) Ś1 K1 D2 हास्यो भविष्यसि. — c) B2 मनुष्येंद्र (for °ष्याणां). — d) B4 च्यवनं (for चलनं).

**55** D3 missing (cf. v.l. 51). — b) D2 त्यजेदं. — c) G2 धियम्; M2 धैर्यम् (for वीर्यम्). K1. 2 B2 Dn D4. 6 कौरव्य (for कौन्तेय).

**56** D3 missing (cf. v.l. 51). — c) Dc T G3. 4 [ऽ]प्य°; G2 [ऽ]भ्य°; M2 ह्य° (for व्य°).

**57** D3 missing (cf. v.l. 51). — a) D5 वाचं; S जिह्मं (M2 °ह्मः). B3 लूत्वा; D5 ऋद्धां; M1 कृत्वा; M2 छित्वा (for दत्त्वा). — b) D6 क्षुब्धानां. Ś1 K1. 3 Dc D2. 5 पापचेतसां; K2 लब्ध°; D6 (m as in text) क्षुब्ध°. ❀ Cn: शल्यकः श्वावित् क्षुद्रान्मधुमक्षिकाविशेषान् जिह्वां दत्त्वा बहिर्निःसार्य भक्षयति तद्वज्जिह्वां वाचं दत्त्वा शत्रून् जहि इति भावः । ❀ Similar explanations have been given by Arjunamiśra and Caturbhuja.

**58** D3 missing (cf. v.l. 51). — b) K3 सर्वतः.

निकृत्या निर्जिता देवैरसुराः पाण्डवर्षभ ॥ ५८
एवं बलवतः सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून्महाबाहो परां निकृतिमास्थितः ॥ ५९
न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्धरः ।
भविता वा पुमान्कश्चिन्मत्समो वा गदाधरः ॥ ६०
सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि ।
न प्रमाणेन नोत्साहात्सत्त्वस्थो भव पाण्डव ॥ ६१
सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ६२
अर्थत्यागो हि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ६३
अर्थेन तु समोऽनर्थो यत्र लभ्येत नोदयः ।
न तत्र विपणः कार्यः खरकण्डूयितं हि तत् ॥ ६४
एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितः ॥ ६५
अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डिताः ।
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ६६
सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि ।
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ॥ ६७
सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ६८
यथा राजन्प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।
अत्ति चैव तथैव त्वं सवितुः सदृशो भव ॥ ६९
एतद्ध्यपि तपो राजन्पुराणमिति नः श्रुतम् ।

C. 3. 1335
B. 3. 33. 72
K. 3. 33. 72

— [d]) Ś1 K1. 3 Dc D2. 5 पांडुनंदन; K2 Dn D4. 6 पार्थिवर्षभ.

**59** D3 missing (cf. v.l. 51). — [a]) Ś1 K1 Dc D2 बलवतां; K3 विलपतां. — [b]) M2 विशां (for मही-). Ś1 K1 इति वृद्धानुशासनं. — [d]) Ś1 K3 निर्वृतिम्; K1 निवृत्तिर् (for निकृतिम्). S (except M2) आस्थितान्.

**60** D3 missing (cf. v.l. 51). — Ś1 K1 om. (hapl.) $60^{bc}$. — [b]) B (except B2) Dn D4. 6 योधो (for योद्धा). Dc धनंजयः (for धनु°). — [c]) K3 D2 न; Dc [अ]न्यः (for वा). M2 नरः (for पुमान्). — [d]) K3 यो; D2 S (except M2) [ऽ]न्यो (for वा).

**61** D3 missing (cf. v.l. 51). — $61^{ab} = 67^{ab}$. — [b]) Ś1 K1. 3 D2 न (for सु-). — [c]) B1 चोत्साहात्. K3 B1m Dc D2. 5 Cnp अप्रमादी महो(Dc सदो-; D2 मदो)त्साही. — [d]) K3 शत्रून्प्रभव (for सत्त्वस्थो भव). S (except M2) पार्थिव (for पाण्डव).

**62** D3 missing (cf. v.l. 51). — [a]) K3 धर्मस्य (for अर्थस्य). — [b]) D2 धिगर्यं; G4 विततं (for वितथं). Dc यत्ततो; T2 G3 तु ततो; G2. 4 हि ततो (for यदतो). — [d]) B2m D5 ताल° (for वृक्ष°).

**63** D3 missing (cf. v.l. 51). — [a]) K1. 2 B Dc Dn D4–6 [ऽ]पि (for हि). — [b]) M2 भूयांसम् (for श्रेयांसम्). — Ś1 om. $63^{c}$–$64^{d}$. — [c]) K1. 3 D2 बीजोपपत्या कौं°.

**64** D3 missing (cf. v.l. 51). Ś1 K1 om. 64 (for Ś1 cf. v.l. 63). — [a]) T2 G3 सत्त्वेन (for अर्थेन). B2. 3 D2 T2 G3 समो नार्थो; T1 समानार्थो. — [b]) T1 G1 M यत्र लभ्यो धनोदयः; T2 G2–4 यत्र लब्धो महोदयः. — [c]) D2 [अ]न्वेषणा कार्या (for विपणः कार्यः). — [d]) K3 Dc D2 T2 G3. 4 M2 °कंडूयनं.

**65** D3 missing (cf. v.l. 51). — [a]) K3 B2 Dc Dn1 D4–6 T2 G (except G1) एतन् (for एव). — [c]) D2 T2 G (except G1) बृहद्धर्ममवाप्नोति. — [d]) Dn3 D4. 6 संबुद्ध. K2. 3 B Dc Dn D4–6 G1 निश्चितं; D2 निश्चयः.

**66** D3 missing (cf. v.l. 51). — [a]) K3 अमित्रेण च संयुक्तं. — [b]) Ś1 B1. 2 विंदंति; K2 भेदंति. — [c]) M1 °त्यक्तान् (for °त्यक्तं). — [d]) K2 Dn D4 युवानं; M1 दुर्बलान्; Cnp दुर्बलं (as in text). B4 D2. 5 कुर्वते. K2 B Dn D4. 6 G4 वशं.

**67** D3 missing (cf. v.l. 51). K3 om. 67. — $67^{ab} = 61^{ab}$. — [b]) Ś1 K1 D2 अबल° (for सुबल°). Ś1 असि (for अपि). — Ś1 K2 D2 om. (hapl.) $67^{c}$–$68^{b}$; K1 om. $67^{cd}$. — [c]) S मात्राभिः (for हो°).

**68** D3 missing (cf. v.l. 51). Ś1 K2 D2 om. $68^{ab}$ (cf. v.l. 67). — [a]) K3 D5 T G2–4 M सहितैर् (for संहतैर्). G1 सर्वो स हि मतैरेव (sic). — [c]) M1 जेतुं (for हन्तुं). — [d]) Dc D5 अपि (for इव).

**69** D3 missing (cf. v.l. 51). — [c]) S (except M2) हंति (for अत्ति). G4 तथैकस् (for तथैव). — [d]) K1. 2 B Dn D4. 6 सदृशः सवितुर् (by transp.); T2 G (except G1) सूर्यस्य सदृशो.

3. 1335
3. 33. 72
3. 33. 72

विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ॥ ७०
अपेयात्किल भाः सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ॥ ७१
भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च ।
कथायुक्ताः परिषदः पृथग्राजन्समागताः ॥ ७२
इदमभ्यधिकं राजन्ब्राह्मणा गुरवश्च ते ।
समेताः कथयन्तीह मुदिताः सत्यसंधताम् ॥ ७३
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किंचिदुक्तं ते न कामान्नार्थकारणात् ॥ ७४
यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥ ७५
ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः ।
मुच्यते सर्वपापेभ्यस्तमोभ्य इव चन्द्रमाः ॥ ७६
पौरजानपदाः सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालाः सहिताः शंसन्ति त्वां युधिष्ठिर ॥ ७७
श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥ ७८
इति निर्वचनं लोके चिरं चरति भारत ।
अपि चैतत्स्त्रियो बालाः स्वाध्यायमिव कुर्वते ॥ ७९
स भवान्रथमास्थाय सर्वोपकरणान्वितम् ।

---

**70** D3 missing (cf. v.l. 51). — a) K3 यथा (for एतद्). K2 Dn1. n2 D2 चापि; T1 वापि (for ह्यपि). K1 B Dc Dn3 D4–6 त्व(B4m D5 तु)वितथं; T2 G3 ह्यवितथं (for ह्यपि तपो). Cnp एतच्चावितथं. — b) Ś1 K1 निश्चितं (for नः श्रुतम्). — After 70, K2 B Dc2 Dn D5. 6 ins.:

126* न तथा तपसा राजँल्लोकान्प्राप्नोति क्षत्रियः।
यथा सृष्टेन युद्धेन विजयेनेतरेण वा।

**71** D3 missing (cf. v.l. 51). — b) Ś1 K3 D2 लक्ष्म (for लक्ष्मीश्च).

**72** D3 missing (cf. v.l. 51). — b) Dc ते (for च). — c) S कथयंत्यः (for कथा°). — d) T1 °हिताः; M2 °सते (for °गताः). T2 G राजन्प्रथममागताः.

**73** D3 missing (cf. v.l. 51). — a) S (except M2) इमाम् (for इदम्). D2. 5 अप्यधिकं; T2 G1. 3 M1 अभ्यधिकां. — b) Ś1 K1. 2 B Dc Dn D4–6 कुरवश्च (for गु°). — d) G3. 4 मृदुतां. M1 सत्यसंधतः; M2 °संधतान्.

**74** D3 missing (cf. v.l. 51). — a) Ś1 K1. 3 Dc2 D2 लोभा° (for मोहा°). — b) Ś1 K1. 3 Dc D2. 5 क्रोधा° (for लोभा°).

**75** D3 missing (cf. v.l. 51). — b) T1 किंचिद्; T2 G3 राज्यं; G1. 2. 4 M1 राजन् (for राजा). D2 T1 M1 भूतिम् (for भूमिम्). T2 G3 अवाप्नुयात्. — c) Ś1 K1 तत्सर्वं (by transp.). T G M1 नुदति तत् (for तन्नुदते). M2 पश्चान्नुदति तत्सर्वं.

**76** D3 missing (cf. v.l. 51). — a) Ś1 K1 D2 वित्तं; T1 राजन् (for ग्रामान्). — b) T1 ग्रामान् गाश्च सह°. — c) T1 G1. 2 M वीर (for सर्व-). — d) D5 मेघेभ्य; T2 G तमोभिर् (for तमोभ्य).

**77** D3 missing (cf. v.l. 51). — a) T2 G (except G1) राजन् (for सर्वे). — c) Ś1 सर्वाश्च; K2 Dn2. n3 D6 समृद्धा; B3 Dn1 D4 सवृद्धा (for सवृद्ध-). K2. 3 B2. 3 Dn D4–6 G4 M2 -बाल- (for -बालाः). B4 G2 सबालवृद्ध- (G2 °द्धाः)सहिताः; D2 सहिताः सबालवृद्धाः. — d) Ś1 K1 T1 M त्वा. — After 77, T2 G2–4 ins.:

127* धार्तराष्ट्रीं महाराज न शंसन्ति मतिं जनाः।

followed by stanzas 83–85.

**78** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — a) Ś1 K1 क्षीरमावृत्तं; B1. 3 Dc2 D5 क्षीरमासिक्तं; T2 G2–4 वा पयः सि(G2. 4 स)क्तं; G1 क्षीरमादत्तं.

**79** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — a) N (K4 D1. 3 missing) transp. निर्वचनं and लोके. — b) Ś1 पुरं; K2 B1. 2 Dn1. n3 D5 पुरश्च; K3 D2 चिराच्; B3. 4 Dc Dn2 D4. 6 पुनश्च (for चिरं). Ś1 K1 भवति (for चरति). — c) Ś1 चैतः; K1 G4 चेतः; K2 B Dc Dn D4. 6 T2 G3 चैताः; D2 चैव; D5 चेत्ताः (for चैतत्). — d) Ś1 K1 अपि; K2 B (except B3) Dn D4. 6 अधि- (for इव). — After 79, K1. 2 B Dc Dn D4–6 ins.:

128* इमामवस्थां च गते सहास्माभिररिंदम ।
हन्त नष्टाः स्म सर्वे वै भवतोपद्रवे सति ।,

which is followed by 130* in K1.

**80** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — b) Ś1 K1 B2 D2 °नि च (for °न्वितम्). S प्रति(T1 अनु)ज्ञाय तथेति नः. — c) D2 वि-; T G3 हि (for ऽभि-). — d) Ś1 K3 D2 -घातकं; T1 M1 -पादकः (for -पादकम्). K1 सर्वानर्थविघातकं; K2 B Dn D4–6 विप्रेभ्योर्थविभावकः (B2 °भाजकः; B3m °तारकः); Dc

त्वरमाणोऽभिनिर्यातु चिरमर्थोपपादकम् ॥ ८०
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ।
आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ॥ ८१
अमित्रांस्तेजसा मृद्नन्नसुरेभ्य इवारिहा ।
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ॥ ८२
न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ८३
न स वीरो न मातङ्गो न सदश्वोऽस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ८४
सृञ्जयैः सह कैकेयैर्वृष्णीनामृषभेण च ।
कथं स्विद्युधि कौन्तेय राज्यं न प्राप्नुयामहे ॥ ८५

इति श्रीमहाभारते आरण्यकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

# ३५

युधिष्ठिर उवाच ।
असंशयं भारत सत्यमेत-
द्यन्मा तुदन्वाक्यशल्यैः क्षिणोषि ।
न त्वा विगर्हे प्रतिकूलमेत-

C. 3. 1355
B. 3. 34. 2
K. 3. 34. 2

---

किल स्वार्थोपपत्तये.

**81** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — a) Dc D5 द्विजान्स्वस्ति (for द्विजश्रेष्ठान्). — b) D5 अद्यैव च गजाह्वयं. — d) Ś1 K1 सह (for दृढ-). — e) K1 Dc D2 वीर (for वीरैर्).

**82** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. B3 om. (hapl.) 82ab. — a) G2 तरसा (for तेजसा). — b) K1–3 B2 Dc Dn D2. 4. 6 T2 G3 असुरानिव (K3 सुरेभ्य इव) वृत्रहा. — cd) K2 Dn1. n2 श्रेय (for श्रियम्). Ś1 K3 M °राष्ट्रीं (for °राष्ट्रान्). — For 82cd, T2 G3 subst. धार्तराष्ट्रं महाराजन्न शंसंति तथा जनाः; and read 82cd (as in text) after 85.

**83** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — a) Dc2 D2 गांजीव°. — b) S (except G4 M2) गृध्र° (for गार्ध्र°). — c) Ś1 K1 वेगम् (for स्पर्शम्). — d) K1 न च (for मर्त्यः). — After 83, Dc ins.:

129* कः परैर्ह्रियमाणानामात्मभावेन संसहेत् ।

**84** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — b) Ś1 K1. 2 B Dc Dn D4. 6 T2 G3 च सोश्वो (for सदश्वो). Ś1 K3 Dc D2. 5 कश्चन (for भारत).

**85** D3 missing (cf. v.l. 51). For sequence of T2 G2–4 cf. v.l. 77. — a) Dc चैव (for सह). — b) Ś1 K1. 3 Dc D2. 5 प्रवरेण; B1. 2 Dn D4 T2 G3 वृषभेण; D6 भरतस्य (for ऋषभेण). — c) Ś1 K1 D5 कथंचिद्. T G विद्धि (for युधि). — d) K2. 3 B Dn D4. 6 M2 न राज्यं (by transp.). — K1 ins. after 128*: K2 B Dc Dn D4–6, after 85:

130* शत्रुहस्तगतां राजन्कथं स्विन्नाहरेर्महीम् ।
इह यत्नमुपाहृत्य बलेन महतान्वितः ।

Colophon. K4 D1. 3 missing. — *Major parvan:* Ś1 K1 Dn2 T G आरण्य (G3 अरण्य). — *Sub-parvan:* B4 D5 (both om. sub-parvan name) mention only द्वैतवन; likewise T2 G3 only द्वैतवननिवास. — *Adhy. name:* B4 Dn3 भीमवाक्यं; Dc भीमवाक्ये त्रिगुणप्रशंसा; D2 त्रिगणप्रशंसा; T2 G2. 3 M1 भीमस्वा(M1 °स्या)भिप्रायकथनं; G1 भीमसेनमतं. — *Adhy. no.* (figures, words or both): Dn S 33. — *Śloka no.:* Dn1. n3 89; Dn2 90.

## 35

☞ This adhy. is missing in K4 D1. 3 (cf. v.l. 3. 1. 1; 22. 30; 34. 51); the MSS. are mostly ignored here.

**1** Before 1, K1. 2 B Dc Dn D4–6 ins.:

131* वैशंपायन उवाच ।
स एवमुक्तस्तु महानुभावः
सत्यव्रतो भीमसेनेन राजा ।
अजातशत्रुस्तदनन्तरं वै
धैर्यान्वितो वाक्यमिदं बभाषे ।

— b) K2. 3 B D (D1. 3 missing) T2 G1. 3 मां (for

3. 1355
3. 34. 2
3. 34. 2

न्ममानयाद्धि व्यसनं व आगात् ॥ १
अहं ह्यक्षानन्वपद्यं जिहीर्षु-
न्राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मा शठः कितवः प्रत्यदेवी-
त्सुयोधनार्थं सुबलस्य पुत्रः ॥ २
महामायः शकुनिः पार्वतीयः
सदा सभायां प्रवपन्नक्षपूगान् ।
अमायिनं मायया प्रत्यदेवी-
त्ततोऽपश्यं वृजिनं भीमसेन ॥ ३
अक्षान्हि दृष्ट्वा शकुनेर्यथाव-
त्कामानुलोमानयुजो युजश्च ।
शक्यं नियन्तुमभविष्यदात्मा
मन्युस्तु हन्ति पुरुषस्य धैर्यम् ॥ ४
यन्तुं नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।
न ते वाचं भीमसेनाभ्यसूये
मन्ये तथा तद्भवितव्यमासीत् ॥ ५
स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन
यत्राभवच्छरणं द्रौपदी नः ॥ ६
त्वं चापि तद्वेत्थ धनंजयश्च
पुनर्द्यूतायागतानां सभां नः ।
यन्माब्रवीद्धृतराष्ट्रस्य पुत्र
एकग्लहार्थं भरतानां समक्षम् ॥ ७
वने समा द्वादश राजपुत्र
यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितं चरेथाः
सर्वैः सह भ्रातृभिश्छद्मगूढः ॥ ८
त्वां चेच्छ्रुत्वा तात तथा चरन्त-
मवभोत्स्यन्ते भारतानां चराः स्म ।
अन्यांश्चरेथास्तावतोऽब्दांस्ततस्त्वं

मा). T G °शरैः (for °शल्यैः). — $^{c}$) K$_{2.3}$ B D (D$_{1.3}$ missing) T$_2$ G त्वां (for त्वा). K$_{2.3}$ B$_{2.3}$ Dn D$_{4.6}$ एव (for एतन्). — $^{d}$) Ś$_1$ om. हि. K$_1$ वै; D$_5$ ते (for हि). B$_1$ D$_5$ समागात्; S (except M$_2$) समागाः (for व आगात्). D$_2$ ममानयाद्व्यसनं यत्तदागात्.

**2** $^{a}$) S अन्वपद्ये. D$_5$ जिहीर्षुः. — $^{b}$) Ś$_1$ D$_2$ T$_2$ G$_{3.4}$ M$_2$ °राष्ट्र- (for °राष्ट्रस्य). M$_2$ -पुत्रैः. — $^{c}$) K$_{1-3}$ B Dn D$_{2.4-6}$ T$_2$ G तन्मां; T$_1$ M तं मां.

**3** $^{b}$) Ś$_1$ सदा सदः; K$_1$ सभासदः; K$_{2.3m}$ B D (D$_{1.3}$ missing) सभामध्ये (K$_3$ orig. सत्यं सदा); M$_2$ स वै सर्वान् (for सदा सभायां). K$_3$ प्रक्षिपन्. — $^{c}$) N (K$_4$ D$_{1.3}$ missing) °जैषीत् (for °देवीत्).

**4** $^{a}$) K$_2$ B Dn D$_{4.6}$ G$_1$ च; T G$_{2-4}$ M तु (for हि). — $^{b}$) Ś$_1$ K$_1$ Dc कामानु(Ś$_1$ °न्न)लोभान्; K$_2$ Dn D$_4$ कामानुकूलान्; K$_3$ जयानुलोमान्. Ś$_1$ K$_1$ Dc नयुजो (for अयुजो). K$_3$ जये च; Dn$_3$ च तत्र (for युजश्च). — $^{c}$) D$_2$ S (except M$_2$) शक्यो (for शक्यं). B$_2$ S (except M$_2$) न भविष्यद्. M$_2$ एनान् (for आत्मा). — $^{d}$) K$_2$ B Dn D$_{4.6}$ हन्यात्; T$_2$ G$_3$ हंते (for हन्ति). K$_3$ Dc D$_5$ मन्युस्तु (D$_5$ °श्च) धैर्यं पुरुषस्य हंति.

**5** $^{a}$) Ś$_1$ K$_1$ D$_{2.5}$ मानुषेण; T$_1$ पूरुषेण. — $^{c}$) Ś$_1$ K$_{1.2}$ B Dn D$_{4-6}$ वाचो (for वाचं). — $^{d}$) Ś$_1$ D$_2$ भवितेति सत्यं (for भवितव्यमासीत्).

**6** $^{a}$) K$_3$ D$_2$ °राष्ट्रः सपुत्रो.

**7** $^{b}$) G$_2$ द्यूतं च (for द्यूताय). K$_2$ Dn T$_1$ आगतांस्तां (T$_1$ °स्तान्). D$_2$ सभायाँ; M$_1$ सभायां (for सभां नः). — $^{c}$) K$_3$ D (D$_{1.3}$ missing) G$_4$ यन्मां ब्रवीद्. Ś$_1$ K$_1$ °राष्ट्रः सपुत्र. — $^{d}$) Ś$_1$ M$_2$ एकग्लहाद्; K$_{1.3}$ D$_2$ °ग्लहार्थैं; T$_2$ G$_{2-4}$ एतद्ग्लहार्थं. Ś$_1$ K$_1$ T$_1$ G$_2$ M$_2$ भारतानां; D$_5$ भवतां (for भरतानां).

**8** $^{b}$) B M$_2$ विजितम्; D$_2$ विहितम् (for विदितम्). — $^{c}$) K$_3$ B (except B$_4$) Dc D$_5$ तथा° (for अथा°). Ś$_1$ विदितैः; K$_1$ अविदितः (om. च); K$_{2.3}$ Dn D$_{2.4}$ T$_1$ M चाविदितः. Ś$_1$ च तैरथ; M$_2$ चरेस्त्वं (for चरेथाः). — $^{d}$) T$_2$ G$_{2-4}$ सहैतया (for सर्वैः सह). Ś$_1$ छद्मरूढः; T$_1$ G$_{1.2}$ छद्मरूपः; T$_2$ G$_{3.4}$ M$_1$ छद्मरूपः.

**9** $^{a}$) T$_1$ तं चेन्मुक्त्वा; G$_1$ तं चेत्त्यक्त्वा; G$_{2.4}$ M$_2$ तं वै त्वां (M$_2$ त्वा); M$_1$ तं चेत्तु त्वां (for त्वां चेच्छ्रुत्वा). — $^{b}$) Ś$_1$ K$_1$ एवं भोत्स्यंते; K$_3$ अवज्ञास्यंति; D$_2$ अवगच्छंते; T$_1$ विबोध्यंते; T$_2$ G$_{2-4}$ बुध्येरन्वै; G$_1$ M$_2$ अवबोध्यंते; M$_1$ अनु-

# ५३

बृहदश्व उवाच।

सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ १
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन।
सर्वं तत्तव विश्रब्धं कुरु प्रणयमीश्वर ॥ २
हंसानां वचनं यत्तत्तन्मां दहति पार्थिव।
त्वत्कृते हि मया वीर राजानः संनिपातिताः ॥ ३
यदि चेद्भजमानां मां प्रत्याख्यास्यसि मानद।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ५
येषामहं लोककृतामीश्वराणां महात्मनाम्।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ६
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७
ततो बाष्पकलां वाचं दमयन्ती शुचिस्मिता।
प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ ८
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर।
येन दोषो न भविता तव राजन्कथंचन ॥ ९
त्वं चैव हि नरश्रेष्ठ देवाश्चाग्निपुरोगमाः।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ १०
ततोऽहं लोकपालानां संनिधौ त्वां नरेश्वर।

C. 3. 2180
B. 3. 56. 21
K. 3. 53. 21

---

Colophon. — *Major parvan :* Ś1 Dc1 T G आरण्य. — *Sub-parvan :* N (except Ś1 Dn2) T1 (om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name :* B4 दमयन्तीदर्शनं; D2 दमयंतीस्वयंवरे नलदमयन्तीसमागमे नलवाक्यं. — *Adhy. no.* (figures, words or both): Dc2 M1 53; Dn (Dn1 *sup. lin.*) 55; D1 56; T G M2 52 (as in text). — *Śloka no.:* Dn 25; D1 24.

## 53

**1** b) T G प्रहसंतीदमब्रवीत्. — c) Ś1 वर° (for प्रण°). D1 महाराज (for यथा°). D2 प्रणयं भावयंत्यस्मिन्.

**2** a) Dc D1. 5 transp. चैव and हि. K1 किंचित् (for चान्यत्). — b) T1 यच्चास्ति (for ममास्ति). K1 पार्थिव (for किंचन). — c) K2 B (except B1) Dn D4. 6 तत्सर्वं (by transp.); K3 सर्वंतस्; D1 सर्वं तु; D3 सर्वं नस्. K1 T1 G2. 4 M विस्रब्धं; G1 विश्रब्धः.

**3** a) Ś1 K4 B D2. 3 यत्तु; K3 D1. 5 M2 श्रुत्वा; Dn2 यच्च (for यत्तत्). — b) Ś1 D4 G1. 2 M मा (for मां). — c) K3 महाराज (for मया वीर). — d) K3. 4 D1–3. 5 संनिमंत्रिताः.

**4** a) Ś1 K3. 4 Dc D1–3. 5 वै; K1 मां; K2 B Dn D4. 6 त्वं (for चेद्). K1 Dc वै (for मां). — d) T1 G1 मृत्यु- (for तव).

**5** In G1 the portion of the text from st. 5 up to समाह्वानं in $8^b$ of adhy. 56 is lost on a missing fol. (190). — a) Ś1 K (except K2) Dc D1–3 M उक्ते तु (for उक्तस्तु). — b) K1 T2 G (G1 missing) प्रत्यभाषत (for प्रत्युवाच ह). — d) T G अर्हसि (for इच्छ°).

**6** G1 missing (cf. v.l. 5). Ś1 om. (hapl.) $6^a$–$7^b$. — a) S (except M1; G1 missing) °भृताम् (for °कृताम्). — d) D1 T1 M मनस्तेषु प्रवर्ततां.

**7** G1 missing (cf. v.l. 5). Ś1 om. $7^{ab}$ (cf. v.l. 6). — b) B3. 4 मन्युम् (for मृत्युम्). K1. 3 Dc D1. 2 इच्छति; B Dn1. n3 D6 अर्छ°; D5 अर्ह° (for ऋच्छ°). — c) Ś1 K (except K2) Dc D1–3. 5 पाहि (for त्रा°). — After 7, K1. 2 B D (except D1–3) ins. a passage given in App. I (No. 8).

**8** G1 missing (cf. v.l. 5). — a) K2. 3 B2 Dn D1. 3. 6 G2 बाष्पाकुलां; B1 वार्याकुलां; T1 बाष्पाकुला; T2 G3 बाष्पाकुलं. — c) Ś1 K Dn D1. 2. 4–6 प्रत्या°; D3 अपा° (for प्रव्या°).

**9** G1 missing (cf. v.l. 5). — a) K2 B2. 3 Dn D4. 6 उपायोयं (for अस्त्युपायो). Ś1 नलो (for मया). — c) B1 यथा (for येन).

**10** G1 missing (cf. v.l. 5). — a) B2 Dc त्वचैव (for त्वं चैव). — b) K (except K1) B D देवाश्चेंद्र (B1 देवाः साग्नि-; D3 देवा इंद्र)पुरो°; M2 लोकपालाश्च साग्निकाः (= 3. 51. $22^b$).

C. 3. 2180
B. 3. 56. 21
K. 3. 53. 21

वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ ११
एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ १२
तमपश्यंस्तथायान्तं लोकपालाः सहेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तत् ॥ १३
देवा ऊचुः ।
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ॥ १४
नल उवाच ।
भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् ॥ १५
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ १६
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्दृष्ट्वा सर्वा मां विबुधेश्वराः ॥ १७
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सुरसत्तमाः ॥ १८
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः ॥ १९
तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ २०
एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
मयाशेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

**11** G1 missing (cf. v.l. 5). D5 om. 11[ab]. — [a]) K1 M1 तत्राहं. — [b]) Ś1 त्वा (for त्वां). D1. 3. 6 नरेश्वरं. — [d]) T G (G1 missing) नैष (for नैवं).

**12** G1 missing (cf. v.l. 5). — [b]) Ś1 K (except K2) D1–3 महायशाः; B3 G4 विशां पतिः. — [c]) Ś1 नलस्; K1 जवात्; K3. 4 D1–3 ततस् (for पुनस्). — D4 om. 12[d]–13[a]. — [d]) Ś1 K (except K2) D1–3 सवासवाः; M व्यवस्थिताः (for समा°).

**13** G1 missing (cf. v.l. 5). D4 om. 13[a] (cf. v.l. 12). — [a]) T2 G3 तत्रा° (for तम°). M अथा° (for तथा°). — [b]) = 3. 54. 20[b]. Ś1 K2 B Dc Dn D1. 4. 6 महेश्वराः; K1 M नरेश्वरं (for सहे°). — [c]) B3. 4 M1 अथा°; T G (G1 missing) तथा° (for ततो°). — [d]) K3. 4 Dn D4. 6 M2 तं (for तत्).

**14** G1 missing (cf. v.l. 5). K2 B (except B2) Dn D4. 6 om. the ref. — [a]) Ś1 K1 वीर (for दृष्टा). Ś1 K1 दृष्टा; K3. 4 Dc D1–3 वीर (for राजन्). — [d]) K1 नल (for ऽनघ).

**15** G1 missing (cf. v.l. 5). — [a]) T2 G2. 3 त्वहम् (for अहम्). — [c]) D2. 3 M2 सुमहत्- (for सुमहा-). N (except Ś1 K1 D1) spells कक्षं.

**16** G1 missing (cf. v.l. 5). — [ab]) K4 D1 transp. तत्र and कश्चित्. — [c]) Ś1 K (except K2) Dc2 D1–3. 5 M विना (for ऋते).

**17** G1 missing (cf. v.l. 5). — [a]) Ś1 K (except K2) Dc D1–3. 5 तस्या (for चास्या). — [b]) D2. 3 om. च. Ś1 K1. 3 B1 अस्मि (for अपि). — [cd]) K2 B (except B1) Dn D4. 6 M transp. दृष्ट्वा and सर्वा.

**18** G1 missing (cf. v.l. 5). — [c]) T1 G2. 4 M1 मामेवागत°. — [d]) D1–3 M2 वृणोति. K2 B (except B1) Dn D4–6 सा सुरोत्तमाः.

**19** G1 missing (cf. v.l. 5). — [a]) K3 Dc2 मा (for मां). — [b]) K3 S (except M2; G1 missing) सुरसत्तमाः (for सहिताः सुराः); cf. 18[d]. — [c]) K2 B Dn D4. 6 M1 नरव्याघ्र (for °श्रेष्ठ).

**20** G1 missing (cf. v.l. 5). — [a]) Ś1 G4 M2 त्वा (for त्वां). — [b]) K1 नरेश्वर; Dc नृपोत्तम; D3 न संशयः (for नरो°). K2 B Dn D4. 6 वरयिष्यामि नैषध (B1 सत्तम). — [c]) K3 एव (for तव). D3 °भाग (for °बाहो). — [d]) K3. 4 (by transp.) न दोषो. K (except K1) D3 भवितेति हि; B2 D1 °तेति च; D5 °ता त्विह; T2 G3. 4 °ता तव.

**21** G1 missing (cf. v.l. 5). — [a]) T2 G (G1 missing) एवं; M1 एतद् (for एव). — [b]) K2 B1 Dn D4. 6 उपा° (for उदा°). — [c]) K1. 2 B Dn D4–6 मया शेषे; M अतः परं. — [d]) D3 भवंतु. M सुरसत्तमाः (for त्रिदशे°).

Colophon. G1 missing. B1 reads it in marg.

# ५४

बृहदश्व उवाच ।
अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ १
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते महारङ्गं नृपाः सिंहा इवाचलम् ॥ ३
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे सुमृष्टमणिकुण्डलाः ॥ ४
तां राजसमितिं पूर्णां नागैर्भोगवतीमिव ।
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ॥ ५
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ६
सुकेशान्तानि चारूणि सुनासानि शुभानि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ७
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ९
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिव ॥ १०
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।

C. 3. 2201
B. 3. 57. 11
K. 3. 54. 11

---

— *Major parvan:* Ś1 K1 B1 Dn2 T G2–4 आरण्य. — *Sub-parvan:* N (except Ś1) T G3 M1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* B4 नलदौत्यं; D2 दमयंतीस्वयंवरे नलदमयंतीवाक्ये विबुधान्प्रति नलप्रत्यागमनः. — *Adhy. no.* (figures, words or both): Dc2 M1 54; Dn (Dn1 *sup. lin.*) 56; D1 57; T G2–4 M2 53 (as in text). — *Śloka no.:* Dn 31; D1 21.

## 54

☞ This adhy. is missing in G1 (cf. v.l. 3. 53. 5); the MS. is mostly ignored here.

**1** a) D3 तु सं- (for शुभे). — b) Ś1 K4 D2 पुण्यक्षणे; T1 M पुण्यर्क्षगे (T1 °के). — d) K1. 4 राजन् (for राजा).

**2** a) K3 ते श्रुत्वा. K4 तु मही° (for पृथिवी°). D5 एतच्छ्रुत्वा मही°.

**3** a) K4 Dc D1–3 °रचितं. — b) D3 मणिरत्नविभूषितं. — cd) T2 G (G1 missing) तं (for ते). K3 तदा (for महा-). K2 Dn transp. महा- and नृपाः.

**4** d) = 4. 17. $19^{d}$; 65. $13^{b}$; 67. $29^{d}$. Cf. 1. 73. $17^{b}$. K2 B1 Dn D5 प्र-; T1 सं-; T2 G3 स- (for सु-).

**5** M1 om. 5. — a) K1. 2 B Dc Dn D4. 6 पुण्यां; D1. 3 यूनां (for पूर्णां). — b) K4 (by corr.) D1–3 यथा (for इव). — After $5^{ab}$, T2 G (G1 missing) ins.:

220* प्रविवेश नलो देवैः पुण्यश्लोको नराधिपः ।

— c) K3 सुपूर्णां; K2 Dn3 G2 संपूर्णं. B1 Dc D5 S (G1 missing; M1 om.) ऋ(B1 वृ)षभस्कंधैर्. — d) B3 सिंहैर् (for व्याघ्रैर्). — After 5, D1 ins.:

221* देवगन्धर्वपतयो ददृशुर्विस्मयान्विताः ।
पौरजानपदाश्चैव ये तत्रासन्समाहिताः ।

**6** a) B1 नृपाः सु- (for तत्र स्म). S (except M2; G1 missing) तेषां (for पीना). — b) B3 परिघोपमबाहवः. — c) K2 Dn2. n3 D4. 6 आकारवर्णसुश्लक्ष्णाः; B1 D1. 3 °वंतः सुश्लिष्टाः; Dn1 °वंतः सुश्लाघ्याः.

**7** b) Ś1 K1. 4 Dc D5 (before corr.) सुनसानि; M1 सुहा°. K2 B Dn D4. 5 (after corr.). 6 सुनासाक्षिभ्रुवाणि च. — c) B1 Dc दृश्यंते (for शोभन्ते).

**10** d) K2 B (except B1) D4–6 T2 (before corr.) इह; K4 अथ (for इव).

**11** T1 G4 om. $11^{ab}$. — a) Ś1 K1. 4 D1. 2 [अ]थ सा; D3 [अ]थ वै (for ततः). — b) B1 असौ; Dc D2 T2 G2. 3 M1 इव (for स्थितान्). K3. 4 B2 °कृति(B2 °कृती)स्थितान्. — d) Ś1 K (except K4) B1 Dn D1. 3. 5. 6 M2 नाभ्यजानन्; Dc1 नाज्ञासीच्च. T2 G2. 3 तथा; G4 तदा (for नृपम्). — After $11^{cd}$, S (G1 missing) ins.:

C. 3. 2201
B. 3. 57. 11
K. 3. 54. 11

संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ॥ ११
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भामिनी ।
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् ॥ १२
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ।
श्रुतानि देवलिङ्गानि चिन्तयामास भारत ॥ १३
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ॥ १४
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
शरणं प्रति देवानां प्राप्तकालममन्यत ॥ १५
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ १६
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ १७
वाचा च मनसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ १८
यथा देवैः स मे भर्ता विहितो निषधाधिपः ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ १९
स्वं चैव रूपं पुष्यन्तु लोकपालाः सहेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ २०
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ।
निश्चयं परमं तथ्यमनुरागं च नैषधे ॥ २१
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च भारत ।
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ॥ २२
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ॥ २३

---

222* निर्विशेषवयोवेषरूपाणां तत्र सा शुभा ।
— Ś1 om. (hapl.) $11^{e}$–$12^{d}$; K3 om. $11^{e}$–$12^{b}$. — $^{e}$) D1 पश्यते; D3 (corrupt) दर्शयन् (for ददृशे).

**12** Ś1 om. 12; K3 om. $12^{ab}$ (cf. v.l. 11). — $^{a}$) K1 तु; T2 G3 तं; G4 सा (for [अ]थ). K4 D1–3 सा तु (D1 सा तं; D2 सा च; D3 सैव) चिंतयती बुद्ध्या (cf. v.l. $13^{a}$). — D1 om. (hapl.) $12^{b}$–$13^{a}$. — $^{b}$) K2 B D (except D2. 3; D1 om.) भाविनी (B1 कामिनी); T2 G2. 3 M1 मानिनी. — $^{c}$) K2 B Dn D4. 6 M1 हि (B1 न) (for नु).

**13** D1 om. $13^{a}$ (cf. v.l. 12). — $^{a}$) Ś1 K (except K2) D2. 3 सैवं (Ś1 °व) चिंतयती बुद्ध्या (cf. v.l. $12^{a}$). — D5 om. $13^{cd}$. — $^{d}$) K2 B Dn D4. 6 M2 तर्कयामास; T2 G2. 3 गण°. Ś1 K (except K2) B1 D1–3 भामिनी; Dc भाविनी (cf. $12^{b}$).

**14** $^{b}$) D2. 3 स्थविरेषु. M2 वै (for मे).

**15** $^{a}$) S (except M2; G1 missing) एवं विचिंत्य (for सा विनि°). Ś1 K (except K2) D1–3 मनसा; T2 G3 विबुधा (for बहुधा). — $^{b}$) = 1. 57. $41^{b}$. Dn3 सा विचार्यं (for विचार्य च).

**17** $^{c}$) K1. 3 D3 सत्वेन (for सत्येन). — $^{d}$) Ś1 K1 D3 देवाः संप्रति संतु मे.

**18** Ś1 om. (hapl.) 18–19. — $^{a}$) = $16^{a}$. B D4. 6 वचसा (for वाचा च). K2 Dn मनसा वचसा चैव. — $^{b}$) K4 B1. 3 Dn1 S (except T1; G1 missing) नातिचरामि; D1 नान्यं वृणोमि. K1. 4 Dc D2. 3. 5 तं (for [अ]हं). — $18^{cd}$ = (var.) $19^{cd}$.

**19** Ś1 K3. 4 D1 om. (hapl.) 19 (for Ś1, cf. v.l. 18). — $19^{cd}$ = (var.) $18^{cd}$. — $^{c}$) T G2. 3 वै (for मे). B2 Dc M2 विबुधास् (for मे देवास्). D2 पतित्वे तेन सत्येन (= $17^{c}$). — $^{d}$) D2 विबुधाः (for तमेव). — After 19, K1. 2 B Dn D4–6 ins.:

223* यथेदं व्रतमारब्धं नलस्याराधने मया ।
[(L. 1) B1. 4 D5 आदिष्टं (for आरब्धं). D5 वरणे (for [आ]राधने).]
— 223* is followed by a *repetition* of $19^{cd}$!

**20** $^{a}$) Ś1 K1 B1 पश्यंतु; K2 B2–4 Dc Dn D2–4. 6 कुर्वंतु; K3 D1. 5 पुष्णंतु (for पुष्यन्तु). — $^{b}$) = 3. 53. $13^{b}$. K1. 2 B D (except D1–3) M2 महे° (for सहे°). — $^{c}$) Ś1 K4 D2. 5 G2. 4 अपि (for अभि-).

**21** $^{a}$) K4 D2. 3 तु (for तत्). — $^{b}$) K2 B1 Dn D4 प्रति- (for परि-). — $^{c}$) M2 च परं (for परमं). Ś1 K3. 4 D1–3 तस्या (for तथ्यम्). G2. 4 निश्चयं परमत्यर्थं.

**22** Dc D4. 5 om. $22^{ab}$. — $^{a}$) T1 मनोविशुद्धां. T2 G (G1 missing) भक्तिं च. D1 महाबुद्धिं च भक्तिं च. — $^{b}$) T2 G (G1 missing) बुद्धिं (for भक्तिं). K2 B Dn नैषधे (for भारत). — $^{d}$) Ś1 K (except K2) Dc D1–3. 5 समस्तं. The same MSS. (except D5) लिंगधारणं.

**23** $^{a}$) M2 विविधान् (for विबुधान्). M1 देवान् (for सर्वान्). — $^{b}$) K4 निःस्वेदान्. K3 स्तब्धचक्षुषः. — $^{c}$)

छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः ।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ २४
सा समीक्ष्य ततो देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण भारत ॥ २५
विलज्जमाना वस्त्रान्ते जग्राहायतलोचना ।
स्कन्धदेशेऽसृजच्चास्य स्रजं परमशोभनाम् ।
वरयामास चैवैनं पतित्वे वरवर्णिनी ॥ २६
ततो हा हेति सहसा शब्दो मुक्तो नराधिपैः ।
देवैर्महर्षिभिश्चैव साधु साध्विति भारत ।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥ २७

वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ २८
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ २९
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३०
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्र वाञ्छति नैषधः ॥ ३१
स्रजं चोत्तमगन्धाढ्यां सर्वे च मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ३२

C. 3. 2229
B. 3. 57. 39
K. 3. 54. 39

Dc1 दूषितस्रजोनुलिप्तांगान्; D1 दूषितस्त्रनुलिप्तांगान्; D3 दूषितास्रग्रजोधारान्; T1 corrupt; T2 (by corr.) G2–4 अम्लानस्रग्रजोहीनान् (T2 G3 °पेतान्).

**24** $^{ab}$) K3 छायान्वितो हि (for °द्वितीयो). T1 (corrupt) छाया सा तृतीयमाम्लानस्रग्; G2. 4 M1 छायाद्वितीय-(M1 °यं)म्लानस्रग्. D3 रजःस्वेदसमाहतेः; T1 G2 °समन्वितं. T2 G3 छायाद्वितीयमम्लानस्रग्रजःस्वेदसंयुतं. — $^{c}$) K3. 4 B4 D1–3 M2 भूमिस्थो; T1 भूमिष्ठं; T2 G (G1 missing) भूमिस्थं. S (except M2; G1 missing) नैषधं चैव. — $^{d}$) B1 सूचिते; S (G1 missing) °तं.

**25** T1 om. 25$^{a}$–26$^{d}$. — $^{a}$) K2 B Dn D4. 6 तु तान्; K3. 4 Dc D1–3. 5 T2 G तदा (for ततो). — $^{b}$) Dc D5 भाविनी; D2. 3 भामिनी; M1 नैषधं (for भारत). — Ś1 om. (hapl.) 25$^{cd}$. — $^{c}$) M1 वरयामास तं तत्र. — $^{d}$) K2 B (except B3) Dn D4. 6 पांडव; K4 D1 M2 पार्थिव (for भारत).

**26** T1 om. 26$^{abcd}$. — $^{a}$) K1 B4 वस्त्रांतं (!). — $^{c}$) T2 G (G1 missing) कंठ° (for स्कन्ध°). Ś1 K (except K2 D1–3 स्त्रजं (for [ऽ]सृजच्). K2 B D (except D1–3) तस्य (for चास्य). — $^{d}$) Ś1 K (except K2) D1. 3 [अ]सृजत् (for स्रजं). Ś1 D4 परमशोभना; D2 प्राक्षिपद्वरवर्णिनी. — $^{f}$) Ś1 K (except K2) Dc D1–3 धर्मवत्सला; D5 धर्मतः स्थिता; M2 धर्मसंस्थिता (for वर°).

**27** $^{a}$) B1 वचसा; S (except M2; G1 missing) संजज्ञे (for सहसा). — $^{b}$) K1. 2 B Dn D4–6 मुक्तः शब्दो (by transp.). Ś1 K (except K2) D1–3 जनाधिपैः; T1 M1 नरेतैः; T2 G (G1 missing) नरोत्तमैः. — $^{c}$) K2 B2. 4 Dn D4. 6 तत्र (for चैव). — $^{e}$) Ś1 K1 ईरितैः शब्दैः. — $^{f}$) D2 transp. नलं and नृपं. — After 27, K1. 2 B D (except D1–3) ins.:

224* दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ।
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ।
यत्त्वं भजसि कल्याणि पुमांसं देवसंनिधौ ।
तस्मान्मां विद्धि भर्तारमेतत्ते वचने रतम् ।
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते । [5]
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ।
दमयन्ती तथा वाग्भिरभिनन्द्य कृताञ्जलिः ।
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ।

[(L. 4) K1 एनं; K2 B1. 3 Dc D5 एवं; B2. 4 D4 एनं (for एतत्). — (L. 7) K2 दमयंति; Dn2 D4 °यंतीं.]

**29** $^{a}$) K1 दर्शनं प्रति यज्ञस्य. — $^{b}$) K4 मतिं (for गतिं). K3 स्थितिं (for शुभाम्).

**30** After 30$^{ab}$, K3 reads 31$^{cd}$. — 30$^{b}$ = 31$^{d}$. — $^{c}$) K1 (corrupt) तां लोकानात्मप्रभवांश्च; K3 D1. 2 S (G1 missing) लोकानात्मभवांश्चैव.

**31** $^{b}$) S (G1 missing) मनसः (for परमां). Ś1 K1 D1 गतिं (for स्थितिम्). — After 31$^{ab}$, Dc1 D1 ins.:

225* वरद्वयं ददौ तस्मै प्रीयमाणोऽर्कनन्दनः ।

— K3 reads 31$^{cd}$ after 30$^{ab}$. — 31$^{d}$ = 30$^{b}$.

**32** $^{a}$) M1 om. च. K2 B D (except D1. 4. 6) स्रजश्चोत्तमगंधाढ्याः. — $^{c}$) D5 एतान् (for एवं). D1. 3 [अ]स्मै (for [अ]स्य). — $^{d}$) K1 सर्वे ते (for देवास्ते). Ś1 K1. 4 Dc D1–3. 5 ययुः (for गताः). — After 32, S (except M2; G1 missing) ins.:

226* एतत्सर्वं नलोऽपश्यद्दमयन्ती च भारत ।
यथा स्वप्नं महाराज तथैव दद्युर्जनाः ।
ततः स्वयंवरं चक्रे भीमो राजातिमानुषम् ।

C. 3. 2230
B. 3. 57. 39
K. 3. 54. 43

पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।
दमयन्त्याः प्रमुदिताः प्रतिजग्मुर्यथागतम् ॥ ३३
अवाप्य नारीरत्नं तत्पुण्यश्लोकोऽपि पार्थिवः ।
रेमे सह तया राजा शच्येव बलवृत्रहा ॥ ३४
अतीव मुदितो राजा भ्राजमानोंऽशुमानिव ।
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ॥ ३५
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च क्रतुभिर्धीमान्बहुभिश्चाप्तदक्षिणैः ॥ ३६
पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ३७
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ३८

इति श्रीमहाभारते आरण्यकपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

# ५५

बृहदश्व उवाच ।
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।

---

समागतेषु सर्वेषु भूपालेषु विशां पते ।
दमयन्त्यपि तद् दृष्ट्वा राजमण्डलमृद्धिमत् । [5]
अन्वीक्ष्य नैषधं वव्रे भैमी धर्मेण भारत ।
[(L. 6) = var. 25$^{cd}$.]

**33** $^{ab}$) K2. 4 B Dc2 Dn D4. 6 [अ]स्य (for [अ]स्या). S (except M2; G1 missing) वृते च नैषधे भैम्या निवृत्ते च स्वयंवरे. — $^{c}$) K2 B Dn D4. 6 च मुदिताः; K3 ततः सर्वे (for प्रमु°). S (except M2; G1 missing) सर्वे एव महीपालाः. — $^{d}$) Ś1 K (except K2) Dc D1-3. 5 M2 विप्र° (for प्रति°). — After 33, K1. 2 B D (except D1-3) S (except M2; G1 missing) ins.:

227* गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ।

[(L. 2) Dc भैम्या धर्मेण भारत (for the posterior half); cf. 25$^{d}$.]

K1. 2 B D (except D1-3) cont.:

228* उष्य तत्र यथाकामं नैषधो द्विपदां वरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।

[(L. 1) K1 B1 Dc तस्य (for उष्य). Dc यथाकालं.]

**34** $^{a}$) K2 B Dn D4-6 T G (G1 missing) तु; Dc च (for तत्). — $^{b}$) B3 नराधिपः; M2 [ऽ]पि भारत. — $^{c}$) K2 B D (except D2. 3. 5) राजन् (for राजा). — $^{d}$) A few S MSS. वल° (for बल°). G4 यथा शच्या पुरंदरः.

**35** $^{a}$) T2 G3 भ्राजते (for मुदितो). — $^{c}$) Ś1 K (except K2) Dc D1-3. 5 रंजयन्वसुधां वीरो. — $^{d}$) K3 Dc प्रति° (for परि°).

**36** $^{a}$) D2 इयाजा° (for ईजे चा°). Ś1 K1 (by transp.) [ऽ]पि च; Dc D5 चैव. — $^{b}$) K3. 4 नाहुषः. — $^{cd}$) K2. 4 B Dn D4-6 T2 G3 (by transp.) बहुभि- (B1. 2 विविधै)र्धीमान्क्रतुभिश्च. Ś1 K1 प्राप्त°; G2. 4 त्वाप्त°; M स्वाप्त° (for चाप्त°).

**37** $^{a}$) B3 पुरेषु; D3 पुण्येषु (for पुनश्च). — $^{b}$) T G2. 3 M1 जले° (for वने°). — After 37, Dc1 Dn D1-3 ins.:

229* जनयामास च नलो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम् ।

**38** $^{a}$) Dc1 D1 G2. 4 सं- (for स). D1-3 तु (for च). — $^{b}$) D3 तु (for च).

Colophon. G1 missing. — *Major parvan:* Ś1 Dn2 T G2-4 आरण्य. — *Sub-parvan:* N (except Ś1 D2) T1 M1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* Dn1. n3 M1 दमयंती- स्वयंवरः; D2 दमयंत्या नलवरणो नाम स्वयंवरः. — *Adhy. no.* (figures, words or both): Dc2 M1 55; Dn2. n3 57; D1 58; T G2-4 M2 54 (as in text). — *Śloka no.:* Dn 49 (Dn1 50); D1 40.

## 55

☞ This adhy. is missing in G1 (cf. v.l. 3. 53. 5); the MS. is mostly ignored here.

**1** 1$^{ab}$=3. 54. 28$^{ab}$. — After 1, M2 ins. a passage

द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ २
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वाहं वरयिष्ये तां मनो हि मम तद्गतम् ॥ ३
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ४
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ५
देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ६
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
अस्माभिः समनुज्ञातो दमयन्त्या नलो वृतः ॥ ७
कश्च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ॥ ८
यस्मिन्सत्यं धृतिर्दानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ ९
आत्मानं स शपेन्मूढो हन्याच्चात्मानमात्मना ।
एवंगुणं नलं यो वै कामयेच्छपितुं कले ॥ १०
कृच्छ्रे स नरके मज्जेदगाधे विपुलेऽप्लवे ।
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ॥ ११
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥ १२
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ।
त्वमप्यक्षान्समाविश्य कर्तुं साहाय्यमर्हसि ॥ १३

C. 3. 2253
B. 3. 58. 14
K. 3. 55. 15

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

of 8 lines given in App. I (No. 9).

**2** $^{ab}$) $T_2$ G ($G_1$ missing) प्रेक्ष्य (for शक्रः), and शक्रः स (for संप्रेक्ष्य). $D_1$ परवीरहा; S (mostly) वलवृत्रहा. — $^{c}$) $Ś_1$ सहासीनं; $K_{1.3}$ $B_3$ T G ($G_1$ missing) सहानेन. — $^{d}$) $M_1$ क्व यास्यसि कले वद.

**3** $^{c}$) $K_2$ B Dn $D_{4.6}$ S (except $M_2$; $G_1$ missing) हि (for [अ]हं). — $^{d}$) $K_2$ B Dn $D_{4.6}$ तां; $T_1$ हृद्- (for तद्-). $K_3$ (corrupt) ममापि मनस्तद्गतं.

**4** $^{a}$) $K_4$ $D_{1-3}$ ततो° (for तम°). — $^{b}$) $Ś_1$ K (except $K_2$) Dc $D_{1-4.6}$ $T_2$ $G_{2.3}$ M निवृत्तः. — $^{cd}$) T G ($G_1$ missing) नलो राजा पतिस्तस्या बभूव स महाद्युतिः ($T_1$ $G_2$ °ते).

**6** $^{c}$) $K_2$ B Dc Dn $D_{4-6}$ तत्र; $D_{1.3}$ ततस् (for ननु). $T_2$ $G_3$ तस्य (for तस्या).

**7** $^{b}$) K (except $K_2$) $D_{1.3}$ तं (for ते). — $^{c}$) K (except $K_1$) B Dn $D_{2.4-6}$ $M_2$ °ज्ञाते (for °ज्ञातो). — $Dc_2$ (which om. 8) ins. 230* after 7.

**8** $Dc_2$ om. 8. T G ($G_1$ missing) transp. $8^{ab}$ and $8^{cd}$. — $^{a}$) $K_2$ Dn $D_4$ $M_2$ का च; $K_3$ $D_{2.3}$ कश्चित्; $T_1$ $G_{2.4}$ किं च; $M_1$ का स्वित्. $Dc_1$ धर्मगुणो°. — $K_{1.2}$ B Dc Dn $D_{4-6}$ T G ($G_1$ missing) ins. after 8 ($Dc_2$, which om. 8, ins. after 7): M ins. line 1 only after $8^{ab}$:

230* योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ।
अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ।

[(L. 1) $M_1$ सांगान् (for सर्वान्). — (L. 2) T G ($G_1$ missing) नित्य- (for नित्यं). — (L. 3) $B_1$ $D_5$ T G ($G_1$ missing) अहिंसायां रतो. Dc नित्यं (for यश्च). T G ($G_1$ missing) धर्म° (for सत्य°).]

— Thereafter $K_1$ ins. 231*.

**9** $^{a}$) B Cn दाक्ष्यं ($B_1$ दानं); $M_2$ सम्यक्; Cnp सत्यं (as in text). $B_4$ Dn ज्ञानं; $B_1$ दाक्ष्यं (for दानं). — $^{b}$) $Ś_1$ K (except $K_2$) $B_{1.3}$ Dc $D_{1-3.5}$ शौर्यं (for शौचं). $Ś_1$ $K_{1.3}$ क्षमा दमः; $T_1$ सदा क्षमा; $T_2$ G ($G_1$ missing) दया क्षमा (for दमः शमः). — $K_2$ B Dc Dn $D_{4.6}$ ins. after 9: $K_1$, after 230*:

231* एवंरूपं नलं यो वै कामयेच्छपितुं कले ।,

which is a v.l. of $10^{cd}$.

**10** $^{a}$) $K_3$ $B_1$ $G_{2.4}$ $M_2$ संशपेन्; $B_2$ शपते; Dc शमयेन्. — $^{b}$) $K_2$ B Dn $D_{2-4.6}$ $G_4$ om. च. — $D_4$ om. $10^{cd}$. — $^{c}$) $K_4$ एवंभूतं. T G ($G_1$ missing) हि (for वै). — $^{d}$) $T_1$ शासितुं; $G_4$ वासितुं; $M_1$ पीडितुं (for शपितुं).

**11** $^{a}$) T G ($G_1$ missing) असकृन् (for कृच्छ्रे स). — $^{b}$) $K_2$ B D (except $D_{1-3.5}$) विपुले ह्रदे; $K_{3.4}$ $D_2$ विपुलप्लवे.

**12** $^{a}$) T G ($G_1$ missing) गतेषु तेषु दे°. — $^{c}$) S ($G_1$ missing) संयंतुं (for संहर्तुं).

# ५६

C. 3. 2254
B. 3. 59. 1
K. 3. 56. 1

बृहदश्व उवाच ।
एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ १
स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ २
कृत्वा मूत्रमुपस्पृश्य संध्यामास्ते स नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३
स समाविश्य तु नलं समीपं पुष्करस्य ह ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राजन्नलं नृपम् ॥ ५
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ॥ ६
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७
न चक्षमे ततो राजा समाह्वानं महामनाः ।

---

**13** $^{a}$) K4 D2 ध्वंस° (for भ्रंश°). — $^{b}$) D1. 3 रंस्यति. — $^{d}$) K1. 2 B2 Dn D4. 6 (by transp.) साहाय्यं कर्तुम्; T G (G1 missing) कर्तुं मे साह्यम्; M साह्यं मे कर्तुम्. — After 13, T G (G1 missing) ins.:

232* मम प्रिये कृते तस्मिन्कृतवांश्च भविष्यसि।

Colophon om. in D2. 3. G1 missing. — *Major parvan:* Ś1 Dn2 T G2–4 आरण्य. — *Sub-parvan:* N (except Ś1 B4; D2. 3 om.) T G3 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* B4 कलिद्वापरमन्त्रणं; T2 G3 इंद्रकलिसंवादः. — *Adhy. no.* (figures, words or both): Dc2 M1 56; Dn (Dn1 *sup. lin.*) 58; D1 59; T G2–4 M2 55 (as in text). — *Śloka no.:* Dn 14; D1 13.

## 56

**1** The portion of the text from 1$^{a}$ up to समाह्वानं (in 8$^{b}$) is missing in G1 (cf. v.l. 3. 53. 5). — $^{b}$) T G (G1 missing) तदा (for सह). — $^{c}$) Ś1 K1 कलिस् (for ततस्).

**2** G1 missing (cf. v.l. 1). — $^{a}$) K2 B Dn D4. 6 T2 G3 °प्रेप्सुर् (for °प्रेक्षी).

**3** G1 missing (cf. v.l. 1). — $^{b}$) K4m D2. 5 शय्याम् (for संध्याम्). K2 अध्यास्त; K4 D2. 3 S आस्ते स; K4m D5 भेजे स; B (except B1) Dn1. n2 Cn अन्वास्त (Cnp सोऽऽस्ते स); Dn3 D4. 6 अन्वास्य (for आस्ते स).

**4** G1 missing (cf. v.l. 1). — $^{a}$) K2 B Dn D4. 6 च (for तु). — $^{b}$) K (except K4) B D (except D1–3. 5) T2 G3. 4 च; G2 M2 तु (for ह). — $^{d}$) D1 अक्षैर् (for एहि).

**5** G1 missing (cf. v.l. 1). — $^{a}$) B2 D2 जित्वा (for जेता). — $^{b}$) K4 च; Dc स (for हि). — $^{d}$) K2. 3. 4m B Dn D3–6 T2 G3 राज्यं (for राजन्). — After 5, K4 ins.:

233* एवमुक्तस्तु कलिना पुष्करस्तमभाषत।

K4 (om. lines 2–3) cont.: K3 D1 ins. after 5:

234* पुष्कर उवाच।
पणेन दीव्यते वीर नास्ति वित्तं पणाय मे।
वित्तहीनेन च नलः क्रीडते न मया सह।
पुष्करेणैवमुक्तस्तु कलिर्वचनमब्रवीत्।
भविष्येऽहं वृषश्रेष्ठस्तेन दीव्य पणेन वै।

[(L. 2) D1 कथं क्रीडेन् (for क्रीडते न). — (L. 4) K4 भविष्येहं नरश्रेष्ठ सखा दीव्य नलेन वै.]

**6** G1 missing (cf. v.l. 1). — $^{b}$) D1 T2 G (G1 missing) अभ्यगात्. — Ś1 D3 om. (hapl.) 6$^{cd}$. — $^{d}$) T G (G1 missing) M1 तं वै; M2 बहून् (for गवां). D1. 2 M2 अभ्यगात्; T G (G1 missing) अन्वियात्; M1 अन्वगात्.

**7** G1 missing (cf. v.l. 1). — $^{a}$) Ś1 K (except K2) D1–3 च (for तु). — $^{c}$) T G (G1 missing) प्रीत्या; M2 भ्रात्रा (for भ्राता). K3 Dc Dn2 D5 एहि दीव्याम (K3 Dn2 °व)हे राजन्. — $^{d}$) K1 T G3. 4 पुनः पुनः (for मुहुर्मुहुः).

**8** G1 missing up to समाह्वानं in 8$^{b}$ (cf. v.l. 1). — $^{b}$) D1 समाहूय. T G (except G1) महायशाः. — $^{c}$) B3 S वैदर्भ्या °माणायां. — $^{d}$) S (except M2) प्राप्त° (for पण°). — After 8, K3 ins.:

वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ८
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ ९
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमचेतसम् ॥ १०
ततः पौरजनः सर्वो मन्त्रिभिः सह भारत ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ११
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनः सर्वो द्वारि तिष्ठति कार्यवान् ॥ १२
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ १३
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ १४
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ।
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ॥ १५
तां तथा रुचिरापाङ्गीं विलपन्तीं सुमध्यमाम् ।
आविष्टः कलिना राजा नाभ्यभाषत किंचन ॥ १६
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ॥ १७
तथा तदभवद् द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ १८

C. 3. 2271
B. 3. 59. 18
K. 3. 56. 20

इति श्रीमहाभारते आरण्यकपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

235* आहूतो न निवर्तेत द्यूतादपि पणादपि ।;
while S (M om. line 2) ins.:

236* ततः स राजा सहसा देवितुं संप्रचक्रमे ।
भ्रात्रा दैवाभिभूतेन दैवाविष्टो जनाधिपः ।

**9** [b]) Ś1 K1 रत्नानां चैव; T2 G3 यानयुग्यसु. G2. 4 वाससः. — [d]) B3 हीयते; D2 G1 दीव्यते (for जीयते). Dc D1. 5 पुनः पुनः (for नलस्तदा).

**10** [d]) K4 (marg. *sec. m.* as in text) दीव्यते तम् (for दीव्यमानम्). N अरिंदमं (K1. 2 B Dc Dn3 D4 °म) (for अचेतसम्).

**11** [a]) K2. 4 Dn D5. 6 T G °जनाः सर्वे. — [b]) Ś1 K1. 3. 4 Dc D1-3. 5 दुःखशोकसमन्वितः (K4 D2. 3. 5 °ताः). — [c]) K1 transp. राजानं and द्रष्टुं. D3 इच्छंति (for आगच्छत्). — [d]) Ś1 K1. 3. 4 D1-3 आतुराः (K1. 3 D1 °रः).

**12** G1 om. 12. — [a]) D2 तत्र (for सूत). — [c]) K2 B D (except D1-3) देवि (for सर्वो). T G (G1 om.) पौरजानपदः सर्वो (T1 °दाः सर्वे). — [d]) D2. 3 द्वारे.

**14** [a]) Ś1 K3 D1. 2 ततः स; K4 ततस्ता; T1 स दृष्ट्वा. — [b]) T1 चार्ता (for वाचा). Ś1 K (except K2) D1-3. 5 मूर्छिता; some MSS. कर्षिता.

**15** [ab]) K1. 3 एष (for राजन्). K1. 3 Dc M1 उपस्थितः. Ś1 K4 D1-3 मंत्रिणस्त्वां (Ś1 °स्त्वा; D2 °स्ते) महाराज दिदृक्षव उपस्थिताः. — Ś1 K3. 4 D1-3 om. 15[cd]. — [c]) K1 T1 G1 M1 सर्वो (for सर्वै). — [d]) T2 G (except G1) राजन् (for राज-). K1 °पुरःसरः; B2 °पुरस्कृतैः. — After 15[cd], K1 ins. the reading of 15[ab] given by Ś1 K4 etc. (see above); while S ins.:

237* वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः ।
आगतं सहितं राजंस्त्वत्प्रसादावलम्बिनम् ।

— [e]) Ś1 K (except K2) D1-3 तान् (for तं).

**16** [a]) Ś1 G1 रुचिरापांगां. — [b]) K2 B Dn D4-6 तथाविधां (B3 मुहुर्मुहुः); S (except M1) शुचिस्मितां (for सुम°).

**17** [b]) D2. 3 G2 तथैव (for ते चैव). — [d]) D2. 5 T G आलयं.

**18** [a]) K4 T2 G3 तदा (for तथा). T2 G (except G1) सम° (for तद°).

Colophon. — *Major parvan:* Ś1 Dn2 T G आरण्य. — *Sub-parvan:* N (except Ś1 D2) T G3 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* B4 द्यूतं; D2 नलशरीरे कलिप्रवेशे अक्षक्रीडायां नलपराजयः. — *Adhy. no.* (figures, words or both): Dn (Dn1 *sup. lin.*) 59; D1 60; T G M2 56 (as in text); M1 57. — *Śloka no.:* Dn 18; D1 20.

## 57

**1** [a]) T2 G तथा (G1 तु तं) (for ततो). — [d]) T1 G1 दैवेन (for देवने). D3 गतचेतनं; T2 G2-4 कृतचेतसं (G4 °नं).

**2** [b]) Ś1 K1 वैदर्भी ससुता; K3 राज्ञी भीमसुता. — 2[cd]

# ५७

C. 3. 2272
B. 3. 60. 1
K. 3. 57. 1

बृहदश्व उवाच ।
दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ॥ १
भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ २
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ३
बृहत्सेने व्रजामात्यानानाय्य नलशासनात् ।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ॥ ४
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन् ॥ ५
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः ।
न्यवेदयद्भीमसुता न च तत्प्रत्यनन्दत ॥ ६
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ७
निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ८
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ ९
बृहत्सेना तु तच्छ्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ १०
वार्ष्णेयं तु ततो भैमी सान्त्वयञ्श्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ ११
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ १२
यथा यथा हि नृपतिः पुष्करेणेह जीयते ।

= (var.) 3. 51. $6^{cd}$. — $^{d}$) $K_1$ नैषधं (for पार्थिवं).

**3** $^{a}$) $K_1$ शंकमाना च; $K_{3.4}$ $D_3$ आशंकमाना. $K_3$ Dc तत्कार्यं (cf. $2^{c}$). — $^{b}$) $Ś_1$ $K_1$ चिकीर्षतं. $K_3$ तत्कथं; Dc तत्परं. — $^{d}$) $M_1$ °लक्ष्ये° (for °लभ्ये°). — After 3, $K_{1.2}$ B D (except $Dn_2$ $D_{1-3}$) ins.:

238* बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
हितां सर्वार्थकुशलामनुरक्तां सुभाषिताम् ।

**4** $^{b}$) $K_4$ आसाद्य; $D_{1.3}$ आनीय. $B_3$ नृपशासनात्. — $^{c}$) $Ś_1$ $B_4$ $D_6$ $G_1$ दिव्यं; $D_{1.3}$ वित्तं (for द्रव्यं). — $^{d}$) $D_{1-3}$ तु (for च). — After 4, S ins.:

239* इत्येवं सा समादिष्टा बृहत्सेना नरेश्वर ।
उवाच देव्या वचनं मन्त्रिणां सा समीपतः ।
[(L. 2) $G_2$ M transp. देव्या and वचनं.]

**5** $K_1$ om. $5^{ab}$. — $^{c}$) $M_1$ अपीदानीं विधेयं स्याद्. — $^{d}$) $K_2$ B D (except $D_{1-3}$) नलम् (for पुनर्). $D_1$ अब्रुवन् (for आव्रजन्).

**6** $K_4$ om. $6^{ab}$. — $^{a}$) T G $M_2$ प्रकृतीस्तास्तथा ($G_4$ $M_2$ °तो) दृष्ट्वा. — $^{d}$) $D_3$ स (for न). $K_1$ स (for च). $Ś_1$ $K_{3.4}$ Dc $D_1$ M स; $D_2$ तं; $D_3$ ताः (for तत्). $K_1$ प्रत्यपद्यत.

**7** $^{a}$) $D_1$ प्रतिवाक्यमदातारं. — $^{b}$) $Ś_1$ $K_{1.3}$ प्रसमीक्ष्य; $G_2$ अपि वीक्ष्य (for अभि°).

**8** $^{a}$) M निशाम्य. S (except $M_1$) हि (for च). $D_{1.3}$ निशम्य चाक्षान्वै सर्वान्. — $^{b}$) $Ś_1$ $K_1$ °पराक्रमान् ($K_1$ °क्रमं).

**9** $^{a}$) S (except $M_1$) गत्वा (for गच्छ). — $^{b}$) $M_1$ मम (for नल-). — $^{c}$) $Ś_1$ आनाय. — $^{d}$) $Ś_1$ $K_1$ $D_1$ बृहत् (for महत्).

**10** $^{a}$) $K_2$ $B_4$ $Dn_{1.}n_2$ $D_6$ तु सा; $D_3$ ततः (for तु तत्). — $^{b}$) $D_{1.3-6}$ $T_2$ $G_3$ $M_2$ दमयंत्या. — $^{c}$) $K_3$ सूतं तम् (for वार्ष्णेयम्). $Ś_1$ $K_{1.4}$ $D_{1-3}$ सूतमानाययामास. — $^{d}$) $K_1$ आशु° (for आप्त°).

**11** $^{a}$) $K_4$ वासुदेवं (for वार्ष्णेयं तु). $D_{2.3}$ च (for तु). $T_2$ $G_{3.4}$ तथा (for ततो). — $^{b}$) = 1. 92. $30^{b}$; 166. $5^{d}$. $Ś_1$ B $Dc_2$ $Dn_3$ $D_{2.4}$ सांत्वयत् ($B_1$ सारथिं); $K_1$ सांत्वया; $D_{1.3}$ सांत्वित (for सान्त्वयन्). T G $M_1$ श्लक्ष्णया परया ($T_1$ $M_1$ मधुरं; $G_1$ स्निग्धया) गिरा; $M_2$ श्लक्ष्णं मधुरया गिरा. — $^{d}$) $D_3$ देश° (for प्राप्त°). $T_2$ $G_3$ अरिंदम (for अनिन्दिता).

**12** $^{a}$) $K_4$ $D_{4.6}$ सदा; $G_2$ यदा (for यथा).

**13** $^{b}$) $K_2$ B Dn $D_{4-6}$ $M_1$ [ए]व; $T_1$ $G_1$ $M_2$ हि (for [इ]ह). — $^{c}$) $K_1$ $D_1$ भूयो वै; $K_2$ Dn $D_{4.6}$ (by transp.) वै द्यूते; $G_4$ भूयोपि. — $^{d}$) $K_1$ $G_4$ द्यूते रागो; $K_4$ $D_3$ (by transp.) भूयो रागो; $D_1$ रागो द्यूते. $Ś_1$ $T_2$ $G_{1.3}$

तथा तथास्य द्यूते वै रागो भूयोऽभिवर्धते ॥ १३
यथा च पुष्करस्याक्षा वर्तन्ते वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ १४
सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च ।
नूनं मन्ये न शेषोऽस्ति नैषधस्य महात्मनः ॥ १५
यत्र मे वचनं राजा नाभिनन्दति मोहितः ।
शरणं त्वां प्रपन्नास्मि सारथे कुरु मद्वचः ।
न हि मे शुध्यते भावः कदाचिद्विनशेदिति ॥ १६
नलस्य दयितानश्वान्योजयित्वा महाजवान् ।
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ १७
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चैतान्यथाकामं वस वान्यत्र गच्छ वा ॥ १८
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ १९
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ २०
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ॥ २१
आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ २२
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं चोपययौ तस्य सारथ्येन महीपतेः ॥ २३

C. 3. 2296
B. 3. 60. 25
K. 3. 57. 26

इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

[ऽ]पि; K1 B1. 3 D3 G2 M2 वि-; K3 हि; K4 [ऽ]स्य; G4 [ऽ]थ (for ऽभि-). D2 (corrupt) वैराग्येण ह भूयते.

**14** $^{a}$) K2 Dn D5. 6 G1 तथा (for यथा). K3. 4 D1–3 M1 हि (for च). — $^{b}$) K2 B Dn D4–6 पतंति; T2 G2. 3 पतंते (for वर्तन्ते). — $^{d}$) D1 वर्तंते (for दृश्य°).

**15** $^{a}$) G1 सुहृत्सुजन°. — $^{b}$) T1 यथायं न; T2 (orig.) G (except G3) M यथा यं न. D2. 3 सः; G1 यः (for च). — After $15^{ab}$, K1. 2 B D (except D1–3) S ins.:

240* ममापि च तथा वाक्यं नाभिनन्दति मोहितः ।

[Cf. $16^{ab}$. — S (except T1 M1) transp. अपि and च. Dc D4 G4 यथा (for तथा). M1 °जानाति (for °नन्दति). T2 G (except G1) नैषधः (for मोहितः).]

— S cont.:

241* यथा राज्ञः प्रदीप्तानां भाग्यानामद्य सारथे ।

[T1 G1 तथा (for यथा). M तथास्य राज्ञो दीप्तानां (for the prior half). T1 अस्य; G1 अत्र (for अद्य).]

— $^{c}$) K1. 2 B D (except D1–3) दोषो (for शेषो). T1 नूनमन्ये विरोधोस्ति.

**16** M1 om. $16^{ab}$. — $^{a}$) K2 B (except B3) Dn D4–6 यत्तु मे; D1 ममैव; M2 तत्र मे (for यत्र मे). — $^{c}$) K1 D2. 3 त्वा (for त्वां). — $^{d}$) K1 B2 D1–3 मे (for मद्-). — $^{f}$) K2 D5 विनमेद् (for विनशेद्). K2 B D (except D1–3) अपि (for इति). S विनाशं प्रति सारथे.

**17** $^{b}$) K2. 4 B D (except D1–3) G2 मनो° (for महा°). — $^{c}$) Cf. $20^{c}$. S रथम् (for इदम्). K3 (marg. *sec. m.* as in text) नगरं (for मिथुनं). — $^{d}$) K4 विदर्भं (for कुण्डिनं).

**18** $^{b}$) Ś1 K (except K2) B1 Dc D1–3 स्यंदनं बालकौ (Ś1 °कं) तथा. — $^{c}$) K2 B Dn D4–6 चेमान्; S (except M1) चैव (for चैतान्). T2 G (except G1) विनिक्षिप्य (for यथाकामं). — $^{d}$) K4 D1. 3 वसेहान्यत्र. M1 वात्रैव; M2 वान्येन (for वान्यत्र). Ś1 K1. 3 मम वाक्येन गच्छथाः (K3 °त).

**19** $^{a}$) M2 ततो (for तु तद्). — D2 om. $19^{c}$–$20^{d}$. — $^{d}$) Ś1 M2 नित्यशः; K1 सर्वशः; K3. 4 D1. 3 मुख्यतः.

**20** D2 om. 20 (cf. v.l. 19). — $^{c}$) Cf. $17^{c}$. B2 आदाय (for आरोप्य). — $^{d}$) Ś1 K3. 4 B D1. 3. 4. 6 विदर्भां तेन. Ś1 K1. 3 D1. 3 यायिना.

**21** $^{a}$) D2. 3 ततो (for तत्र). Ś1 K1. 3 Dc D1 स विन्यस्य (for विनिक्षिप्य). M1 हयांस्तु तत्र निक्षिप्य.

**22** $^{b}$) Dc प्रति (for नृपम्). — After $22^{ab}$, T2 G (except G1) ins.:

242* क्व तु यास्यामि मनसा चिन्तयानो मुहुर्मुहुः ।

— $^{c}$) K4 ततः सूतो (ऽ) [अ]योध्यायां. — $^{d}$) D3 तथा; G4 ततः (for तदा).

**23** Dc1 om. 23. — $^{a}$) K1. 3 D1 च; K4 तु (for स). — $^{b}$) K3 त्वरान्वितः (for सुदुः°). — $^{c}$) Ś1 K1 D2. 3 तत्र (for तस्य). D1 लेभे तत्र भृतिं सोपि; S भृतिं च स ददौ चास्य. — $^{d}$) Ś1 सात्मजेन. K2. 3 B1 Dc2 Dn1 D1–3. 6 महीपते; S नि(T1 तु; G1 M च)योजितः.

Colophon om. in K1 Dc1. — *Major parvan:* N

## ५८

बृहदश्व उवाच ।

C. 3. 2297
B. 3. 61. 1
K. 3. 58. 1

ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन ॥ १
हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ २
शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ३
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ॥ ४
ततः पुष्करमालोक्य नलः परममन्युमान् ।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ५
एकवासा असंवीतः सुहृच्छोकविवर्धनः ।
निश्चक्राम तदा राजा त्यक्त्वा सुविपुलां श्रियम् ॥ ६
दमयन्त्येकवस्त्रा तं गच्छन्तं पृष्ठतोऽन्वियात् ।
स तया बाह्यतः सार्धं त्रिरात्रं नैषधोऽवसत् ॥ ७
पुष्करस्तु महाराज घोषयामास वै पुरे ।
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ॥ ८
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्मिन्सत्कारं कृतवन्तो युधिष्ठिर ॥ ९
स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः ।

---

(except $Dn_2$; $K_1$ $Dc_1$ om.) T $G_3$ (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* $D_2$ पुष्करेण सहाक्षक्रीडायां दमयंतीविलापे दमयंतीवाक्यं. — *Adhy. no.* (figures, words or both): $Dn_3$ 60; $D_1$ 61; T G $M_2$ 57 (as in text); $M_1$ 58. — *Śloka no.:* Dn 25.

## 58

**1** $^a$) $K_3$ प्र- (for तु). — $^b$) $T_1$ धीमतः (for दीव्य°). — $^d$) = 4. 63. 32$^b$; 66. 26$^b$. $B_1$ यद्वान्यद्; T G यच्चापि.

**2** $^b$) $K_4$ पुष्करो वाक्यमब्रवीत्. — $^d$) $Ś_1$ $K_1$ तु (for [अ]स्ति).

**3** $^b$) $Ś_1$ $B_1$ एतद् (for अन्यद्). $K_{2.3}$ $B_{2.4}$ Dc Dn $D_{2.3.5.6}$ जितं (for हृतं). $D_4$ पूर्वं सा विजिता मया. — $^c$) $K_{1.3}$ $B_{2.3}$ $D_{3.6}$ $M_1$ दमयंत्या.:

**4** $^a$) Dc उक्तस्तु; $D_3$ उक्तश्च (for °स्य). — $^b$) $D_2$ मन्युमत्. $D_3$ नलः परममन्युना (cf. 5$^b$). — $K_3$ om. (? hapl.) 4$^c$–5$^b$. — $^c$) $Ś_1$ $K_4$ $D_{2.3}$ $G_4$ विदीर्यतेव; Dc व्यदीर्यतास्य.

**5** $K_3$ om. 5$^{ab}$ (cf. v.l. 4). — $^b$) Dc $D_3$ $G_1$ °मन्युना. — After 5$^{ab}$, T G ins.:

243* उवाच विद्यतेऽन्यच्च धनं मम नराधम ।
पणरूपेण निक्षिप्य पुण्यश्लोकस्तु दुर्मनाः ।
उत्तरीयं तदा वस्त्रं तस्याश्चाभरणानि च ।

[(L. 2) $T_1$ पणन्निव च निक्षिप्य; $G_1$ पणोस्त्विति विनिक्षिप्य. — (L. 3) $T_1$ $G_1$ तथा (for तदा).]

— $^c$) T G उद्धृत्य. — $^d$) $Ś_1$ K (except $K_2$) Dc $D_{1-3}$ महामनाः (for °यशाः).

**6** $^a$) $K_2$ B Dc Dn $D_{4-6}$ $T_2$ (orig.) ह्यसंवीतः; $D_1$ सुसंवीतः; $D_{2.3}$ परीधानः (for असं°). S ($T_2$ by corr.) एकवासोभि($G_4$ °सो हि; $M_1$ °सः सु)संवीतः. — $^b$) $K_3$ सुहृच्छोकसमन्वितः; S सुहृदां शोकवर्धनः. — $^c$) $K_2$ B Dn $D_{2.5.6}$ $T_1$ ततो; $K_3$ महा-; S (except $G_1$) नलो (for तदा). $T_1$ राजन् (for राजा). — $^d$) $Ś_1$ स (for सु-). S त्यक्त्वा तु विपुलं धनं.

**7** $^a$) $Ś_1$ $Dc_1$ $T_1$ एकवस्त्रां; $K_{3.4}$ G (except $G_3$) $M_2$ °वस्त्रां. B (except $B_3$) Dn $D_{4.6}$ [अ]थ; $D_{1-3}$ तु; $D_5$ च (for तं). — $^b$) $Ś_1$ [ऽ]भ्यगात्; K $B_{1.3.4}$ Dc Dn $D_{1.2.4-6}$ M [ऽ]न्वगात्; $B_2$ $D_3$ $T_1$ [ऽ]न्वयात्. — $^c$) $G_{2.4}$ तथा (for तया). T G $M_2$ नगरा($T_2$ $G_3$ नैषधा)-भ्याशे (for बाह्यतः सार्धं). — $^d$) $T_1$ तां रात्रीं (for त्रिरात्रं). $K_1$ नैषधः सहितोवसत्.

**8** $^a$) Dc °स्तु महाभागः. — $^c$) $G_1$ अनुव्रजेन्नलं यस्तु. — $^d$) $K_4$ (by transp.) मम वध्यतां; T $G_{2-4}$ M वध्यतामिति. $G_1$ गच्छेद्वै वध्यतामिति.

**9** $^a$) $T_2$ G (except $G_1$) च (for तु). — $^b$) $Ś_1$ $D_1$ प्रजा-; $K_{3.4}$ $D_{2.3}$ द्यूत- (for तस्य). — $^c$) $K_2$ B Dn $D_{4-6}$ न तस्य ($B_1$ तस्य न) (for न तस्मिन्). — $^d$) $T_1$ नराधिप (for युधि°).

**10** $^a$) $T_1$ $M_2$ तया; $G_1$ नलो (for तथा). K (except $K_1$) B Dc $D_{1-5}$ नगराभ्यासे. — $^c$) $K_1$ भूत्वो (sic); $D_2$

त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ १०
क्षुधासंपीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ ११
स चिन्तयामास तदा निषधाधिपतिर्बली ।
अस्ति भक्षो ममाद्यायं वसु चेदं भविष्यति ॥ १२
ततस्तानन्तरीयेण वाससा समवास्तृणोत् ।
तस्यान्तरीयमादाय जग्मुः सर्वे विहायसा ॥ १३
उत्पतन्तः खगास्ते तु वाक्यमाहुस्तदा नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ १४
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ १५
तान्समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्ततो राजा दमयन्तीमथाब्रवीत् ॥ १६
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्दे च दुःखितः क्षुधयार्दितः ॥ १७
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः ।
त इमे शकुना भूत्वा वासोऽप्यपहरन्ति मे ॥ १८
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ १९
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ २०

C. 3. 2318
B. 3. 61. 22
K. 3. 58. 23

एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।

---

राजन् (for राजा). — After 10, K$_{1.2}$ B D (except D$_{1-3}$) ins.:

244* पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन् ।
प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात् ।

[(L. 1) K$_1$ क्षुधः संपीड्यमानश्च फल°. B$_2$ वर्त° (for कर्ष°). — (L. 2) K$_1$ ततोन्वगात्; B$_2$ ततोन्वियात् (for तमन्व°).]

**11** $^{a}$) K$_{1.2}$ B Dn D$_{4-6}$ T G क्षुधया; M$_1$ तथा सं- (for क्षुधासं-). Ś$_1$ °मानश्च; K$_4$ °मानोपि. — $^{b}$) Ś$_1$ °तिथं; K$_4$ D$_2$ °तिथो (for °तिथे). Ś$_1$ पथि; K (except K$_2$) D$_{1-3}$ [ऽ]ध्वनि (for [ऽ]हनि).

**12** $^{c}$) Ś$_1$ B Dn$_1$. n$_2$ D$_{1.4.6}$ G$_1$ भक्ष्यो; K$_1$ भक्ष्यं. K$_1$ समादेशं; K$_2$ ममाद्याहं; K$_3$ D$_1$ ममाद्योयं; Dc ममापीह; T G M$_2$ ममाद्यापि; M$_1$ मम ह्यद्य. — $^{d}$) Ś$_1$ K$_3$ बहु (for वसु).

**13** $^{a}$) Ś$_1$ K$_{1.3.4}$ D$_{1-3}$ T$_2$ G$_{1.3}$ M$_2$ उत्तरीयेण; K$_2$ B Dc Dn D$_{4-6}$ परिधानेन (for अन्तरीयेण as in T$_1$ G$_{2.4}$ M$_1$). — $^{b}$) Ś$_1$ समवावृणोत्; K$_{2.4}$ B D (except D$_{2.3}$) T$_1$ स स(K$_4$ म)मावृणोत्; T$_2$ M$_2$ स समास्तृ°; T$_2$ (by corr.) G$_3$ स समावृणोत् (for समवास्तृणोत्). M$_1$ वस्त्रेणैव समावृणोत्. — $^{c}$) Ś$_1$ K$_{1.3.4}$ D$_{1-3}$ T$_2$ (by corr.) G (except G$_2$) M$_2$ तस्योत्तरीयम्; K$_2$ B Dc Dn D$_{4-6}$ तस्य तद्वस्त्रम्. K$_4$ D$_3$ आसाद्य. — $^{d}$) K$_2$ B Dn D$_{4-6}$ transp. जग्मुः and सर्वे. K$_3$ D$_1$ विहायसः; D$_{2.3}$ विहंगमाः; T G$_{1.3}$ M$_1$ विहायसं.

**14** $^{a}$) Ś$_1$ तत्तु; K$_1$ तं तु; K$_2$ B Dn D$_{4-6}$ वाक्यं (for ते तु). — $^{b}$) Ś$_1$ K$_2$ B Dn D$_{4-6}$ एतद् (for वाक्यम्). K$_2$ B (except B$_3$) Dc Dn D$_5$ S (except G$_1$) ततो (for तदा). — $^{c}$) B$_2$ दिष्ट्या (for दृष्ट्वा). Ś$_1$ K$_1$ दीनं (for भूमौ). — $^{d}$) Ś$_1$ K$_1$ स्थितमेनम्; K$_{3.4}$ Dc D$_{1-3}$ (by transp.) दीनं स्थितम्.

**15** $^{b}$) K$_1$ तव वासोपहारिणः. — $^{c}$) K$_4$ अस्माकं हि कथं प्रीतिः; D$_2$ नागच्छति ततः प्रीतिः. — $^{d}$) M$_1$ सु- (for स-).

**16** $^{a}$) Ś$_1$ K$_2$ Dn D$_{4-6}$ समीप- (for समीक्ष्य). — $^{b}$) D$_3$ गत- (for च वि-). — $^{c}$) K$_{1.2}$ B Dn D$_{1.4-6}$ G$_2$ M$_2$ तदा; G$_1$ [ऽ]पि वै (for ततो). K$_2$ B Dn D$_{3-6}$ M$_2$ राजन् (for राजा). — $^{d}$) Ś$_1$ D$_2$ तथा°; T$_1$ तदा° (for अथा°).

**17** $^{a}$) G$_{2.4}$ M$_2$ एषां (for येषां). — $^{c}$) K$_{2.3}$ Dn D$_{1-3.5}$ विंदेयं; Dc विंदेत (for विंदे च). — $^{d}$) K$_{2.4}$ B Dn D$_{4-6}$ T$_2$ G$_3$ क्षुधयान्वितः; D$_1$ क्षुत्तृषार्दितः; M$_1$ च क्षुधान्वितः. K$_1$ क्षुधितो दुःखितस्तथा.

**18** $^{a}$) G$_4$ एषां. B$_2$ प्रकोपात् (for कृते न); cf. 17$^{a}$. — $^{b}$) D$_{2-4}$ S (except T$_2$ G$_3$) मम (for मयि). — $^{c}$) K$_2$ B (except B$_3$) Dn D$_{4-6}$ transp. ते and इमे. — $^{d}$) K$_2$ B Dn D$_{4-6}$ वासो भीरु; K$_3$ वासो व्यप-; T G वासश्चापि.

**19** $^{c}$) T$_1$ G (except G$_3$) ते सं-; M ते सा (for तेऽहं).

**20** $^{a}$) D$_{2.3}$ बहुशः (for बहवः). — $^{b}$) K$_1$ M$_2$ °मुखं; M$_1$ °दिशं (for °पथम्). — $^{c}$) B$_2$ T$_1$ G (except G$_3$) अवंतीनृक्ष°.

**21** $^{a}$) S (except T$_1$ G$_4$ M$_2$) महान् (for महा-). — $^{d}$) K$_2$ B Dn D$_{4-6}$ बहुमूलफला°; Dc D$_1$ द्रुमाः पुष्पफला°; M$_2$ अमी पुष्पफलद्रुमाः.

C. 3. 2318
B. 3. 61. 22
K. 3. 58. 23

आश्रमाश्च महर्षीणाममी पुष्पफलान्विताः ॥ २१
एष पन्था विदर्भाणामयं गच्छति कोसलान् ।
अतः परं च देशोऽयं दक्षिणे दक्षिणापथः ॥ २२
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ २३
उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः ॥ २४
हृतराज्यं हृतधनं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां विजने वने ॥ २५
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्यामि ते क्लमम् ॥ २६
न च भार्यासमं किंचिद्विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ २७

नल उवाच ।

एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ २८
न चाहं त्यक्तुकामस्त्वां किमर्थं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न त्वेव त्वामनिन्दिते ॥ २९

दमयन्त्युवाच ।

यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ३०
अवैमि चाहं नृपते न त्वं मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ॥ ३१
पन्थानं हि ममाभीक्ष्णमाख्यासि नरसत्तम ।
अतोनिमित्तं शोकं मे वर्धयस्यमरप्रभ ॥ ३२
यदि चायमभिप्रायस्तव राजन्व्रजेदिति ।

---

**22** [b]) $K_2$ B Dn $D_{4-6}$ असौ; $K_4$ T G $M_2$ एष (for अयं). T G $M_2$ यास्यति (for गच्छति). $K_2$ $B_{2.3}$ $Dn_3$ $D_{4-6}$ कोशलां; $K_3$ कौशलान्; $K_4$ $B_4$ $Dn_1$. $n_2$ $D_{2.3}$ कोशलान्; Dc कौशलां; $D_1$ कोशलं. $M_1$ रमणीयः शिवः समः. — [c]) $G_1$ $M_2$ ततः (for अतः). — [d]) T G $M_2$ दक्षिणो for °णे). $M_1$ विदर्भाणां महाद्युते. — After 22, $K_{1.2}$ B D (except $D_{1-3}$) ins.:

245* एतद्वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत ।
[(L. 2) $K_{1.2}$ $B_2$ $D_{4-6}$ उवाच चासकृदार्तः.]

**23** $23^{ab} = 3.\ 56.\ 14^{ab}$. — [b]) $Ś_1$ $K_{1.3}$ पीडिता; B Dn $D_{4.6}$ कर्षिता; $D_1$ मूर्छिता. — [c]) $K_4$ $D_4$ $D_{1.2}$ [इ]दं (for तं). — [d]) $D_5$ परमं; $G_1$ कृपणं (for करुणं).

**24** [a]) $B_4$ संवेपते; Dn $D_{1.3}$ उद्वेजते. — [b]) $K_3$ $D_{1.4.6}$ $T_1$ सर्वतः; $B_{2m}$ भारत (for सर्वशः).

**25** [a]) $G_1$ हृतराष्ट्रं. $K_2$ B (except $B_2$) Dn $D_{4-6}$ S (except $T_1$ $M_1$) हृतद्रव्यं. — [b]) $K_4$ क्षुत्प्रपीडितं; $B_2$ क्षुधयान्वितं; $Dc_1$ $D_2$ क्षुत्समन्वितं; $G_{2.4}$ तृट्‌सम($G_4$ °श्रमा)-न्वितं. — [d]) $B_2$ M (by transp.) त्वामहं; $G_4$ विसृज्य. $Ś_1$ $T_1$ त्वा; $G_2$ हि (for त्वां). $K_{1.2}$ B (except $B_1$) Dn $D_{2.4-6}$ निर्जने (for वि°).

**26** [a]) $K_1$ $Dc_2$ च (for ते). — [d]) $K_2$ $B_3$ Dn $D_{4-6}$ $G_1$ M [अ]हं; $B_2$ तं (for ते).

**27** [a]) $Ś_1$ K (except $K_2$) Dc $D_{1-3}$ हि (for च). — [b]) $K_4$ $D_{1-3}$ भेषजामृतं; $T_1$ $G_{2.4}$ $M_2$ भेषजं मतं; $T_2$ $G_3$ भैषजं मतं; $G_1$ ह्येष मन्मतं. — [c]) S (except $M_1$) नित्यं हि (for औषधं). — After 27, $D_1$ ins. an addl. colophon (*adhy. no.*: 62).

**28** [a]) $= 1.\ 143.\ 16^{a}$. $T_2$ $G_{2.3}$ सत्यम् (for एवम्). $D_3$ एव (for एतद्). — [c]) $Ś_1$ रम्यं; $K_{1.4}$ $M_1$ किंचित्; $T_1$ वित्तं (for मित्रं). — [d]) $K_{1.4}$ विद्यते भेषजं मतं ($K_4$ °षजामृतं).

**29** [a]) $Ś_1$ K (except $K_2$) Dc $D_{1-3}$ त्यक्तुमिच्छामि. — [b]) $K_2$ $B_{1.4}$ Dn $D_{4-6}$ किमलं (for किमर्थं). $Ś_1$ $K_{1.3}$ भाषसे (for शङ्क°). — [c]) $Dc_1$ प्रजह्याम्; $Dc_2$ प्रसह्यम् (for त्यजेयम्). — [d]) $K_2$ B D (except $D_1$) चैव (for त्वेव).

**30** [a]) $Dn_2$ $M_2$ मा (for मां). — [cd]) $K_4$ एष पंथा विदर्भाणां किमर्थमुपदिश्यते.

**31** [b]) $K_{2.3}$ Dn $D_{4-6}$ तु; $B_3$ च (for त्वं). $Ś_1$ $K_{1.4}$ $D_{1.2}$ इच्छसि (for अर्हसि). — [c]) $G_1$ तेजसा. T G (except $G_1$) त्वपकृष्टस्त्वं. — [d]) $Ś_1$ $K_3$ $Dn_2$ $D_6$ मा (for मां).

**32** [a]) $K_4$ $D_{1.3}$ पंथानो. — [b]) $Ś_1$ $K_1$ Dc विबुधोत्तम; $K_2$ B Dn $D_{4-6}$ च ($D_5$ त्वं) नरोत्तम; $K_{3.4}$ $D_{2.3}$ $M_1$ विबुधोपम; $D_1$ यत्सुरोपम (for नर°). — [c]) $D_{2.3}$ शोको; $M_1$ शंका. — [d]) $K_2$ B Dn $D_{4-6}$ अमरोपम; $G_1$ अनलप्रभ. $Ś_1$ $K_{3.4}$ Dc $D_1$ वर्धयिष्यति ($K_4$ $D_1$ °सि) शंकया; $K_1$ वर्धयिष्यसि मानद; $D_{2.3}$ वर्धते चानिशं प्रभो; $M_1$ वर्तते त्वयि नैषध.

C. 3. 2467
B. 3. 64. 68
K. 3. 61. 68

साभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ॥ ६४
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ॥ ६५
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु धर्मेषु मृगपक्षिषु चानघाः ।
कुशलं वो महाभागाः स्वधर्मचरणेषु च ॥ ६६
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ६७
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ६८
अस्यारण्यस्य महती देवता वा महीभृतः ।
अस्या नु नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ६९
साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा न नद्या देवताप्यहम् ॥ ७०
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७१
विदर्भेषु महीपालो भीमो नाम महाद्युतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ७२
निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशां पतिः ॥ ७३
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।

---

271* आश्वासिता तदा भैमी तापसैः सह संगता ।,
— a line again ignored in P. P. S. Sastri's ed. of the Southern Recension (cf. 267*).

**64** $^{a}$) T2 G (except G1) M1 अभिवाद्य (om. सा). K1. 3 T2 G (except G1) ततो वृद्धान्. — $^{b}$) K4 चिंतया वनसंस्थिता. — K2 om. $64^{c}$–$71^{b}$. — $^{d}$) K4 D2 T1 G1. 2 तथा; D1 तदा; D3 स्थिता (for च सा). B Dc D4. 6 तैः सर्वैस्तापसोत्तमैः. — After 65, T1 M2 ins.:

272* पूजां चक्रे यथान्यायमृषीणां सा मनस्विनी ।
[ Cf. $65^{ab}$ and v.l. ]

**65** K2 om. 65 (cf. v.l. 64). — $^{ab}$) T1 G1 M2 ततस्ते पूजिता विप्राः प्रयतेंद्रियमानसाः. — $^{c}$) D3 अवोचंस्ते; G2. 4 अवोचुस्ते (for अथो°). — $^{d}$) Ś1 K1 B2 D1 करवाम (Ś1 °णि) ते; B1. 3. 4 Dc D4. 6 T G °म च (for °महे).

**66** K2 om. 66 (cf. v.l. 64). — $^{a}$) B Dc D4 महाभागा (for वरा°). — $^{c}$) B3. 4 Dn2. n3 D4. 6 G1 तपःस्वग्निषु. T1 M धर्मे च (for धर्मेषु). — $^{d}$) T1 G1 M2 सर्वेषु मृगपक्षिषु; T2 G2–4 नित्ययज्ञेषु चानघाः. — After $66^{cd}$, S ins.:

273* अपि स्वाध्याययोगेषु धर्मदेहेषु वा पुनः ।
[ T1 °योगेषु (for °देहेषु). T2 G3. 4 M1 चाप्युत (for वा पुनः). ]

— $^{e}$) S प्रियतपाः (for महा°). — $^{f}$) Ś1 K1 B2. 4 Dc Dn2. n3 (by corr.) D1. 6 स्वधर्मो°.

**67** K2 om. 67 (cf. v.l. 64). Before 67, T2 G (except G1) M1 ins. बृहदश्वः. — $^{a}$) T1 G1 M2 तैश्चोक्तं. Ś1 K1 सर्वं (for भद्रे). — $^{b}$) S तपस्विभिः; a few MSS. यशस्विनि.

**68** K2 om. 68 (cf. v.l. 64). — $^{d}$) B2 D4. 6 सा विश्वसिहि (for समा°). Some MSS. शुच.

**69** K2 om. 69 (cf. v.l. 64). — $^{ab}$) Ś1 K3. 4 B D देवी त्वं (for महती). K1 देवी त्वमुउ (sic) वास्य (for महती देवता वा). Ś1 B Dc Dn D3–6 उताहो (Ś1 D3 °त वा)-स्य; K3. 4 D2 सुता वास्य (for देवता वा). M1 गिरेः शुभे (for महीभृतः). — $^{c}$) Ś1 नो; B Dc Dn D4. 6 च; D2. 3 हि (for नु). — $^{d}$) Ś1 स्वार्थ्यम्; K1 B2 Dc Dn2 D4. 6 का त्वं; D2 स्वार्थम् (for सत्यम्). B2 Dc Dn2 D4. 6 शुचिस्मिते (for अनिन्दिते).

**70** K2 om. 70 (cf. v.l. 64). — $^{b}$) K1 T2 G3. 4 transp. अरण्यस्य and अस्य. — Ś1 K3 om. (hapl.) $70^{cd}$. — $^{c}$) K4 D3 चास्यापि; D1 चास्यास्य; D2 चैवास्य (for चाप्यस्य). — $^{d}$) B3. 4 [अ]स्मि; T2 G3. 4 M1 हि (for [अ]पि). K1. 4 Dn D2. 3. 5 नैव नद्याश्च (K4 D3 °स्तु) देवता; D1 नद्या नैवास्मि देवता.

**71** K2 om. $71^{ab}$ (cf. v.l. 64). — $^{a}$) D2. 3 विजानीध्वं. — $^{b}$) G1 तपस्विनः (for तपो°). — $^{d}$) Ś1 K1 तत्वतः; K3 सर्वतः.

**72** $^{b}$) B3 नाम्ना भीमो (for भीमो नाम). K2 Dn D5 महीपतिः (for महा°). K4 भीमो भीमपराक्रमः (epic tag!). — K2 om. $72^{c}$–$77^{b}$.

**73** K2 om. 73 (cf. v.l. 72). — $^{c}$) T2 G (except G1) M1 नैक- (for वीरः). K4 नित्यं (for विद्वान्). — $^{d}$) K4 transp. मम and भर्ता.

**74** K2 om. 74 (cf. v.l. 72). — $^{a}$) D1 देवानामर्चन-

गोप्ता निषधवंशस्य महाभागो महाद्युतिः ॥ ७४
सत्यवाग्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः ॥ ७५
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ७६
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ७७
स कैश्चिन्निकृतिप्रज्ञैरकल्याणैर्नराधमैः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ७८
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तृदर्शनलालसाम् ॥ ७९
सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च रम्याणि तथारण्यानि सर्वशः ॥ ८०
अन्वेषमाणा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ ८१
कच्चिद्भगवतां पुण्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ८२
यत्कृतेऽहमिदं विप्राः प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ८३
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ॥ ८४
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ८५
एवं विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥ ८६

C. 3. 2491
B. 3. 64. 91
K. 3. 61. 90

परः; $M_2$ गुरुपादार्चनरतः. — $^{b}$) $K_4$ (before corr.) $B_3$ $D_3$ °वल्लभः. — $K_3$ om. (hapl.) $74^{cd}$. — $^{d}$) $Ś_1$ $K_{1.4}$ Dn $D_{1-3.5}$ महातेजा महाबलः.

**75** $K_2$ om. 75 (cf. v.l. 72). — $^{a}$) $K_1$ $B_{2.4}$ Dn $D_5$ $T_1$ $G_1$ सत्यवान्. B (except $B_4$) Dc $D_{4.6}$ अस्त्र° (for धर्म°).

**76** $K_2$ om. 76 (cf. v.l. 72); $T_2$ $G_{2-4}$ om. $76^{ab}$. — $^{a}$) $Dc_2$ $D_6$ $M_1$ नर° (for नृप°). — $^{c}$) $K_4$ B (except $B_4$) Dc $D_{1.4.6}$ स मे (for मम).

**77** $K_2$ om. $77^{ab}$ (cf. v.l. 72). — $^{c}$) $B_1$ (? gloss) रणे (for मृधे). — $^{d}$) $B_{1.3}$ Dc $D_1$ °सोमसमद्युतिः; $B_2$ $D_{4.6}$ °सोमानलद्युतिः.

**78** $^{a}$) $T_1$ $G_1$ $M_2$ धूर्तैर् (for कैश्चिन्). $B_4$ $D_3$ निकृतप्रज्ञैः. — $^{b}$) $Ś_1$ $K_{1.3.4}$ $D_1$ नृपोत्तमः; $B_{1.4}$ $T_1$ नराधिपः; $B_3$ M नराधिपैः. $K_2$ Dn $D_5$ अनार्यैरकृतात्मभिः; $D_{2.3}$ वंचयित्वा महायशाः ($D_3$ °मनाः). — $^{f}$) $K_2$ Dn $D_5$ $G_4$ हृतं; $T_2$ $G_3$ हृतो (for जितो). $K_1$ (? gloss) धनानि (for वसूनि). — After 78, S ins.:

274* विवासितश्च नगराद्वनवासमुपेयिवान् ।

**79** $^{b}$) $Ś_1$ $G_1$ च; $K_1$ ह (for वै). — $^{d}$) $K_2$ Dn $D_5$ $M_2$ भर्तुर्दर्शनलालसां; B Dc $D_{4.6}$ भर्तृव्यसनकर्षितां. Cf. Hopkins, *Great Epic*, Parallel Phrases, No. 165 (p. 424).

**80** $K_1$ om. $80^{bc}$. — $^{c}$) $T_1$ पर्वतानां च; $G_1$ तपोवनानि (for पल्वलानि च). $Ś_1$ $K_{2.4}$ Dn $D_{1-3.5}$ च सर्वाणि; $K_3$ गिरींश्चैव; $B_2$ विचित्राणि; $M_1$ च पुण्यानि (for च रम्याणि).

**81** $^{a}$) Cf. $49^{c}$. $T_1$ $G_1$ $M_2$ अन्वेषती तु ($T_1$ स); $T_2$ $G_3$ $M_1$ अन्त्रेषंती तु; $G_{2.4}$ अन्वेषयंती (for °माणा). $B_{1.3}$ तं वीरं (for भर्तारं). — $^{b}$) $G_1$ वीरं (for रण-). — $^{c}$) $D_2$ वै (for च). $B_2$ Dc $D_{4.6}$ धर्मात्मानं कृतज्ञं च ($D_6$ कृतप्रज्ञं). — $^{d}$) $D_{2.3}$ सु- (for [इ]ह). $T_1$ चरामीह सुदुःखिता.

**82** $^{a}$) $K_2$ Dn $D_5$ रम्यं (for पुण्यं). — $^{b}$) $T_1$ $G_{1.2}$ $M_2$ महत् (for नृपः). — $G_4$ om. (hapl.) $82^{c}$–$84^{b}$. — $^{c}$) $G_1$ transp. भवेत् and प्राप्तः. — $^{d}$) S (except $M_2$; $G_4$ om.) नरा° (for जना°).

**83** $G_4$ om. 83 (cf. v.l. 82). — $^{a}$) $T_2$ $G_{2.3}$ $M_1$ तत्कृते°. $K_2$ अहो (for इदं). $K_{2.3}$ B D (except $D_{1-3}$) $M_2$ ब्रह्मन्; $T_1$ दुर्गं; $G_1$ दुःखं (for विप्राः). — $^{b}$) $K_1$ संप्राप्ता भृश°; $G_1$ प्राप्तं नाभृश°. — $^{c}$) $B_1$ रौद्रं (for घोरं). — $^{d}$) $D_5$ सिंहशार्दूल°; $G_1$ शार्दूलवृक°.

**84** $G_4$ om. $84^{ab}$ (cf. v.l. 82). — $^{b}$) B (except $B_3$) $D_{4.6}$ पश्यामि (for द्रक्ष्या°). — $^{d}$) $Ś_1$ K (except $K_2$) समापनात्; $D_{2.3}$ S विमोक्षणात्. — After 84, $K_4$ $D_{1.2}$ ins.:

275* नारीणामधमा नारी या भर्तुः प्राणसंक्षये ।
पश्चाज्जीवति निस्तेजाः कलेव शशिनो दिवा ।

**85** $^{a}$) $B_2$ न (for को). B $Dn_3$ $D_{4.6}$ हि (for नु). — $^{b}$) $K_3$ $G_2$ पुरुषोत्तमं.

**86** $^{a}$) $Ś_1$ K D (except $D_6$) $G_1$ तथा (for एवं). — $^{d}$) $Ś_1$ K D (except $D_{2-4.6}$) सत्यदर्शिनः.

C. 3. 2491
B. 3. 64. 92
K. 3. 61. 91

उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ८७
निषधानामधिपतिं नलं रिपुनिघातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ८८
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरश्रेष्ठं प्रशासन्तमरिंदमम् ॥ ८९
द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ९०
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तदा ॥ ९१
सा दृष्ट्वा महदाश्चर्यं विस्मिता *अभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ९२
किं नु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत् ।
क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ॥ ९३
क्व सा पुण्यजला रम्या नानाद्विजनिषेविता ।
नदी ते च नगा हृद्याः फलपुष्पोपशोभिताः ॥ ९४
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।
भर्तृशोकपरा दीना विवर्णवदनाभवत् ॥ ९५
सा गत्वाथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाशोकतरुं ततः ॥ ९६
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं तदा ।
पल्लवापीडितं हृद्यं विहंगैरनुनादितम् ॥ ९७
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे ।
आपीडैर्बहुभिर्भाति श्रीमान्द्रमिडराडिव ॥ ९८

---

**87** $^{d}$) $D_{1-3}$ पश्य° (for द्रक्ष्य°).

**88** $^{a}$) $T_2$ $G_{2-4}$ $M_1$ भर्तारं तु ($M_1$ ते) महाभागे. — $^{b}$) $Ś_1$ $D_1$ °विघातिनं; $K_1$ $D_{2.3}$ °विनाशनं; $K_2$ Dn $D_5$ °निपातिनं. — $^{c}$) $Ś_1$ नृपं धर्मवतां; $K_1$ सर्वधर्मभृतां. — $^{d}$) Dc S (except $G_1$) द्रष्टासि (for द्रक्ष्यसे).

**89** $^{b}$) $B_1$ Dc °समावृतं; $B_3$ $D_1$ $T_1$ $G_1$ $M_2$ °विभूषितं. — $^{c}$) $Ś_1$ तदेको; $G_1$ स्वमेव; $G_2$ $M_1$ तमेव. $K_{1.2}$ Dn $D_{2.3.5}$ $G_1$ नगरं श्रेष्ठं; B Dc $D_{4.6}$ °रं भूयः; $D_1$ च नरश्रेष्ठं. — $^{d}$) $D_3$ द्रक्ष्यसे विगतज्वरं (=88$^{d}$); $G_1$ प्रविशंतमरिंदमं.

**90** $^{c}$) T G एष्यसि (for द्रक्ष्यसि). — $^{d}$) $M_2$ कल्याणजननं नृपं.

**91** $^{a}$) $D_{2.3}$ नरश्रेष्ठ; $T_2$ G नलस्यैनां ($G_1$ °स्येमां). — $^{c}$) $Ś_1$****स्तापसास्ते; K D (except $D_{4.6}$) तापसांतर्हिताः सर्वे. — $^{d}$) $K_1$ ततः; $K_{2.4}$ Dn $D_{1.5}$ तथा (for तदा). $D_{2.3}$ साग्निहोत्रसमाश्रमाः.

**92** $^{a}$) $B_{1.3.4}$ प्रहृष्टा (for सा दृष्ट्वा). — $^{b}$) $Ś_1$ K $B_{1.3.4}$ Dc Dn $D_{1-3.5}$ ह्यभवत्; S त्व($G_1$ चा)भवत् (for *अभवत्). Dc $T_2$ $G_{2.3}$ M ततः (for तदा). $B_2$ $D_{4.6}$ प्रहृष्टा विस्मयान्विता. — $^{d}$) $Ś_1$ $K_{1.3}$ °सुतप्रिया; $T_1$ $G_1$ $M_2$ °स्नुषा नृप. — After 92, $T_1$ $G_1$ M ins.:

276* चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम् ।

**93** $^{b}$) Dc अथाभवत्; $T_1$ $G_1$ इहागतः.

**94** $^{b}$) $K_1$ नानापक्षि°; $K_2$ Dc Dn $D_{1.5}$ नदीद्विज°; $B_4$ नानाजन°. — $^{c}$) $K_2$ Dc Dn $D_{4.5}$ क्व नु (for नदी). $K_2$ $B_2$ Dn $D_5$ ते ह; $K_4$ $D_6$ च ते (by transp.); Dc तेद्य. $B_{2-4}$ पुण्याः; $D_{2.3}$ दिव्याः (for हृद्याः). $K_1$ नदी सुमहती हृद्या. — $^{d}$) $Ś_1$ $K_{1.4}$ $D_{1-3}$ सा($D_{1-3}$ शा)लवृक्षोपशोभिताः ($K_1$ °ता). — After 94, S (except $M_1$) ins.:

277* इत्येवं नरशार्दूल विस्मिता कमलेक्षणा ।

**95** Dc transp. 95$^{ab}$ and 95$^{cd}$. — $^{b}$) $K_{2.3}$ $B_2$ सुविस्मिता (for शुचि°). — $^{c}$) $Ś_1$ $K_1$ °पराधीना; T $G_{2-4}$ °वशा दीना; $G_1$ M °कृशा दीना. — $^{d}$) S विवर्णा परुषाभवत् ($G_1$ °र्णाभरणा तथा).

**96** $^{a}$) $K_4$ $T_1$ $G_1$ $M_2$ च (for [अ]थ). $Ś_1$ K (except $K_2$) $D_{1.3}$ $T_1$ परां (for [अ]परां). — $^{d}$) $K_3$ $B_2$ तदा (for ततः).

**97** $^{a}$) $Ś_1$ $K_4$ $D_1$ तरुं सा च; $K_1$ तरुं तं च; $D_{2.3}$ तरुं साथ (for तरुश्रेष्ठम्). — $^{b}$) $Ś_1$ $K_1$ [अ]प्यशोकं (for अशोकं). $Ś_1$ K Dn $D_{1-3.5}$ $M_2$ वने; $B_2$ ततः; Dc वनं; G (except $G_3$) तथा (for तदा). — $^{c}$) $K_3$ $B_3$ $T_2$ G (except $G_1$) $M_1$ °पीडनं. $T_1$ रम्यं (for हृद्यं). — $^{d}$) $Ś_1$ $K_{2.4}$ Dc $T_1$ G (except $G_3$) $M_1$ विहगैर् (for विहंगैर्). $K_3$ उप°; $B_{1.3}$ $D_{4.6}$ $T_1$ M अभि° (for अनु°).

**98** $D_1$ om. 98$^{ab}$. — $^{d}$) $Ś_1$ प्रमिडराड्; $K_1$ द्रमिणराड्; $K_2$ $B_4$ Dn $D_5$ पर्वतराड्; $K_3$ Dc $D_{2.6}$ $T_2$ $G_3$ द्रविडराड्; $K_4$ $B_{1-3}$ $D_4$ $D_{1.3}$ स द्रुमराड्. $G_1$ श्रीमद्भिर्पादपैर्वृतः. — After 98, $K_4$ $D_2$ ins.:

278* तमुवाच ततोऽशोकं विदर्भाधिपनन्दिनी ।
कृताञ्जलिपुटा दीना भर्तृदर्शनलालसा ।
[($L$. 1) $D_2$ समीपमुपसंगम्य विदर्भा°.]

On the other hand, $D_1$ ins. after 98:

279* तमुवाच महावृक्षं दमयन्ती तथागता ।

विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन ।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ ९९
नलं नामारिदमनं दमयन्त्याः प्रियं पतिम् ।
निषधानामधिपतिं दृष्टवानसि मे प्रियम् ॥ १००
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ १०१
यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक मम शोकविनाशनात् ॥ १०२
एवं साशोकवृक्षं तमार्ता त्रिः परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ १०३
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः ॥ १०४
कन्दरांश्च नितम्बांश्च नदांश्चाद्भुतदर्शनान् ।
ददर्श सा भीमसुता पतिमन्वेषती तदा ॥ १०५
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ १०६
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ॥ १०७
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम् ।
कूर्मग्राहझषाकीर्णां पुलिनद्वीपशोभिताम् ॥ १०८
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ॥ १०९
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ॥ ११० C. 3. 2514 B. 3. 64. 115 K. 3. 61. 115

---

Finally, T1 G1 M2 ins. after 98:

280* अशोक शोकापनुद शोकोपहतचेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियसंदर्शनाद्धि माम् ।

[ = Lines 5–6 of passage No. 794* of Ādi (p. 348)! — (L. 2) M2 कुरुष्व त्वं (for कुरु क्षिप्रं). T1 °संदर्शनेन मां. ]

**99** a) K1 S (except T2 G3) अशोकां (for वि°). K4 T1 मे; Dc1 मा (for मां). — c) K1 °भयाबा*; K4 Dn3 (by corr.) °भयाबाध; B3 °भयक्रोधं; D1 °भया चापि; T1 °भयाबाधः; M2 °भयां चैव. — d) D1–3 कच्चित्वं; D4. 6 कदाचित्; G4 कच्चित्तं. Dc T1 G1 नलं; D2 असि (for नृपम्).

**100** b) B (except B2) D4. 6 T1 G1 M2 प्रभुं (for पतिम्). — d) B2 D4. 6 मत्प्रियं; T2 G (except G1) मे पतिं.

**101** c) B D4. 6 दीनम्; M1 भीमम् (for वीरम्). — d) D2. 3 °ण्यं सहसागतं.

**102** b) K4 D1 अशोक मम; D2. 3 T1 M अशोकवर. Dc अशोक क्रमतः कुरु; G1 अशोक कुरु मां तथा. — d) K2 Dn D5 अशोकः शोकनाशनः; K3. 4 B D1–6 मम शोकविनाशन (B4 D1–3 °नः); M1 मम शोकं विनाशय.

**103** b) K2 Dn D5 वै (for त्रिः). T1 G1 उपगम्य; T2 G2–4 परिगृह्य (for परिगम्य). Ś1 K1 T2 G (except G1) M1 च (for ह). Dc परिगम्य जगाम ह; D2 आर्ताभ्यर्थ्यं गतान्यतः. — c) B D4. 6 दारुणतमं; T1 G1 M2 दारुणं देशं. — d) D2. 3 transp. देशं and भैमी. T1 G1 M2 वैदर्भी (G1 वैदेही) कमलेक्षणा.

**104** a) D2 वनानि (for नगान्). Ś1 D2. 4 एकान्; G4 एकं (for नैकान्). — b) Ś1 एकाश्च; D1 अनेकाः; D2 पर्वतान्; D3 सरांसि (for नैकाश्च). — c) D2. 3 °श्च वनखंडांश्च. — d) D1 अनेकान्; D2. 3 रम्यांश्च (for नैकांश्च).

**105** a) D2. 3 गुहान्रम्यान् (for नितम्बांश्च). — b) K3 corrupt; Dc नदीं°; D3 ह्रदां°; G1 नगां° (for नदां°). D1 om च. K2 B2 Dn D5. 6 T2 (before corr.) G2. 4 M1 नदीश्चाद्भुतदर्शनाः. — c) K2 ता; B1–3 D (except D1–3. 5) G1 तान्; T2 G2–4 M1 [ए]का (for सा). — d) B D4. 6 सती; T1 M2 शुभा; G1 सदा (for तदा).

**106** a) S (except G1 M1) सा गत्वा दूरमध्वानं. — b) K3 D4 सुविस्मिता (for शुचि°).

**107** b) T2 G2–4 शिवां (for शुभाम्). — d) Ś1 कंदिनीं; K1 कंदर्तीं (sic); Dc Dn3 T1 M ह्लादिनीं; T2 (by corr.) G2. 4 ह्रादिनीं; G1 ह्लादनैः (for ह्रदिनीं). Ś1 K1. 3 तापसैर्वृतां; T1 G1 M2 पादपैः°; T2 G3 वैतसैः°; M1 पक्षिसंकुलां.

**108** a) D2. 3 क्रौंचमिथुनैश्च; G1 °कारंडैश्च. — b) K4 B3 Dc D1–3. 5 S चक्रवाकोप(S °कैश्च)शोभितां. — c) B Dc D2–4. 6 °समा° (for °झषा°). — d) K2 Dn D5 विपुलद्वीप°; T2 G (except G1) M2 पुलिनद्वीपराजितां.

**109** a) G1 सु- (for [ए]व). — b) G1 M2 दमयंती (for नल°). T2 G तपस्विनी (G1 शुचिस्मिता) (for यश°). — c) K1 T1 G1 M2 उपसृत्य; K2 Dc Dn D1. 4–6 उपसर्पे (sic); K4 D3 उपासर्पद्. ❀ Cn: उपसर्पे उपससर्प। अभ्यासलोप आर्षः। ❀

**110** a) Ś1 K1. 3. 4 D1–3 उन्मत्तवद्भीमसुता. — c)

C. 3. 2515
B. 3. 64. 116
K. 3. 61. 116

तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित्तत्र विचुक्रुशुः ॥ १११
प्रहसन्ति स्म तां केचिदभ्यसूयन्त चापरे ।
चक्रुस्तस्यां दयां केचित्पप्रच्छुश्चापि भारत ॥ ११२
कासि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी ॥ ११३
वद सत्यं वनस्यास्य पर्वतस्याथ वा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ॥ ११४
यक्षी वा राक्षसी वा त्वमुताहोऽसि वराङ्गना ।
सर्वथा कुरु नः स्वस्ति रक्षस्वास्माननिन्दिते ॥ ११५
यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि त्वां वयं शरणं गताः ॥ ११६
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनदुःखिता ।
सार्थवाहं च सार्थं च जना ये चात्र केचन ॥ ११७
यूनः स्थविरबालाश्च सार्थस्य च पुरोगमाः ।
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ ११८
विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥ ११९

---

K3 कृशां विवर्णां मलिनां; Dc2 D1–4 कृशा विवर्णमलिना (D2. 3 °वदना).

**111** b) G1 विरूपां केपि दुद्रुवुः. — c) T1 तापपरा°; M2 भीताः परा° (for चिन्तापरा°). K2 Dn D5 जग्मुः (for तस्थुः).

**112** ab) D2. 3 केचित्तत्राभ्यसूयंति केचिन्निंदंति चापरे. — c) Ś1 K3 B1. 2 Dc D1 चक्रुस्तस्या; K2 Dn D5 अकुर्वंत; D2. 3 चक्रुः केचिद्; S कुर्वंत्यस्यां (G1 °त्यन्ये; G2 °त्यस्या; M1 °तोस्यां). D2 तस्यां; D3 तत्र (for केचित्). — d) K1 तां च; D3 चैव (for चापि).

**113** c) T1 चैते; G1 सर्वे; M2 चैव (for स्मेह). — d) T1 M2 नराः सार्थनि(T1 स्वार्थवि)वासिनः; T2 G2–4 वयं भीताश्च शोभने.

**114** a) T2 G3 देवता त्वं (for वद सत्यं). G4 देवतासीह सुभगे. — b) G4 त्वं वनस्य (for पर्वतस्य). K3 [अ]पि; B3 D2 T G2–4 [अ]स्य; G1 च (for [अ]थ). — d) K4 transp. त्वां and वयं. K2 D1 किं वा मृगयसे वने (= 113b).

**115** T1 om. 115–116. — a) Dc पन्नगी (for राक्षसी). B D4. 6 वासि; M2 वापि (for वा त्वम्). — b) K4 उताहो स्विद्; M2 त्वमुताहो (for उताहोऽसि). Dc सुरांगना. B3 D4. 6 T2 G M1 उताहो (G2. 4 °त वा) स्वित्सुरांगना. — d) K3 Dn2 D2. 5. 6 G1 रक्ष वा°; K4 Dc Dn1. n3 T2 G2–4 M2 रक्ष चा°; D1 रक्षया° (for रक्षस्वा°). B2 वरांगने (for अनिन्दिते). M1 त्वां वयं शरणं गताः (= 114d, 116d).

**116** T1 om. 116 (cf. v.l. 115). — a) T2 G2. 3 M1 सर्वशः; G1 सर्वतः; G4 सदृशः. G1 स्वार्थं (for सार्थः). D2. 3 यथायं सर्वसार्थश्च. — b) K3 D1 क्षेमः; D3 °मं (for °मी). B D4. 6 सर्वं; M2 क्षिप्रम् (for शीघ्रम्). T2 G क्षेमं गच्छेदशंकितः. — c) T2 G (except G1) त्रायस्व (for विधत्स्व). — d) = 114d. K D (except D4. 6) यथा श्रेयो हि नो भवेत् (K3 यथा श्रेयो भवेच्च नः).

**117** a) Ś1 D3 यथोक्ता. — b) K1 शुभानना; G1 शुचिस्मिता (for नृपा°). — c) Ś1 K (except K2) D1–3 सार्थं (for साध्वी). — d) K2 Dc Dn D5 °व्यसनपीडिता; B D3. 4. 6 G1 °व्यसनकर्शि(*or* °र्षि)ता; T1 M2 °शोकनिपीडिता; T2 G2–4 °दर्शनलालसा (cf. 118f). — e) D1. 3 S (except G1) °वाहश्च सार्थश्च. — f) Dc जना वा; D3 ये चान्ये (for जना ये). B D4. 6 तत्र; Dc येत्र; D3 वात्र; T2 G3 चास्य (for चात्र).

**118** a) Ś1 युवानः स्थविरबालाः; K1–3 Dc Dn D1. 5 T2 G2–4 युवस्थविरबाला(Dc °लां)श्च; K4 B3 D2. 4. 6 M यूनः स्थविरबालांश्च; D3 युवा स्थविरबालाश्च. — b) K4 [ए]व; S (except G1) [अ]स्य (for च). K3. 4 B Dc D2. 4. 6 M पुरोगमान्. — c) D2. 3 G1 विजानीध्वं. — e) D1 राजस्नुषां. G1 राजपत्नीं. — 118f = (var.) 3. 62. 1d.

**119** b) Ś1 K1 च मम (for राजा च). — After 119ab, K4 ins.:

281* क्व नु मां कितवश्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ।
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्योत्थितसर्गा न संशयः ।
क्व नु सा क्षुत्पिपासार्ता श्रान्ताराते तपस्विनी । [5]
स्मरन्ती तस्य मन्दस्य क्व वासायोपतिष्ठति ।

[L. 1–2 = (var.) 3. 67. 9. — L. 3–4 = (var.) 3. 68. 8abcd. — L. 5–6 = (var.) 3. 64. 10.]

— c) T1 G1 महाराज (for °भागस्).— d) Ś1 मृग्या°; D3 मृगा° (for मार्गा°). K3 corrupt.

यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पार्थिवशार्दूलममित्रगणसूदनम् ॥ १२०
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥ १२१
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ १२२
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कष्टे अमनुष्यनिषेविते ।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ १२३
साब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।
क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हथ ॥ १२४

सार्थवाह उवाच ।

सार्थोऽयं चेदिराजस्य सुबाहोः सत्यवादिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १२५

इति श्रीमहाभारते आरण्यकपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

# ६२

बृहदश्व उवाच ।

सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा ।
अगच्छत्तेन वै सार्धं भर्तृदर्शनलालसा ॥ १
अथ काले बहुतिथे वने महति दारुणे ।
तडागं सर्वतोभद्रं पद्मसौगन्धिकं महत् ॥ २
ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम् ।

C. 3. 2534
B. 3. 65. 3
K. 3. 62. 3

---

**120** $^{a}$) $B_{2}$ $D_{4.6}$ $M_{1}$ जानीथ (for °त). — $^{b}$) $D_{6}$ शंसथ. $Dc_{1}$ मत्; $Dc_{2}$ मां (for मे). $D_{3}$ पतिं (for प्रियम्). — $^{c}$) $D_{2.3}$ नृपं (for नलं). $Ś_{1}$ K D (except $D_{4.6}$) पुरुष°. — $^{d}$) $T_{2}$ $G_{3}$ °मर्दनं.

**121** $^{d}$) $T_{1}$ $G_{1}$ $M_{2}$ दमयंतीं नराधिप.

**123** $M_{2}$ om. 123 (along with $122^{bcd}$ and $124^{a}$). — $^{ab}$) $Ś_{1}$ $K_{1.4}$ $D_{1}$ $G_{4}$ कुंजरद्वीप°; $B_{1.2}$ Dc $D_{2-4.6}$ °द्वीपिमहिषाञ्शा(Dc °षं शा)र्दूल°; $T_{1}$ $G_{1}$ गोमायुकुंजरद्वीपिमहिषर्क्षमृगान्. S ($M_{2}$ om.) अहं (for अपि). — $^{cd}$) $K_{2}$ Dn $D_{5}$ कृत्स्ने; $K_{4}$ $D_{3}$ घोरे; $T_{2}$ G (except $G_{1}$) शून्ये (for कष्टे). To avoid the hiatus, all MSS. except $T_{2}$ $G_{3.4}$ $M_{1}$ ins. हि between the two halves of the line! — After $123^{cd}$, $K_{1}$ B D (except $D_{1-3.5}$) ins.:

282* ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने ।;

while $T_{2}$ $G_{2-4}$ $M_{1}$ ins.:

283* यतो वयं न पश्यामो नलं पार्थिवमत्र वै ।

— $^{e}$) $Ś_{1}$ $K_{1}$ यथा नो; T G ततोस्य ($T_{1}$ °यं; $G_{1}$ °नो). — $^{f}$) $K_{3}$ $Dc_{1}$ $D_{2}$ $T_{1}$ $G_{2.4}$ $M_{1}$ माणिभद्रः.

**124** $M_{2}$ om. $124^{a}$ (cf. v.l. 123). — $^{a}$) $G_{1}$ व्रजतः (for वणिजः). $K_{3}$ सार्थं (for सर्वान्). — $^{b}$) $K_{1}$ तद्वचः; $T_{1}$ $G_{1.2.4}$ तत्वतः (for तं ततः). — $^{d}$) $K_{2.4}$ Dn $D_{5}$ अर्हसि (for अर्हथ).

**125** $^{b}$) $Ś_{1}$ K Dn $D_{2.3.5.6}$ सत्यदर्शिनः; $D_{1}$ प्रियदर्शनः. — $^{d}$) B Dc $D_{4.6}$ नृवरा°; $G_{1}$ जनपा° (for मनुजा°).

Colophon om. in $Ś_{1}$ $K_{1}$. — *Major parvan:* $Dn_{2}$ T $G_{2-4}$ आरण्य. — *Sub-parvan:* N ($Ś_{1}$ $K_{1}$ om.) $T_{1}$ $G_{1}$ $M_{1}$ (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* $D_{2}$ नलावलोकने दमयंतीविलापः. — *Adhy. no.* (figures, words or both): Dn 64; $D_{1}$ 66; T G $M_{2}$ (after corr.) 61 (as in text); $M_{1}$ 62; $M_{2}$ (before corr.) 63. — *Śloka no.:* Dn 134.

## 62

☞ For stanzas 1–17, $K_{4}$ $D_{1-3}$ subst. a passage of 96 lines (forming by itself a separate adhy.) given in App. I (No. 10), a passage which is totally different in wording from the constituted text, but has on the other hand many lines in common with the $K_{2}$ Dn passage (in other words, with the Vulgate version); cf. passages No. 11–12 of the same App.

**1** $M_{2}$ om. $1^{c}$–$17^{d}$. — $^{c}$) $Ś_{1}$ $K_{1-3}$ Dc Dn $D_{5}$ जगाम सह तेनैव; B $D_{4.6}$ जगाम तेन ($B_{4}$ °मानेन) सार्थेन; $T_{1}$ अगच्छद्राजशार्दूल; $G_{1}$ अगच्छत्तेन राजेंद्र. — $^{d}$) $Ś_{1}$ $K_{1-3}$ Dc Dn $D_{5}$ सार्थेन पतिलालसा; $T_{1}$ $M_{1}$ दुःखशोकसमन्विता ($M_{1}$ °परायणा).

**2** $M_{2}$ om. 2 (cf. v.l. 1); $M_{1}$ om. 2–17. — $^{c}$) $Ś_{1}$ $K_{1}$ तडाकं; T G तटाकं. — $^{d}$) T G °सौगंधिकायुतं.

C. 3. 2534
B. 3. 65. 3
K. 3. 62. 3

बहुमूलफलोपेतं नानापक्षिगणैर्वृतम् ॥ ३
तं दृष्ट्वा मृष्टसलिलं मनोहरसुखावहम् ।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥ ४
संमते सार्थवाहस्य विविशुर्वनमुत्तमम् ।
उवास सार्थः सुमहान्वेलामासाद्य पश्चिमाम् ॥ ५
अथार्धरात्रसमये निःशब्दस्तिमिते तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
पानीयार्थं गिरिनदीं मदप्रस्रवणाविलाम् ॥ ६
मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
सुप्तं ममर्द सहसा चेष्टमानं महीतले ॥ ७
हाहारवं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रान्धा महतो भयात् ।
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता नराः ॥ ८
गोखरोष्ट्राश्वबहुलं पदातिजनसंकुलम् ।
भयार्तं धावमानं तत्परस्परहतं तदा ॥ ९
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।

---

**3** M om. 3 (cf. v.l. 1, 2). — c) Ś1 K1-3 B Dc Dn D5 °पुष्प° (for °मूल°). — d) Ś1 K1-3 Dc Dn D5 °पक्षिनिषेवितं; G1 °मृगगणैर्वृतं.

**4** M om. 4 (cf. v.l. 1, 2). — a) Ś1 K1-3 Dc Dn D5 निर्मलस्वादु°; B4 तं दृष्ट्वारण्य°. — b) Ś1 K2. 3 Dc Dn D5 मनोहारि सुशीतलं; K1 सुमनोहारि शीतलं; B1. 3. 4 D4. 6 मनोरमसुखावहं; B2 (m as in text) मनोहरसुखावृतं.

**5** M om. 5 (cf. v.l. 1, 2). — b) B3 G1 ददृशुर् (for विविशुर्). — c) B D4. 6 उवास स महासार्थः. — d) K1 गिरिम् (for वेलाम्). Ś1 शैलमासाद्य पश्चिमं; T G निशामासाद्य पद्मिनीं.

☞ For 6–10cd, D5 subst. a passage given in App. I (No. 11), which is a variant version of lines 13–96 of passage No. 10 of the same App.

**6** M om. 6 (cf. v.l. 1, 2). — b) Ś1 तथा; B D4 [ऽ]नघ (for तदा). T G निःशब्दे (T1 °ब्द-) तिमिरे तदा. — d) Ś1 K1 हस्तियूथ उपा°. — e) T G °तटात् (for °नदीं). Ś1 K1. 3 अथ सार्थं गिरिनिभा (Ś1 °भं). — f) Ś1 K1 मदप्रस्रवणा (K1 °विणो) गजाः; K3 °प्रश्राविणाविलाः; B1. 3 D4 T1 G1 °प्रस्रव(G1 °वि)णाविलं; T2 G2-4 °प्रस्रवणोल्बणं (G2. 4 °ह्वलं). — Dn1. n2 ins. after 6: D6, after 10:

284* अथापश्यत सार्थं तं सार्थजान्सुबहून्गजान् ।
ते तान्ग्राम्यगजान्दृष्ट्वा सर्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ।
तेषामापततां वेगः करिणां दुःसहोऽभवत् ।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ ।
स्पन्दतामपि नागानां मार्गा नष्टा वनोद्भवैः । ,

which in D6 is followed by passage No. 12 of App. I.

**7** M om. 7 (cf. v.l. 1, 2). — a) Ś1 K1 सार्थं (for मार्गं). T2 G1. 3. 4 निरुध्य (for सं°). G2 सुप्तं तं (for संसुप्तं). — b) Ś1 K1. 3 तीरमुत्तमं (K3 °रे); K2 Dc तीरउत्तरे (for सार्थमुत्तमम्). — c) K2 B2. 3 Dn1 D4. 6 स तं; G1 सुप्तान्. Ś1 K3 Dn ममर्दुः; K1 मम*. T2 G3. 4 तरसा. — d) Ś1 K1 T G (except G1) वेष्ट° (for चेष्ट°).

**8** M om. 8 (cf. v.l. 1, 2). — a) Ś1 K3 Dc2 हाहारावं; K2 B3. 4 Dn G1 हाहाकारं; Dc1 दाहाहाराः; T G2-4 महारवं. K3 Dc1 विमुंचतः; D4. 6 वियुंजंतः. — T1 om. (hapl.) 8b–10a. — b) T2 G3. 4 बुध्यंत; G1 वणिजः; G2 वध्यंते (for सार्थिकाः). K1 साक्षिकाः शरणैषिणः. — d) T2 G निद्रया (for निद्रान्धा). Ś1 K1-3 Dc Dn बहवो (for महतो). Dn [ऽ]भवन् (for भयात्) ! — e) G1 नखैः (for करैः). — f) Dc गजैर् (for हता). Ś1 K1-3 B2 Dn1. n2 गजैः; Dc हताः (for नराः). T2 G केचित्पद्भिर्नरा हताः.

**9** T1 M om. 9 (cf. v.l. 1, 2, 8). — a) Ś1 K1. 3 Dn निहतोष्ट्राश्वबहुलाः; K2 गोखरोष्ट्रांश्च बहुलान्; Dc गोखरोष्ट्राश्वबहुलाः. — b) Ś1 °जनवत्सलाः; K1-3 Dc Dn °जन-(Dc °ध्वज)संकुलाः; B1. 3. 4 D4. 6 °नरसंकुलं. — c) Ś1 K3 भयार्ता धावमानाश्च; K1. 2 B4 Dc Dn भयादाधावमानाश्च (B4 °स्ते); B1. 2 D4 भयार्तमाद्रवत्सार्थः (D4 °न्सर्वे); B3 D6 °र्तमद्रवत्सर्वे. — d) Ś1 K1-3 B4 Dc Dn °हतास्. T2 G तथा (for तदा).

**10** M om. 10 (cf. v.l. 1, 2); T1 om. 10a (cf. v.l. 8). — a) B1. 4 D4. 6 कष्टां वाचं; B2. 3 कष्टा वाचो; T2 G (except G1) घोरं नादं. G4 प्र- (for वि-). — c) K2 (corrupt) वृक्षेथासज्य संतुष्टाः; B Dn D4. 6 वृक्षमा(Dn वृक्षेष्वा)रुह्य संरब्धाः; Dc वृक्षेथारुह्य संविग्नाः. — K2 Dn ins. after 10cd: D5, before 10ef:

285* एवं प्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।

— e) K2 Dn D5 राजन् (for तथा). K2 Dn T G विनिहतं (for तन्नि°). — f) K3 समस्तं (for समृद्धं). G1 सार्थ-

वृक्षेष्वासज्य संभग्नाः पतिता विषमेषु च ।
तथा तन्निहतं सर्वं समृद्धं सार्थमण्डलम् ॥ १०
अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ।
वनगुल्माद्विनिष्क्रम्य शोचन्तो वैशसं कृतम् ।
भ्रातरं पितरं पुत्रं सखायं च जनाधिप ॥ ११
अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतम् ।
योऽपि मे निर्जनेऽरण्ये संप्राप्तोऽयं जनार्णवः ।
हतोऽयं हस्तियूथेन मन्दभाग्यान्ममैव तु ॥ १२
प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम् ।
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ॥ १३
यन्नाहमद्य मृदिता हस्तियूथेन दुःखिता ।
न ह्यदैवकृतं किंचिन्नराणामिह विद्यते ॥ १४
न च मे बालभावेऽपि किंचिद्व्यपकृतं कृतम् ।
कर्मणा मनसा वाचा यदिदं दुःखमागतम् ॥ १५
मन्ये स्वयंवरकृते लोकपालाः समागताः ।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः ।
नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम् ॥ १६
एवमादीनि दुःखानि सा विलप्य वराङ्गना ।
हतशिष्टैः सह तदा ब्राह्मणैर्वेदपारगैः ।
अगच्छद्राजशार्दूल दुःखशोकपरायणा ॥ १७
गच्छन्ती सा चिरात्कालात्पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यवादिनः ।
वस्त्रार्धकर्तसंवीता प्रविवेश पुरोत्तमम् ॥ १८
तां विवर्णां कृशां दीनां मुक्तकेशीममार्जनाम् ।

C. 3. 2577
B. 3. 65. 46
K. 3. 62. 47

---

वाहं समंडलं. — After 10, D$_6$ ins. 284*. — A passage of 37 lines given in App. I (No. 12) is ins. in K$_2$ Dn after 10; in D$_6$, after 284*. Cf. Holtzmann, *Das Mahābhārata*, 3. 70.

**11** M om. 11 (cf. v.l. 1, 2). — $^a$) Dc Dn$_3$ तथा° (for अथा°). — $^b$) K$_2$ B D$_{4.6}$ T$_1$ G$_2$ हतशिष्टो जन(K$_2$ °ष्टजन-; T$_1$ °ष्टा जन-; G$_2$ °ष्टजना)स्तदा. — $^c$) Ś$_1$ K$_{1.3}$ D$_5$ तस्माद्देशाद्; K$_2$ Dc देशात्तस्माद्; B D$_{4.6}$ वनदुर्गाद् (for वनगुल्माद्). D$_{4.6}$ विनिःसृत्य. — $^d$) Ś$_1$ K$_3$ शोचंस्ते; K$_1$ ह्यशोचन्; K$_2$ B$_{1.4}$ Dc$_1$ Dn$_1$ D$_5$ G$_4$ शोचंते; B$_{2.3}$ D$_{4.6}$ शुशोच; Dc$_2$ प्रोचुस्ते (for शोचन्तो). — $^{ef}$) G$_1$ दयितं (for पितरं), and पितरं (for सखायं). Ś$_1$ K$_{1-3}$ Dn D$_5$ T G$_3$ नरा° (for जना°). — After 11, T G ins.:

286* हन्यमाने तथा सार्थे दमयन्ती शुचिस्मिता ।
ब्राह्मणैः सहिता तत्र वने तु न विनाशिता ।

**12** M om. 12 (cf. v.l. 1, 2). — $^b$) T$_1$ एतद् (for नु मे). K$_1$ वैशसं (for दुष्कृतं). — G$_1$ om. (hapl.) 12$^c$–15$^b$. — $^d$) Ś$_1$ [ऽ]स्मि (for ऽयं). — $^e$) Ś$_1$ K$_{1-3}$ Dc Dn D$_5$ स हतो (for हतोऽयं). — $^f$) B D$_{4.6}$ T$_2$ G$_3$ मंदभाग्यं. K$_2$ B Dn D$_{4.6}$ तत्; K$_3$ च (for तु).

**13** G$_1$ M om. 13 (cf. v.l. 12, 1, 2). — $^b$) Ś$_1$ K$_{1-3}$ Dc Dn D$_5$ नूनमद्यापि वै मया. — $^c$) Dc$_1$ T$_2$ G (G$_1$ om.) °काले; Dn$_{1.n3}$ (by corr.) D$_{4.6}$ T$_1$ °कालं.

**14** G$_1$ M om. 14 (cf. v.l. 12, 1, 2). — $^a$) Dn D$_5$ या (for यन्). — $^c$) T G (G$_1$ om.) नान्यद् (for न हि). Ś$_1$ K$_2$ [अ]देवकृतं; T G (G$_1$ om.) दै(T$_1$ दे)वकृतात्. — $^d$) K$_3$ B D$_{4.6}$ दृश्य° (for विद्य°).

**15** M om. 15 (cf. v.l. 1, 2); G$_1$ om. 15$^{ab}$ (cf. v.l. 12). — $^a$) K$_3$ हि (for च). — $^b$) Ś$_1$ अप°; K$_2$ Dn D$_5$ पाप° (for व्यप°).

**16** M om. 16 (cf. v.l. 1, 2). — $^c$) Dc तेषां नूनं (by transp.).

**17** M$_1$ om. 17; M$_2$ om. 17$^{abcd}$ (cf. v.l. 1, 2). — $^a$) Ś$_1$ K$_{1-3}$ Dc Dn D$_{4.5}$ दुःखार्ता; T$_1$ दुःखेन (for दुःखानि). — $^b$) Dc विलप्य च (for सा विलप्य). K$_1$ वरानना. — After 17$^{ab}$, K$_2$ Dn D$_5$ ins.:

287* प्रलापानि तदा तानि दमयन्ती पतिव्रता ।

— $^c$) Ś$_1$ K$_{1-3}$ Dc Dn D$_5$ हतशेषैः. — $^e$) B$_1$ अगमद्; M$_2$ आगच्छद्. — $^f$) Ś$_1$ K$_{1-3}$ B Dc Dn D$_{4-6}$ चंद्रले-(B$_{1.3.4}$ D$_{4.6}$ विद्युल्ले)खेव शारदी; M$_2$ दुःखशोकसमन्विता.

**18** Before 18, D$_{1-3}$ ins.:

288*　　बृहदश्व उवाच ।
एवं सा दुःखसंतप्ता भर्तृव्यसनकर्शिता ।

— $^a$) K$_4$ Dn$_3$ M$_1$ गच्छती. K$_4$ D$_{1-3}$ न- (for सा). K$_{2.4}$ Dn D$_{1-3.5}$ बाला (for कालात्). — $^b$) D$_2$ बृहत् (for महत्). — $^c$) Dc चेदिराष्ट्रस्य. — $^d$) Ś$_1$ K (except K$_3$) Dn D$_{1-3.5}$ सत्यदर्शिनः. — For 18$^{cd}$, cf. 3. 61. 125$^{ab}$. — After 18$^{cd}$, S ins.:

289* सा तु तच्चारुसर्वाङ्गी सुबाहोस्तुङ्गगोपुरम् ।

— $^e$) K$_1$ M वस्त्रावकर्त°; K$_2$ Dn D$_5$ अथ वस्त्रार्ध°; K$_3$ Dc एकवस्त्रार्ध°; K$_4$ D$_{1-3}$ कृत्तवस्त्रार्ध°; B D$_{4.6}$ वस्त्रार्धकाय°; T G वस्त्रार्धेन च (T$_1$ सु-) संवीता.

C. 3. 2578
B. 3. 65. 47
K. 3. 62. 47

उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥ १९
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्ततो बाला ग्रामिपुत्राः कुतूहलात् ॥ २०
सा तैः परिवृतागच्छत्समीपं राजवेश्मनः ।
तां प्रासादगतापश्यद्राजमाता जनैर्वृताम् ॥ २१
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ॥ २२
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा ॥ २३
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ २४
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ २५
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ॥ २६
असंख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।
भर्तारमपि तं वीरं छायेवानपगा सदा ॥ २७
तस्य दैवात्प्रसङ्गोऽभूदतिमात्रं स देवने ।
द्यूते स निर्जितश्चैव वनमेकोऽभ्युपेयिवान् ॥ २८
तमेकवसनं वीरमुन्मत्तमिव विह्वलम् ।

---

**19** a) K2 Dn D5 विह्वलां (for विवर्णां). — b) K3 M1 मुक्तकेशाम्. Ś1 K Dc Dn D1–3. 5 अमार्जितां; B1. 3. 4 वरांगनां; B2 D4. 6 वराननां (for अमार्जनाम्). T1 G2 M2 मलिनां मुक्तमूर्धजां.

**20** a) M1 निर्विशतीं. K4 तदा (for तु तां). T2 G (except G1) तां तु प्रविशतीं दृष्ट्वा. — b) Ś1 K (except K2) D1–3 °पुरं. — c) Ś1 K D (except D6) तत्र (for ततो). — d) Ś1 राजपुत्र्यः; K1–3 राजपुत्राः; K4 D1–3 राजपुत्रीं; D4 T1 M1 ग्रामपुत्राः; T2 (by corr.) G3 पौरपुत्राः; G1 राजपुत्रां; G2. 4 M2 ग्राम्यपुत्राः.

**21** d) B D4. 6 transp. जनैः and वृतां. — After 21, K1–3 B D (except D1. 2) ins.:

290* धात्रीमुवाच गच्छैनामानयेह ममान्तिकम् ।
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी ।
यादृग्रूपां च पश्यामि विद्योतयति मे गृहम् ।
उन्मत्तवेषप्रच्छन्ना श्रीरिवायतलोचना ।

[(L. 1) K2 D5 चैवैनाम्; Dc चं इमाम्; D3 गच्छेमाम् (for गैच्छनाम्). K3 [ए]तां; B D4. 6 [इ]ति (for [इ]ह). — (L. 2) K1. 3 क्लेश्यते; B2 क्लिष्यते; B3 कृष्यते (for क्लिश्यते). B1–3 Dc2 D4. 6 [ऽ]नाथा (for बाला). B4 Dc1 जनैरा(Dc1 °नेना)क्लिश्यतेनाथा. — (L. 3) K2 B2 Dc Dn D5 तादृग्रूपं (B2 Dc °पां). — (L. 4) K1 B उन्मत्तवेश°; K2 Dn D5 उन्मत्तवेषा कल्याणी. Dc श्रीरिवोत्पललोचना.]

**22** a) Ś1 K4 D1–3 तं; K1 तां (for सा). Ś1 K1 D1. 2 [अ]थ; K2 तु; K4 च; Dc तत्; S तां (for तं). — c) K2 D4. 6 आरोह्य; B3. 4 आरुह्य (for आरोप्य).

**23** a) K2 D5 एवमप्यशुभे काले. — c) D5 नभो- (for भासि). — d) D1 कस्य कस्य; T2 G1. 3. 4 (by transp.) कस्य कासि. K2 D5 भाविनि; D1 कन्यके (for कस्य वा).

**24** a) B D6 S (except G1) च (for हि). — c) D2. 3 असह्यं यं नरेभ्यस्त्वं. — d) D1–3 °र्षभे (for °प्रभे).

**25** a) K3 transp. श्रुत्वा and तस्याः. — c) Ś1 मानुष्यहं विजा°.

**26** a) K (except K4) D2. 5. 6 T2 (before corr.) G2. 4 M1 सैरंध्री-; B Dc D4 सैरिंध्रीं (spelling seen in the Virāṭa also). Ś1 K (except K2) D1–3. 5 व्रतसंपन्नां. — b) Ś1 यथार्हां; K4 D1 यथार्हं; D2. 3 यथार्हे (for भुजिष्यां). B2 कामचारिणीं. K3 भुजिष्या °वासिनी. — c) B1. 4 D4. 6 °शिनीम् (for °शनाम्). — d) Ś1 °प्रतिश्रयात्; G1 °तनाश्रयां.

**27** c) Ś1 भर्ताहम्; K1 तथाहम्; K2 B Dn D4. 6 M1 (*inf. lin.*) भक्ताहम् (for भर्तारम्). K1 अनु (for अपि). T2 G2–4 अहं चानुगता वीरं. — d) G1 सीतेव (for छायेव). K2. 4 B3 Dn D1. 2. 5 G1 M1 [अ]नुगता (for [अ]नपगा). K2 Dn D5 पथि (for सदा). K3 छायेव अनुगा सदा; B1. 2. 4 D4. 6 छायेवानपगामिनी. — M2 (which om. $28^{a}$–$29^{b}$) ins. 291* after 27.

**28** M2 om. $28^{a}$–$29^{b}$. — b) K2 B1 Dn D5 सु-; D1–3 S (M2 om.) हि (for स्म). — c) Dc वि- (for स). — d) K2 Dn D5 °मेक उपेयिवान्.

**29** M2 om. $29^{ab}$ (cf. v.l. 28). — a) T2 G2–4 छन्नम् (for वीरम्). G1 तमेकमवनीवीरं. — b) T2 G (except G1) अति- (for इव). — T1 G1 ins. after $29^{ab}$: M2 (which om. $28^{a}$–$29^{b}$) ins. after 27:

291* स केनचिदमेयात्मा कारणेन वराङ्गने ।
दुःखितः सर्वमुत्सृज्य प्रविवेश महावनम् ।
ततस्तं दुःखितं दृष्ट्वा प्रविशन्तं च काननम् ।

आश्वासयन्ती भर्तारमहमन्वगमं वनम् ॥ २९
स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे ।
क्षुत्परीतः सुविमनास्तदप्येकं व्यसर्जयत् ॥ ३०
तमेकवसनं नग्नमुन्मत्तं गतचेतसम् ।
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा ॥ ३१
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम् ॥ ३२
तं मार्गमाणा भर्तारं दह्यमाना दिनक्षपाः ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणधनेश्वरम् ॥ ३३
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताब्रवीदार्तां भैमीमार्ततरा स्वयम् ॥ ३४
वसस्व मयि कल्याणि प्रीतिर्मे त्वयि वर्तते ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ३५
अथ वा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ३६
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् ।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ३७
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।
न चाहं पुरुषानन्यान्संभाषेयं कथंचन ॥ ३८
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ॥ ३९
यद्येवमिह कर्तव्यं वसाम्यहमसंशयम् ।

C. 3. 2601
B. 3. 65. 70
K. 3. 62. 71

— [d]) K2 B2 Dn D5 G1 अप्यगमं; T2 G2–4 M1 अप्यागता (for अन्व°). B D4 पतिं; D5 प्रति; T1 M2 तदा (for वनम्).

**30** [a]) B2–4 D4. 6 T1 G1 M पुनर् (for वने). T2 G2–4 महारण्ये (for वने वीरः). — [c]) Ś1 K2 Dn D2. 3. 5 T1 G1. 2 M2 तु; K1. 3 B4 स (for सु-). — [d]) K1 D4 तदाप्येकं; K3 वस्त्रमेकं; D1 तदा मां स; D5 मामप्येकं; S (except M1) वासश्चैकं. K1 विसर्जयेत्; K3. 4 G1 विसर्जयत्; D3 व्यसर्जयेत्. D2 तदाप्येनो विनिर्गतः.

**31** [a]) K1 D5 S (except G1 M2) तमेकवसना. D1 वीरम् (for नग्नम्). — [b]) Ś1 lacuna; K Dc Dn D1–3. 5 उन्मत्तवदचेतसं (K1 D3 °नं); B3. 4 G1 M1 उन्मत्तं ग(M1 °त्ता ह)तचेतनं. — [d]) D2 अनुयामि; D3 न स्वपिमि; D5 ह्यनुयामि (for न स्वपामि). K3. 4 निशां. K2. 3 Dc2 Dn D5 तदा (for सदा).

**32** [b]) K1 मा; K3 D2. 3 स (for मां). — [d]) S (except G1) अनागसीं.

**33** [b]) K1 गणयंती (for दह्य°). K3 D5 दिनक्षयं; K4 °क्षिपां; B2 Dn D4. 6 T2 G M1 दिवानिशं; B3 T1 दिनक्षपं; D1. 2 °क्षिपं; M2 °क्षपां. — After 33[ab], K1 B D (except D1–3. 5) ins.:

292* साहं कमलगर्भाभमपश्यन्ती हृदि प्रियम्।

— [d]) Ś1 K D (except D4. 6) प्रियं प्राणेश्वरं प्रभुं. — After 33, S (except M1) ins.:

293* इत्युक्त्वा सानवद्याङ्गी राजमातरमच्युत।
स्थिताश्रुपरिपूर्णाक्षी वेपमाना सुदुःखिता।

**34** [c]) Ś1 K1–3. B2–4 Dn D1. 3. 4. 6 आर्ता (for आर्तां). — [d]) K2 D (except D4. 5) आर्तस्वरां; K3. 4 T1 M2 °स्वरा; B3. 4 °तरां. D1 भृशं (for स्वयम्). Ś1 K1 भैमीमार्ततरस्वनां; T2 G (except G1) आर्ता भैमीं स्वयं तदा.

**35** [a]) K4 D1–3 वस त्वं मयि; T2 G (except G1) वस त्वमिह. — [b]) Ś1 K D (except D4. 6) परमा त्वयि; B2 त्वयि वर्धते. — D3 om. (hapl.) 35[d]–36[c].

**36** D3 om. 36[abc] (cf. v.l. 35). — [a]) K2 B D (except D1. 2; D3 om.) M1 अपि (for अथ). B3 D4. 6 च (for वा). G1 सोयम् (for स्वयम्). — [b]) B (except B2) D4. 6 M1 अचेतनः; G1 ततस्ततः (for इत°). — [c]) G इह वै वसितं भद्रे. — [d]) D1–3 भर्तारमनु(D2 °मुप)लप्स्यसि; G1 लब्ध्वा भर्तारमाप्स्यसि.

**38** Cf. 4. 8. 29, 32. — [a]) K2 D3. 4 उत्सृष्टं (for उच्छिष्टं). T2 G2. 3 न च; G4 न तु (for नैव). — [d]) Ś1 आभाष्येयं; K1. 3. 4 Dc D1. 4 आभाषेयं; K2 Dn D2. 3. 5 प्रभाषेयं. K1 S कदाचन.

**39** [a]) K4 (m as in text) प्रब्रवीद् (for प्रार्थयेद्). — [b]) K3 दूष्य°; D1 M1 वध्य° (for दण्ड्य°). D2. 3 पुनर् (for पुमान्). Ś1 क्वचित् (for भवेत्). — After 39[ab], K1. 2 B D (except D1–3) ins.:

294* वध्यश्च तेऽसकृन्मन्द इति मे व्रतमाहितम्।

— [c]) Ś1 K1 D1 °र्थे च; K3 °र्थे च; K4 °र्थं हि; G2 °र्थाय. — [d]) K1 पृच्छेयं; B1. 2 Dc2 पश्येहं; B4 यजेयं; D2. 3 प्रेषये.

**40** [a]) Ś1 अद्यैव° (for यद्येव°). K2 Dn D5 वत्स्यामि; S वस्तव्यं (for कर्तव्यं). — [b]) B D4. 6 वत्स्या° (for वसा°). K2 Dn D5 त्वत्सकाशे न संशयः. — [c]) B2 ततोन्यथा; Dc2

C. 3. 2602
B. 3. 65. 71
K. 3. 62. 71

अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित् ॥ ४०
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ॥ ४१
एवमुक्त्वा ततो भैमीं राजमाता विशां पते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ४२
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
एतया सह मोदस्व निरुद्विग्नमनाः स्वयम् ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## ६३

बृहदश्व उवाच ।
उत्सृज्य दमयन्तीं तु नलो राजा विशां पते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ १
तत्र शुश्राव मध्येऽग्नौ शब्दं भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ २
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।

---

M2 अथोन्यथा. B2 D4. 6 वासे. — [d]) G2 रोच° (for वर्त°). B1. 2 Dc D4. 6 हृदयं.

**41** [a]) T G (except G1) इत्युक्ता दमयंत्या तु.

**43** [a]) B (as usual) सैरिंध्रीम्. K4 B1–3 D1–4. 6 अभि(K4 D1 °नु)जानीहि; Dc2 अवजानीषे. — After 43[ab], K1 ins. 296*. — K2 B D (except D1–3) ins. after 43[ab]: K1, after 43[cd]:

295* वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ।
[ K1 भविष्यति (for भवत्वियम्). ]

— K1 reads 43[cd] after 296*. — [d]) K2. 3 Dc Dn D5 सदा (for स्वयम्). Ś1 K4 D1–3 निरुद्विग्नमनामयं; K1 °द्वेगमनाः सदा; B4 D4. 6 °द्विग्ना यथासुखं. — K2 B Dn D4. 6 ins. after 43 : K1, after 43[ab]:

296* ततः परमसंहृष्टा सुनन्दा गृहमागमत् ।
दमयन्तीमुपादाय सखीभिः परिवारिता ।
सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत ।
सर्वकामैः सुविहितैर्निरुद्वेगावसत्तदा ।

On the other hand, Dc (Dc2 om. lines 3–4) D5 ins. after 43 :

297* ततः सुनन्दा राजेन्द्र संप्रहृष्टमनाकृती ।
सैरन्ध्रीसहितागच्छत्स्वमेवावसथं तदा ।
ततः सुनन्दया सार्धं दमयन्त्यवसत्सुखम् ।
सर्वकामैः समुदिता पतिदर्शनलालसा ।

And finally, S ins. after 43 :

298* सह सा न्यवसद्राजन्राजपुत्र्या सुनन्दया ।
चिन्तयन्ती नलं वीरमनिशं वामलोचना ।

Colophon om. in D2. 3. Dn2 has a lacuna in place of it. — *Major parvan :* Ś1 K1 T G2–4 आरण्य. — *Sub-parvan :* N (except Dn2; D2. 3 om.) T G1. 3 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both): Dn1 (*inf. lin.*). n3 65; D1 68; T G M2 (after corr.) 62 (as in text); M1 63; M2 (before corr.) 64. — *Śloka no. :* Dn 74.

## 63

**1** After the ref., D1 ins.:

299* नलस्य चरितं राजञ्छृणु मे वदतोऽद्भुतम् ।

— [ab]) T1 विसृज्य (for उत्सृज्य). T2 G2–4 उत्सृज्य तु नलो राजा दमयन्तीं विशां पते. — [d]) T2 G2–4 विजने (for गहने).

**2** [a]) K2 T1 ततः; B D4. 6 अथ (for तत्र). K2 Dn D5 शब्दं वै; D1. 3 T1. 2 (by corr.) G1. 2. 4 M मध्येग्नेः (for मध्येऽग्नौ). — [b]) K2 Dn D5 मध्ये; T1 इदं (for शब्दं). S (except G1 M1) सत्व° (for भूत°). — [c]) Ś1 K2. 3 अभिधावन्; K1 D3 अभ्यधावन्; G1. 4 अभिधाय (for अभिधाव).

**3** K1 om. 3. — [a]) G1 नलेनोक्तः (for नलश्चोक्त्वा). — [b]) Ś1 प्रविश्य तत्; K3 G4 प्रविश्य तां; K4 प्रजाधिप; Dc T1 G1 M प्रविश्य सः; D4. 6 प्रतिश्रुतं. D2. 3 मध्येग्नेः प्रविवेश ह. — [c]) T1 M1 नागराजं तु; G1 M2 °राजं तं. — [d]) T1 G1 M2 पर्वतोपमं; M1 मंडलीकृतं.

**4** [a]) M1 पन्नगः (for स नागः). — [c]) K2 Dn D5

उवाच विद्धि मां राजन्नागं कर्कोटकं नृप ॥ ४
मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः ।
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ५
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ६
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः ।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ७
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायादुद्देशं दाववर्जितम् ॥ ८
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ॥ ९
पदानि गणयन्गच्छ स्वानि नैषध कानिचित् ।
तत्र तेऽहं महाराज श्रेयो धास्यामि यत्परम् ॥ १०
ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ ११
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श च महीपतिः ॥ १२
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वा विद्युर्जना इति ॥ १३
यत्कृते चासि विकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ १४
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति ।
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति ॥ १५
अनागा येन निकृतस्त्वमनर्हो जनाधिप ।

C. 3. 2624
B. 3. 66. 17
K. 3. 63. 17

transp. विद्धि and मां. B3. 4 S नाम्ना (for राजन्). — [d]) Here and below, S (as usual) कार्को° (for कर्को°).

**5** [a]) K2 प्रदष्टो; K3 (marg. *sec. m.* as in text) °दग्धो; D5 °दष्टो. K3m B Dn D3. 6 महर्षिर्; K4 विप्रर्षिर्; G1 राजर्षिर् (for ब्रह्मर्षिर्). — [b]) K2 D5 नीरागः; K3m B D (except D1. 2) नारदः (for अनागाः). G1 वीरनागा महातपाः. ꕥ Cn : मया प्रलब्धो ब्रह्मर्षिर्नारद इति पाठान्तरम्। ꕥ — [c]) K4 तेनेमां प्रापितोवस्थां. — After 5, K1. 2 B D (except D1–3. 5) ins.:

300* तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् ।
इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ।

[(L. 1) B1m Dc एति (for एव). K1 B3. 4 D4 नरः (for नलः).]

**6** [a]) Ś1 वि- (for न). K1. 2 Dn D5 शक्तोस्मि (for शक्नोमि). — [b]) Ś1 मंदाद् (for पदाद्). — [c]) K4 D1. 2 उपदेश्यामि. G1 भूयस् (for श्रेयस्). — [d]) K3 D1 T2 G2–4 अर्हसि. B1. 3. 4 D4. 6 नो; T1 तव्; M1 मा (for मां). T G2–4 प्रभो (for भवान्).

**8** [d]) K2 B1 Dn D5 देशं दावविवर्जितं.

**9** [a]) D1 आक्रोशादेशम्; D3 (*sup. lin.*) आक्रोशद्देशम्; T G2. 3 M आकाशं देशम्. T2 (marg. *sec. m.*) अन्यं देशं समासाद्य. — [c]) D2 G1 तं नागं; T1 M2 नृपतिं. — [d]) T1 M2 नागो वचनमब्रवीत्.

**10** [a]) Dc नागं (for गच्छ). — [c]) Ś1 K B2. 4 Dn D1–3. 5 महाबाहो. — [d]) G1 भूयो (cf. v.l. 6). Ś1 K1. 3 T G (except G4) दास्यामि. T1 G1. 2 M1 तत्परं.

**12** [a]) G1 तस्माद् (for तस्थौ). — [d]) Ś1 K1–3 Dn D5 G1 ददर्श स; D3 स ददर्श (for ददर्श च).

**13** [a]) K1 S कार्को°. — [b]) T1 G1. 4 इदम् (for नलम्). — [d]) Ś1 K1 D4 G2. 4 M1 त्वा (for त्वां). — After 13, D1 ins.:

301* कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ।,

*repeating* the phalaśruti after 3. 78. 9 (q.v.).

**14** [a]) Ś1 K4 D1. 5 चापि (for चासि). Ś1 संसक्तो; K1–3 D2. 5 संयुक्तो; K3m. 4 B Dc Dn D4. 6 निकृतो; D1 संतप्तो. D3 यत्कृते दंशसंयुक्तो. — [c]) Ś1 K1 D3 G1 च; D6 तन् (for स). — [d]) B1. 3 S (by transp.) दुःखं त्वयि. Ś1 K1 Dc निवत्स्यैति.

**15** Ś1 K1. 4 D5 om. (hapl.) 15. — [a]) K2 संवृतं गात्रं. — [b]) B1 T2 G1. 3 त्वं (for त्वां). K2 विमोक्षसि; K3 B1 T2 G3 °क्ष्यसे; B2 D4 विमुंचति; Dc D1 T1 G1. 2. 4 M विमोक्ष्यते; Dn2 °क्ष्यसि. — [c]) T G1. 3. 4 तु त्वां; G2 त्वां न; M1 तु त्वा; M2 कृत्वा (for त्वयि). — [d]) S क्लेशी स्विन् (for दुःखं वै). B2 त्वयि (for वै स). K2 समवत्स्यति; B4 संनिवत्स्यति; Dc स निवत्स्यते; T G2. 3 स नियोक्ष्यति; G1 संनियोक्ष्यते; G4 M1 संनियोक्ष्यति; M2 स नियोक्ष्यते.

**16** [a]) Dc2 निष्क्रांतस; D5 M2 विकृतस् (for निकृतस्). — [b]) T1 M अनेन; G1 मया हि (for अनर्हो). B D4. 6 S नराधिप. — [c]) K2 D5 त्वं; B2 T1 त्वां; G2 [अ]य (for तं). D1 क्रोधादन्यमचित्ता त्वं; G1 क्रोधादसूयता राजन्. — [d])

C. 3. 2624
B. 3. 66. 17
K. 3. 63. 17

क्रोधादसूययित्वा तं रक्षा मे भवतः कृता ॥ १६
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोऽपि वा ।
ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ॥ १७
राजन्विषनिमित्ता च न ते पीडा भविष्यति ।
संग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ १८
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ।
अयोध्यां नगरीं रम्यामद्यैव निषधेश्वर ॥ १९
स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै ।
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति ॥ २०
भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा ।
समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः ।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते ॥ २१
स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः ॥ २२
अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रददावस्मै दिव्यं वासोयुगं तदा ॥ २३
एवं नलं समादिश्य वासो दत्त्वा च कौरव ।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

# ६४

बृहदश्व उवाच ।
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥ १
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।

---

D1 वै; G1 तु; M2 ते (for मे).

**17** $^{a}$) K3 मा (for न). B Dc D4. 6 महावीर (for नर°). — $^{b}$) D1 सर्पतो (for शत्रुतो). B Dc D4. 6 शत्रुभ्यो दंष्ट्रिणोपि वा. — $^{c}$) K1 B (except B4) Dc D4. 6 ब्रह्मर्षिभ्यश्च; K2 °विद्भिश्च; D1 M °विच्चैव; D2. 3m T G (except G1) °वित्त्वं च.

**19** $^{a}$) D2 स्थानाद् (for सूतो). — $^{c}$) B1–3 समीपे ऋतु° (sic). — $^{d}$) K2 B4 Dn1. n2. n3 (before corr.). D5 चैवाक्ष° (for वेदाक्ष°). — $^{f}$) B2. 4 Dn1 अद्य वै (for अद्यैव). Ś1 निषधेष्विव; D4. 6 T1 M1 निषधाधिप; M2 वसुधाधिप.

**20** $^{d}$) G1 स ते मित्रं भवि°.

**21** $^{c}$) K2 B2. 4 Dn1. n2 D5 समभेष्यसि (for समेष्यसि च). K4 स; D1 हि (for च). G1 संयोक्ष्यसे सदारैश्च. — $^{d}$) D3 T2 G च (for स्म).

**22** $^{a}$) Ś1 K2–4 B3 Dn2 D2–5 T1 G1 स्वं रूपं च; G4 स्वस्वरूपं. — $^{c}$) B Dc D4. 6 स्मर्तव्यश्च; D3 स्मर्तव्यस्तु (for संस्मर्तव्यस्). T1 G1 M2 त्वया चाहं (for तदा तेऽहं). — $^{d}$) M1 इदं वासो (for वासश्चेदं). K4 विवासय; D1. 4 T G निवासय; M2 निवासकृत्.

**23** $^{b}$) Ś1 K3. 4 B2. 4 D (except Dn1 D1. 2. 5) T1 M2 स्वं रूपं. D3 प्रतिलप्स्यसि. — $^{c}$) K2. 3 Dn D5 T2 G3. 4 तस्मै; D1. 2 चास्मै (for अस्मै).

**24** $^{a}$) K2 Dn D5 च संदिश्य; T1 समुद्दिश्य (for समा°). — $^{c}$) G1 कर्कोटकस्तदा राजन्. — $24^{d}$ = 1. 92. $16^{b}$; 93. $43^{b}$; 94. $27^{d}$; etc., etc.

Colophon. — *Major parvan:* Ś1 K1 Dn2 T G2–4 आरण्य. — *Sub-parvan:* N T1 G1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* B4 कर्कोटकसमागमः. — *Adhy. no.* (figures, words or both): Dn 66; D1 69; T G M2 (after corr.) 63 (as in text); M1 64; M2 (before corr.) 65. — *Śloka no.:* Dn D6 26; D1 27.

**64**

**2** $^{d}$) Ś1 K1 B2 G1 मे (for मत्).

C. 3. 2779
B. 3. 71. 9
K. 3. 69. 9

कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥ ८
प्रतिजानामि ते सत्यं गमिष्यसि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ ९
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भाङ्गस्वरिनृपाज्ञया ॥ १०
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अभ्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ ११
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।
वर्जिताँल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ १२
दृष्ट्वा तानब्रवीद्राजा किंचित्कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम् ॥ १३
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम ।
महानध्वा च तुरगैर्गन्तव्यः कथमीदृशैः ॥ १४

बाहुक उवाच ।

एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
अथान्यान्मन्यसे राजन्ब्रूहि कान्योजयामि ते ॥ १५

ऋतुपर्ण उवाच ।

त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १६

बृहदश्व उवाच ।

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।

---

**9** K1 om. (hapl.) 9ab. — a) Dc अभि° (for प्रति°). Ś1 K (K1 om.) D (except D4. 6) वाक्यं (for सत्यं). — b) N (K1 om.) गमिष्यामि. — c) K3. 4 D1. 2 एकाह्नात्; B D4. 6 एकाहात्. — d) K3. 4 D1 विदर्भां नगरीमितः (K3 °रीं नृप); B1. 3. 4 D4. 6 विदर्भनगरं नृप; D2 विदर्भां नगराधिपः; D3 विदर्भानगरीं त्वतः; T2 G2–4 M1 विदर्भनगरं ध्रुवं. — After 9, D3 (marg. *sec. m.*) ins.:

317* एवमुक्तोऽब्रवीद्राजा बाहुकं प्रहसंस्तदा ।
यद्येवं भविता श्वो वै किं ते कामं करोम्यहम् ।

**10** b) D2 (by transp.) राजंश्चक्रे; S चक्रे राज्ञः. — D1 om. (hapl.) 10c–11b. — c) G1 उपागत्य. — d) Ś1 भर्गेश्वरि°; K1 भंगस्वरि°; K2 Dn D3. 4. 6 T2 (before corr.) G3 भांगासुरि°; K3. 4 D2. 5 M भार्गस्वरि°; B1. 3. 4 भांगसुरि°; Dc1 भागासुरि°; Dc2 भृंगासुरि°; T1 G1. 2. 4 भागस्व- (G1 °स्क)रि°; text as in B2!

**11** D1 om. 11ab (cf. v.l. 10). — a) Ś1 K1. 3 D2. 3. 5 स वार्यमाणो; B4 M स त्वार्यं°; G1 संत्वर्यं°. K4 बहुधा; Dc च भृशम् (for बहुश). — After 11ab, K1 B D (except D1–3. 5) ins.:

318* अश्वाञ्जिज्ञासमानो वै विचार्य च पुनः पुनः ।

— c) D3 T1 M2 अभ्य°; D5 अथा° (for अभ्य°). — d) K4 D1. 2 सुवेगान् (for समर्थान्).

**12** K3 om. 12bc. — b) =17b. D2 °समायुतान्; M1 °जवान्वितान्. — d) K4 पृथुनासान्; D3 °घोणान्; D5 °श्रेष्ठान्. D2 महान्नूजून्; D5 महाबलान्. — e) Dc देशान्; S शुभान् (for शुद्धान्). — After 11, S ins.:

319* दृश्यमानान्कृशानङ्गैर्जवेनाप्रतिमान्पथि ।
[M कृशैर् (for कृशान्). T1 भुवि (for पथि).]

**13** ab) T2 G2–4 तान्दृष्ट्वा दुर्बलान्राजा (G4 °लानश्वान्) प्राह कोप°. — c) K4 D1. 2 कर्म (for कर्तुं). — d) K2 B Dn D4. 6 T2 G2–4 न (for हि). Dc corrupt.

**14** b) Ś1 K1. 3 वहिष्यंति; K2 D1. 2 T2 G2–4 वहंतीमे; D3 वाश्यंतीमे. S (except T1) रथं (for मम). Cf. 22b. — c) K2 B Dc Dn D4. 6 महदध्वानमपि च; D3. 5 महानध्वायमपि च; T1 G1 M1 महांतमपि चाध्वानं; T2 G2–4 M2 महानध्वा स चैकाह्ना. — d) K2 B Dn D2–4. 6 T1 M गंतव्यं; G1 गंताहं.

**15** After the ref., K2 B4 Dn D5 ins.:

320* एको ललाटे द्वौ मूर्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयोः ।
द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ।

[This, being the *rahasya*, should not have been divulged here! ❀ Cn : एको ललाटे ... इति श्लोकः क्वचिन्न दृश्यते । ❀]

— a) B2 वै तान् (for हया). — b) Ś1 K2. 3 B1 Dc D1. 2 विदर्भां नात्र. — c) K2 B Dn D4. 6 यान् (for अथ). T2 G (except G1) अथान्यान्ब्रूहि राजेंद्र. — d) K3 कान्; T2 G (except G1) हयान् (for ब्रूहि). K2 B Dn D2. 4–6 G1 M2 तान्; K3 अन्यान् (for कान्). Ś1 K1 D1 योजयाम्यहं; D2 योजये हयान्. — After 15, D3 (erroneously) ins. an addl. colophon.

**16** T1 G4 राजा (for ऋतु° उ°). — b) K2 B Dn D4. 6 कुशलो ह्यसि. — c) G1 समर्थाश्चान् (for समर्थांस्त्वं). — d) D2 तान्विनि- (for तानेव).

**17** All MSS. om. the ref.! — b) = 12b. M1 °जवान्वितान्. — c) K4 स नलो (for कुशलो). — d) K4 रथे ततः; D2 नलो रथे (by transp.); D3 तथा नलः; T2

योजयामास कुशलो जवयुक्तान्रथे नलः ॥ १७
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ १८
ततो नरवरः श्रीमान्नलो राजा विशां पते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ १९
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २०
ते चोद्यमाना विधिना बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव ॥ २१
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिर्धीमान्विस्मयं परमं ययौ ॥ २२
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २३
किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा हि लक्षणं वीरे बाहुके दृश्यते महत् ॥ २४
शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ २५
उताहो स्विद्भवेद्राजा नलः परपुरंजयः ।
सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ॥ २६
अथ वा यां नलो वेद विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ २७
अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यस्तु भविष्यति ॥ २८
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च विरूपणैः ॥ २९
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति ।

C. 3. 2803
B. 3. 71. 32
K. 3. 69. 35

---

$G_{2-4}$ रथोत्तमे; $M_2$ रथेन तु.

**18** [a]) $T_2$ $G_{2-4}$ सन्नद्धस्तु; $M_1$ तथा युक्तं (for ततो युक्तं).

**19** [a]) $T_2$ $G_{2-4}$ प्रीतो (for श्रीमान्).

**20** [a]) $D_1$ तस्मिन्रथे; $D_2$ रश्मिभिस्तु. — [b]) Dc गंतुम् (for यातुम्). $D_2$ नलो याति सुवेगतः; $T_2$ $G_{2-4}$ नलो गंतुं प्रचक्रमे. — [d]) $Ś_1$ नैषधं; $K_1$ नैषधः (for वै परम्).

**21** [a]) $K_{3.4}$ $Dn_1$ $D_{1.2}$ ते नोद्यमाना. $K_{2.4}$ D (except $D_{3.4.6}$) विधिवद्; $T_1$ $G_1$ $M_1$ बहुधा. — [c]) N अथा° (for इवा°). — [d]) Dc (? erroneous gloss) बाहुकं (for रथिनं). $D_2$ S (except $M_1$) मोहयंति च.

**22** [a]) $K_1$ $B_{1.2.4}$ Dc $D_6$ $T_1$ (by transp.) दृष्ट्वा तु; $K_4$ $D_{1.2}$ च दृष्ट्वा. $B_3$ दृष्ट्वा तथा तु ता°. — [b]) $B_{1.2.4}$ Dc बहवो; $Dn_3$ $D_{3.4}$ वहंतो; $T_1$ व्रजतो (for वहतो). $Ś_1$ $K_{3.4}$ $D_{1.2}$ मनोमारुतरंहसः. — [c]) $Ś_1$ K Dn $D_5$ $T_2$ $G_{1.3.4}$ श्रीमान् (for धीमान्). — [d]) $G_1$ गतः (for ययौ).

**23** [a]) $K_{3.4}$ Dc $D_{1.2}$ $T_2$ $G_{2-4}$ च (for तु). $T_2$ $G_{2-4}$ तत् (for तं). $K_{2.3}$ $D_5$ दृष्ट्वा (for श्रुत्वा). — [b]) $T_1$ $G_1$ $M_1$ हयानां ग्रहणं. $K_1$ च तं; Dc $Dn_2$ च यत्.

**24** [a]) $K_1$ ह्येष (for अयं). — [c]) $K_2$ B Dc Dn $D_{4.6}$ तत्र (for हि).

**25** [a]) $K_3$ नु; $K_4$ T $G_{1-3}$ [ऽ]पि; $D_{1-3}$ $M_1$ हि (for ऽथ). — [c]) B Dc $D_{1.2}$ मानुष्यं. $B_1$ अनुसंप्राप्तो; $T_1$ $G_1$ परमं प्राप्तो (for समनु°). — [d]) $D_3$ परमगर्हितं; $D_5$ °दुःखितः (for परमशोभनम् = परम्+अशोभनम्. Commonly, though erroneously, taken as a compound परम + शोभनम्!).

**26** [ab]) $D_1$ रथे; $G_1$ नलो (for भवेद्). $G_1$ भवेत् (for नलः). — [c]) $K_1$ अयं (for सोऽयं). — [d]) $K_2$ Dn $D_5$ अनु° (for सम°).

**27** [a]) $Ś_1$ $K_3$ $D_1$ अथ वायं; $K_2$ Dn ($Dn_3m$ as in text) $D_5$ अथ चेह (for अथ वा यां). $Ś_1$ K Dn ($Dn_3m$ as in text) $D_{1-3.5}$ विद्यां (for वेद). Dc अथ वा नलतुल्योयं; T G अथ वायं नलाप्राप्तः ($T_1$ $G_1$ °द्वेद). — [b]) $Ś_1$ $K_{1-3}$ Dn ($Dn_3m$ as in text) $D_5$ वेत्ति; $D_2$ विद्यात्; $D_3$ विंद्यात् (for विद्यां). $K_3$ तामेष; Dc वेत्ति च (for तामेव). $G_1$ विद्यामेव स बा°.

**28** $Ś_1$ $K_1$ $D_{1.2}$ $G_2$ om. (hapl.) $28^{ab}$. — [a]) $K_3$ चेयं; B Dc $D_{4.6}$ चापि; $T_2$ $G_{3.4}$ $M_1$ चाद्य (for चेदं). — [b]) $K_{2.4}$ Dn $D_{3.5}$ बाहुकस्य; $T_2$ $G_{1.3}$ अद्य ($G_1$ °स्ति) मन्ये (for अस्य मन्ये). — [c]) $K_4$ यथा (for नायं). $Ś_1$ $K_{1.3}$ स्वतोनेन नलं ($Ś_1$ °लो) मन्ये. — [d]) $K_2$ $B_2$ Dn $D_5$ च (for तु).

**29** [b]) $Ś_1$ $K_{1.3}$ वसुधातले; $T_2$ $G_{3.4}$ वसुधामिमां (for पृथिवी°). — $K_1$ om. $29^{c}$–$30^{d}$. — [d]) $T_2$ $G_{2-4}$ संयुक्ताश्च. $Ś_1$ $D_{2.3}$ विभूषणैः; $K_2$ Dn $D_{1.5}$ निरूपणैः; $T_1$ $M_1$ विरूपिताः; $G_1$ निरूपितः; $M_2$ विरूपकैः. B Dc $D_{4.6}$ प्रच्छन्नाश्चापि रूपतः.

C. 3. 2803
B. 3. 71. 32
K. 3. 69. 35

प्रमाणात्परिहीनस्तु भवेदिति हि मे मतिः ॥ ३०
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३१
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३२
ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३३
बलं वीर्यं तथोत्साहं हयसंग्रहणं च तत् ।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ ३४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## ७०

बृहदश्व उवाच ।
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १
तथा प्रयाते तु रथे तदा भाङ्गस्वरिर्नृपः ।
उत्तरीयमथापश्यद्भ्रष्टं परपुरंजयः ॥ २
ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।

---

**30** K1 om. 30 (cf. v.l. 29). — $^{a}$) D2 तं वेत्तुं (for भवेत्). K3 B4 Dn D5 न; B1 स्व- (for तु). — $^{b}$) Dc D1 गात्रवैषम्यतां; T1 G1 चि(G गा)त्रवैरूप्यकं. — $^{c}$) D5 प्रमाणतस्तत्प्रमाणः; T2 G2-4 M1 प्रमाणपरिहीन(M1 °ण)स्तु. — $^{d}$) D3 न भवेत्त (for भवेदिति). N (except Ś1 K3; K1 om.) मतिर्मम (for हि मे मतिः).

**32** $^{a}$) Dc D4. 6 बहुधा (for °शो). T2 G2-4 इत्येवं बहुशो धीमान्. — $^{b}$) Ś1 T1 परिचिंतयत्; K3 Dn1. n2 D5. 6 T2 G3 M1 पर्य(Dn2 °रि; D5 °थि)चिंतयन्; B1. 3. 4 Dc प्रत्यचिंतयत्; D1 सम°; D2 त्वभ्य°. — $^{d}$) K1 धीमतः (for सारथिः).

**33** Ś1 K4 M1 om. (hapl.) 33. — $^{a}$) K1 D2 T2 G2-4 ऋतुपर्णस्य; K2 Dn D3. 5 °श्च. K1. 2 Dn D1-3. 5 T2 G2-4 राजेंद्रो; B2 राजर्षिर्; T1 G1 M2 दृष्ट्वैव. — $^{c}$) S (M1 om.) वीरः (for राजा).

**34** $^{a}$) K2 Dn D5 ऐकाग्र्यं च; T1 G1 M2 बलं शौर्यं. K2 Dn2 D5 यथोत्साहं; K3 M1 अथो°. — $^{b}$) K3 D5 T2 G2-4 °संग्रहणे. Dc Dn2. n3 D2 च यत्; T2 G2-4 तथा. — $^{c}$) Dc परं प्रयत्नं सं°; T2 G2-4 कौशलं चापि सं°. — $^{d}$) Ś1 G4 च; T1 G1. 2 M2 सः (for ह).

Colophon om. in D2. — *Major parvan:* Ś1 K1 T G2-4 आरण्य. — *Sub-parvan:* N (except B4; D2 om.) T1 M1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* B4 ऋतुपर्णप्रयाणं. — *Adhy. no.* (figures, words or both): Dn (Dn1 *sup. lin.*) M2 (before corr.) 71; D1 75; T G M2 69 (as in text); M1 70. — *Śloka no.:* Dn 36; D1 34.

**70**

**1** $^{b}$) M1 वनान्युपवनानि च. — $^{c}$) K4 (before corr.) Dc1 T2 (before corr.) G2. 4 अभि- (for अति-). — $^{d}$) K1 D1-3 M खचरः; K4 विचरन्; T2 G1. 3 स्यंदनः.

**2** $^{a}$) Ś1 नृपे (for रथे). — $^{b}$) =6$^{b}$. K4 D3. 6 S तथा (for तदा). K3. 4 D2 भार्गस्वरि°; B Dc1 Dn D3. 4. 6 T2 (after corr.) G3 भांगा(B1 °गं-; B3. 4 °ग-; D3 °गि)सुरि°; Dc2 भृंगासुरि°; D1. 5 M1 भार्गस्वरि°; T1. 2 (before corr.) G1. 2. 4 भागस्व(G1 °स्क)रि°; M2 भाङ्गस्वरि°. Ś1 भार्गश्वरिरतो नृपः; K1 भंगस्वरिरथो नृपः; K2 सुरथेन महाजनाः. — K2 om. 2$^{c}$-3$^{d}$. — $^{c}$) B1. 2 अथो°; B4 Dn1. n3 D4. 6 T2 (after corr.) G3 अधो°; T1 तथा°; T2 (before corr.) G2. 4 तदा° (for अथा°).

**3** K2 om. 3 (cf. v.l. 2). — $^{b}$) K4 D1 नृपः; D5 तथा (for तदा). — $^{c}$) Ś1 K3 च (for [इ]ति). — $^{d}$) D2 प्राह (for आह).

**4** $^{a}$) D2 महाबाहो (for °बुद्धे). — $^{b}$) T2 G2-4 M1 मनो° (for महा°). — $^{c}$) Ś1 K1-3 Dn1 D1. 3. 5 G1 एनं; B3. 4 Dc T G2-4 M1 एतन् (for एतं). D5 वै (for मे). D2 वार्ष्णेयं त्वब्रवीद्राजा. — $^{d}$) D2. 3 T1 G1 आ(D2 चा)-

वार्ष्णेयो यावदेतं मे पटमानयतामिति ॥ ४
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो न स शक्यस्त्वया पुनः ॥ ५
एवमुक्ते नलेनाथ तदा भाङ्गस्वरिर्नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ६
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितानि च यान्यत्र तत्रैकमधिकं शतम् ।
एकपत्राधिकं पत्रं फलमेकं च बाहुक ॥ ९
पञ्च कोट्योऽथ पत्राणां द्वयोरपि च शाखयोः ।
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ १०
ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ ११
अथ ते गणिते राजन्विद्यते न परोक्षता ।
प्रत्यक्षं ते महाराज गणयिष्ये बिभीतकम् ॥ १२
अहं हि नाभिजानामि भवेदेवं न वेति च ।

C. 3. 2821
B. 3. 72. 14
K 3. 70. 14

नीयताम् (for आनयताम्). $K_{1.2}$ B Dc Dn $D_{4.6}$ $T_2$ $G_3$ $M_2$ इह (for इति). $D_5$ पटमानयतीति मे; $T_2$ (before corr.) $G_{2.4}$ $M_1$ °यतेति ह.

**5** $^{a}$) $B_2$ $D_6$ तु (for तं). $Ś_1$ $K_1$ नलस्तं च प्रत्युवाच. — $^{b}$) $K_3$ T दूर- (for दूरे). — $^{d}$) $D_2$ $G_1$ च (for स). $K_4$ $D_{1.2.5}$ transp. त्वया and पुनः. $K_2$ $B_{1-3}$ Dc Dn $D_{3.4.6}$ नाहर्तुं ($D_3$ °नेतुं) शक्यते पुनः; $K_3$ न शक्यः स पुनस्त्वया.

**6** $^{a}$) $K_1$ Dc $Dn_1$. $n_2$ $T_1$ $G_{1.2.4}$ $M_2$ उक्तो (for उक्ते). $G_{2.4}$ [आ]सीत् (for [अ]थ). — $^{b}$) $=2^{b}$. $B_3$ $T_1$ M तथा (for तदा). $Ś_1$ भागेश्वरि°; $K_1$ भंगस्वरि°; $K_2$ $Dc_1$ Dn $D_{3.4.6}$ भांगासुरि°; $K_{3.4}$ $D_2$ भार्ग्रस्वरि°; $B_1$ भांगंसुरि°; $Dc_2$ भोगासुरै°; $D_{1.5}$ M भार्गस्वरि°; $T_1$ भागस्वरि°; $G_1$ भागस्करि°. $T_2$ $G_{2-4}$ नातिप्रीतमना नृपः. — $^{c}$) $K_4$ $D_1$ राजा (for राजन्). — $^{d}$) $K_4$ फलितं तु (for फल°). $M_1$ विभी° (for बिभी°).

**7** $^{b}$) $D_{1.2}$ [ऽ]भ्युवाच तं (for ऽभ्यभाषत).

**8** $^{a}$) $K_2$ सर्वं सर्वं; $B_3$ $Dn_3$ (by corr.) $D_6$ सर्वं सर्वो; $D_4$ सर्वं सर्वे. B $D_{4.6}$ न जानीते. — $^{d}$) $G_1$ (corrupt) न ज्ञानः पुरुषः क्वचित्.

**9** $^{a}$) $Ś_1$ $B_{1.3}$ $D_{4.6}$ $T_2$ $G_3$ पत्राणि (for पर्णानि). — After $9^{ab}$, $B_4$ ins.:

321* संख्यातानि मयैतानि सर्वाण्यस्य वनस्पतेः ।

On the other hand, after $9^{ab}$, $D_1$ reads $10^{ab}$, which in turn is followed by a variant of $10^{cd}$:

322* प्रविलुप्तस्य शाखे द्वे पञ्चान्या या प्रशाखिका ।

— $K_1$ om. $9^{cd}$. — $^{c}$) $Ś_1$ $K_2$ Dn $D_5$ [अ]पि (for च). — $^{d}$) $T_1$ $G_{1.2.4}$ कृतं; M स्मृतं (for शतम्). $K_3$ तत्रैक्षे नाधिकं शतं. — $^{e}$) $K_{1.4}$ B एकमत्राधिकं; $K_2$ $D_5$ एकविंशा°; $K_3$ एवं पत्रा°; $Dn_2$ एकमात्रा°; $G_4$ एकं पत्रा°. $Ś_1$ $K_{1-3}$ Dc Dn $D_5$ चात्र (for पत्रं). — After 9, $D_1$ ins.:

323* अयुतं चैव पत्राणामनयोरपि शाखयोः ।;

while $D_3$ ins.:

324* लक्ष्यं ह्यशीतिसाहस्रं पत्रेषु च फलेषु च ।

**10** $D_1$ reads $10^{ab}$ after $9^{ab}$. — $^{a}$) $T_2$ (by corr.) $G_3$ [ऽ]पि (for ऽथ). $Ś_1$ $K_{1.3.4}$ $D_{2.3}$ अयुतं चापि ($K_1$ चास्ति; $K_3$ $D_{2.3}$ चैव) पत्राणां; $K_2$ $D_5$ अयुतं चैव पर्णानां; $T_1$ फलकोट्यथ पत्राणि; $T_2$ (before corr.) $G_{2.4}$ M फलकोट्यपि (M °थ) पत्राणां; $G_1$ फलकोटिसहस्राणि. — $^{b}$) $K_{2.4}$ $D_{2.3.5}$ अनयोरपि शा°. — $^{c}$) $K_3$ परिमुह्यस्य; $K_4$ प्रथिते ह्यस्य; $D_{1.2}$ प्रतिमुह्यंति; $D_3$ (by corr.) प्रचिनुह्येनं; $G_1$ प्रभिन्नान्यस्य. — $^{d}$) T G याश्चान्याः प्रतिशाखिकाः; $M_1$ ये चाप्यन्ये प्रशाखिके. — $^{e}$) $Ś_1$ K $D_{1-3.5}$ (before corr.) आसां (for आभ्यां). — $^{f}$) $K_3$ एकोनं; $G_1$ $M_1$ पंचानां (for पञ्चोनं).

**11** $^{a}$) $Ś_1$ K Dn $D_{1-3.5}$ रथमवस्थाप्य. — $^{d}$) B $Dn_3$m $D_{2.4.6}$ शंससे. $Ś_1$ $K_{1.3}$ $B_{1.2.4}$ $D_{1-3}$ शत्रुकर्षण. — After 11, $K_{2.4}$ Dn $D_5$ ins.:

325* प्रत्यक्षमेतत्कर्तास्मि शातयित्वा बिभीतकम् ।
[Cf. $12^{cd}$.]

**12** $^{a}$) $Ś_1$ $K_1$ अथास्य; $K_{2.4}$ $B_{1.2}$ Dc $Dn_1$. $n_2$ $D_{1.5}$ अथात्र; $D_2$ अथानु; $D_3$ यथात्र; $M_1$ (corrupt) अथ के. — $^{b}$) S (except $M_1$) विजानाम्यपरोक्षतां. — $Dn_3$ om. $12^{cd}$. — $^{d}$) $K_{2.3}$ B D (except $D_{1.2}$; $Dn_3$ om.) $M_1$ शातयिष्ये. $T_1$ $M_1$ विभीतकं.

**13** $^{b}$) $B_2$ $D_{4.6}$ इह; $D_1$ $T_1$ $M_2$ एतन् (for एवं). $B_4$ चेदिह; $G_2$ चेति च (for वेति च). $K_3$ $B_1$ $G_4$ ह; $B_2$ $D_{1.4.6}$ $M_2$ वा; Dc वै (for च). — $^{d}$) $K_3$ पश्य त्वं च

C. 3. 2822
B. 3. 72. 15
K. 3. 70. 15

संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।
मुहूर्तमिव वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ १३
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ १४
प्रतीक्षस्व मुहूर्तं त्वमथ वा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ १५
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ॥ १६
त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्तुमर्हसि ॥ १७
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाद्य सूर्यं दर्शयितासि मे ॥ १८
अथाब्रवीद्बाहुकस्तं संख्यायेमं बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वेदं वचो मम ॥ १९
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ २०
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च ॥ २१
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप ॥ २२
तमुवाच ततो राजा त्वरितो गमने तदा ।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २३

---

(for पश्यतस्ते). Ś$_1$ K$_1$ नराधिप. — $^{c}$) K$_{1.4}$ D$_1$ एव; K$_2$ B$_3$ Dn D$_{4.5}$ अपि; D$_2$ एकं; D$_3$ T$_2$ (by corr.) G$_3$ इह (for इव).

**14** $^{a}$) B$_1$ ततोब्र°. T$_2$ G$_{2-4}$ ततोब्रवीन्नृपसुतः. — $^{d}$) K$_3$ B उप°; D$_{4.6}$ उपा° (for समा°). T$_2$ G$_{2-4}$ M$_1$ परमं यत्नमास्थितः.

**15** $^{a}$) K$_3$ प्रातीक्ष वै (for प्रतीक्षस्व). K$_3$ B$_{1-3}$ D$_{4.6}$ तु (for त्वं). — $^{b}$) Ś$_1$ K$_{2.3}$ D$_{2.3.5}$ त्वरितो; D$_1$ त्वरसे. D$_5$ भव (for भवान्). — $^{c}$) K$_3$ एवं (for एष).

**16** $^{a}$) K$_2$ Dn D$_5$ तु (for तं). K$_3$ B D$_{4.6}$ अथाब्रवीदृतुपर्णः. — G$_4$ om. (hapl.) 16$^{b}$–19$^{a}$. — $^{c}$) K$_2$ Dn (Dn$_3$m as in text) D$_5$ शास्ता (for यन्ता). — $^{d}$) D$_3$ चैव (for अपि).

**17** G$_4$ om. 17 (cf. v.l. 16); Ś$_1$ K$_2$ D$_2$ om. (hapl.) 17$^{a}$–18$^{b}$. — $^{a}$) K$_3$ त्वत्कृपां (for त्वत्कृते). — $^{b}$) K$_{3.4}$ B Dc Dn$_3$ D$_{1.4.6}$ T$_1$ विदर्भां (B$_2$ वैदर्भीं); M$_2$ वैदर्भान्. T$_1$ जयकोविद; G$_1$ नय°; M$_1$ अश्व°. K$_1$ राज्यं सर्वं विनिश्चितं. — K$_1$ om. 17$^{c}$–18$^{b}$. — $^{c}$) D$_3$ त्वा (*sup. lin.* च) (for त्वां). — $^{d}$) G$_1$ निर्विघ्नं (for न विघ्नं).

**18** G$_4$ om. 18; Ś$_1$ K$_{1.2}$ D$_2$ om. 18$^{ab}$ (cf. v.l. 16, 17). — $^{a}$) B$_1$ transp. च and ते. — $^{b}$) M मा (for मां). K$_4$ विदर्भां हयकोविद (cf. 17$^{b}$). — $^{c}$) Ś$_1$ K$_{2-4}$ B$_3$ Dc Dn$_{2}$.n$_3$ D$_{1.5}$ विदर्भां; D$_{3.6}$ विदर्भं. Ś$_1$ K$_1$ वा यात्वा; K$_3$ गत्वाद्य; D$_3$ चासाद्य (for यात्वाद्य). D$_2$ विदर्भायां ततो गत्वा. — $^{d}$) K$_2$ D$_5$ भैमीं (for सूर्यं). T$_2$ G$_3$ च (for [अ]सि).

**19** G$_4$ om. 19$^{a}$ (cf. v.l. 16). — $^{a}$) K$_3$ B Dc D$_4$ ततः (for अथ). — $^{b}$) K$_2$ Dn D$_5$ संख्याय च; K$_3$ T$_2$ G$_{2.3}$ °येदं; D$_2$ °यैनं; G$_1$ °योयं; G$_4$ संख्या एतं. Ś$_1$ K$_1$ विभो तरुं; T$_1$ M$_1$ विभी° (for बिभी°). — $^{c}$) Ś$_1$ K$_{2-4}$ B$_3$ Dc Dn$_{2}$.n$_3$ D$_{1.2.5.6}$ विदर्भां; D$_3$ विदर्भं. — $^{d}$) Dn D$_4$ G$_2$ कुरुष्वैवं. Ś$_1$ K$_{1.4}$ D$_{1.2}$ न ते विघ्नो (Ś$_1$ °घ्नं) भविष्यति.

**20** $^{a}$) T$_2$ G$_{2-4}$ एव (for इव). — $^{b}$) K$_3$ गणयंस्ते तु बाहुक (marg. *sec. m.* बिभीतकं); D$_1$ गणस्व प्रत्युवाच ह. — K$_2$ Dn ins. after 20$^{ab}$: K$_4$, after 20:

326* एकदेशं च शाखायाः समादिष्टं मयानघ ।
गणयस्वाश्वतत्त्वज्ञ ततस्त्वं प्रीतिमावह ।

K$_4$ cont.:

327* ततस्तं बाहुको राजञ्छाखैकोद्देशमप्युत ।
फलानि परिसंख्यातुं त्वरमाणोपचक्रमे ।

— $^{d}$) Dc G$_1$ तं (G$_1$ वै) द्रुतं (for तं द्रुमम्). D$_1$ शातयित्वा स वै द्रुमं; T G$_{2-4}$ M गणयामास शाखिके (T$_1$ M वै द्रुमं).

**21** B$_4$ transp. 21$^{ab}$ and 21$^{cd}$. — $^{a}$) K$_4$ D$_1$ तु (for स). — $^{b}$) M$_1$ बाहुको (for राजानम्). T$_2$ G$_{2-4}$ M$_1$ वाक्यम् (for इदम्). T$_1$ M$_2$ राजा वचनमब्रवीत्. — $^{c}$) T$_2$ G$_{2-4}$ यथोक्तं वै (for यथोक्तानि). — $^{d}$) K$_3$ तान्येव च; G$_2$ यावंत्येव. Ś$_1$ K$_{1.2}$ Dn D$_{1-3.5}$ T$_1$ G$_1$ M तु; G$_2$ वै (for च).

**22** $^{a}$) B$_{2.3}$ D$_{4.6}$ अथाद्भुत°. — $^{c}$) B$_2$ M ते विद्यां; T$_2$ G$_{2-4}$ का विद्या. — $^{d}$) K B$_{1.3.4}$ Dc Dn$_1$.n$_2$ D$_{3.5.6}$ M$_2$ ययै°; G$_2$ M$_1$ येनै° (for यथै°). D$_1$ ब्रूयते (for ज्ञा°).

**23** $^{b}$) D$_2$ गमनोत्सुकः. K$_2$ Dn D$_5$ नृप; G$_1$ तथा (for तदा).

**24** $^{a}$) G$_2$ बाहुकस्तद्वचः श्रुत्वा. — $^{b}$) D$_{1.5}$ नृप (for मम). T$_2$ G$_{2-4}$ देहि विद्याद्वयं च मे. — $^{d}$) T$_2$ G$_{2-4}$ त्वं

बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २४
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तथेत्येवाब्रवीद्वचः ॥ २५
यथेष्टं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ २६
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ॥ २७
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः ।
स तेन कर्शितो राजा दीर्घकालमनात्मवान् ॥ २८
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ २९
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ ३०
इन्द्रसेनस्य जननी कुपिता माशपत्पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ॥ ३१
अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ३२
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ ३३
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः । C. 3. 2845 B. 3. 72. 37 K. 3. 70. 38

---

नराधिप (for पुरुष°).

**25** $^{d}$) K2 B2 Dn D2. 5 तं तथेत्यब्रवीद्वचः; G4 तथैवेत्य-ब्रवीच्च तं.

**26** $^{a}$) K2 तथोक्तं त्वं; K4 D (except D6) यथोक्तं त्वं; B4 अथेष्टं त्वं; G1 यथास्त्वेष्टं. B2 D2. 4. 6 तद्; T2 G2–4 M वै (for त्वं). S गृहाण त्वम्. — $^{b}$) D2 परमं (for हृदयं). K4 D3 मम (for परम्). — $^{c}$) Ś1 K1 चाश्व°; K2. 4 Dc D1. 2. 5 ह्यश्व° (for मेऽश्व°). — $^{d}$) Ś1 K1. 3 B3. 4 Dn (Dn3 before corr.) D2. 3 T1. 2 (before corr.) G1. 2 तिष्ठति. — $^{f}$) Ś1 नलस्य (for नलाय). — After 26, D1. 2 ins.:

328* ददावेकमना भूत्वा शुचिः पुरुषसत्तमः ।

**27** $^{c}$) K1 S कार्कोटक(T2 G2–4 °कं)विषं. G1 M2 तीव्रं. — $^{d}$) K2 Dn2. n3 (m as in text) D1. 5 उद्वहन्; K4 D2 उद्गिरन् (for उद्वमन्). T1 G1 M2 मुखात्स तु समुद्वमन्.

**28** $^{a}$) D4. 6 T1 M ततस् (for तस्य). Dc तथा°; G2 सदा° (for तदा°). K4 कलिस्तु पुरुषव्याघ्र. — $^{b}$) K4 D2. 5 इव; D1 च वि- (for स वि-). — $^{c}$) T1 यष्टितो (for कर्शितो). K1 D5 M2 राजन् (for राजा). — $^{d}$) Ś1 K1 अवाप्तवान् (for अनात्म°). — After 28, G2 ins.:

329* तं भ्रान्तरूपं निःशोभं संक्लिष्टमकरोत्कलिः ।

**29** $^{a}$) S (except M1) विषाद् (for विष-). K3 °विमुक्तोभूत्. — $^{b}$) Ś1 K1 B2. 4 Dc2 Dn1. n2 D1. 5 स्वं (for स्व-). — $^{c}$) D2 इच्छन् (for ऐच्छत्). Dc शप्तुमैच्छत्प्रकुपितो. — $^{d}$) Ś1 बली; B Dn3 D4. 6 कलिं (for नलः).

**30** $^{a}$) T1 G1 M2 ततो (for कलिर्). — $^{c}$) D1 नियच्छ. — $^{d}$) T1 G1 प्रीतिं (for कीर्तिं). K2 D1. 3 M1 धास्यामि; D5 यास्यसि (for दास्यामि). D5 वै (for ते).

**31** $^{b}$) K2 B1 Dc2 Dn D4–6 G1 मां शपत्; K4 D1. 2 साशपत्; D3 (marg. *sec. m.*) साभवत्. K3 T1 कुपितामशप(T1 °वद)त्पुरा. — $^{d}$) Ś1 K1. 2. 4 Dc D1–3 तेनाहं (for ततो°).

**32** D3 om. (hapl.) 32$^{ab}$. — $^{a}$) K4 B1. 2. 4 Dc1 D1 अवसंस्त्वयि. — $^{b}$) Ś1 B1 G2 अपराजिता; K Dc Dn3m D4. 6 T G1. 3 अपराजितः. Dn (Dn3m as in text) D1 सुखदुःखपराजितः. — After 32, K1 ins. 332*. — K2. 3 B D (except D1. 2. 5) ins. after 32: K1, after 33:

330* शरणं त्वां प्रपन्नोऽस्मि शृणु चेदं वचो मम ।

**33** $^{a}$) Ś1 Dn2 D3 M2 त्वा (for त्वां). — $^{b}$) G2 कथ° (for कीर्त°). T1 [अ]निंदिताः (for [अ]तन्द्रि°). — $^{c}$) K4 B4 मत्प्रभूतं; B1 मत्प्रसृतं. — $^{d}$) T1 मत्प्रसादाद् (for न कदाचिद्). — After 33, S (except M1) ins.:

331* न तेषां मानसं किंचिच्छारीरं वाचिकं तथा ।
भविष्यति नृणां राजन्कीर्तयिष्यन्ति ये नलम् ।

[(L. 1) M2 मानसं तदा (for वाचिकं तथा). — (L. 2) T2 G3. 4 महाराज (for नृणां राजन्).]

— S (except M1) cont.: K3 B D (except B1. 2. 5) ins. after 33: K1 ins. after 32:

332* भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ।

[D3 जातं; D6 T2 G2. 3 यांतं; T1 G1 राजन् (for यातं). K1 Dc शप्स्यसि.]

— After 33, K1 ins. 330*.

**34** $^{a}$) G1 राजन् (for राजा). B3 एवमुक्तोथ राजा स.

C. 3. 2846
B. 3. 72. 38
K. 3. 70. 38

ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ।
कलिस्त्वन्येन नादृश्यत्कथयन्नैषधेन वै ॥ ३४
ततो गतज्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजन्संख्यायाथ फलान्युत ॥ ३५
मुदा परमया युक्तस्तेजसा च परेण ह ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥ ३६
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ।
नलः संचोदयामास प्रहृष्टेनान्तरात्मना ॥ ३७
विदर्भाभिमुखो राजा प्रययौ स महामनाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान् ॥ ३८
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपते ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ३९

इति श्रीमहाभारते आरण्यकपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## ७१

बृहदश्व उवाच ।
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ १
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।

— $^b$) $K_3$ प्रायच्छत्; $T_1$ $G_1$ संयच्छत्. — $^d$) $K_4$ प्रविशत्तं; $T_1$ $M_2$ विवेश च; $G_2$ $M_1$ आविवेश. $T_1$ $G_1$ M बिभीतकं. — After $34^{cd}$, $D_{1.2}$ ins.:

333* कलिसंसर्गदोषेण अपवित्रो बिभीतकः ।

— $^c$) $K_3$ $T_2$ $G_{2.3}$ $M_1$ नो दृष्टः (for नादृश्यत्). $Ś_1$ $K_1$ कलिं त्वन्ये तु ($K_1$ च) नापश्यन्; $K_2$ Dn $D_5$ कलिस्त्वन्यैस्तदादृश्यः; $K_4$ °न्यैर्न चादृश्यत्; $D_{1.2}$ °न्यैरनादृश्यः; $T_1$ $G_1$ $M_2$ ततस्तेनैव नादृश्यत्. — $^f$) $K_3$ B $D_{4.6}$ $T_2$ $G_{2.3}$ $M_1$ ह (for वै).

**35** $D_1$ om. $35^c$–$36^b$. — $35^a$=$39^a$. — $^c$) $Ś_1$ $K_1$ $B_{1-3}$ $Dc_1$ $G_{2.4}$ संप्रणष्टे; $K_4$ $D_4$ $T_1$ संप्रविष्टे. $K_2$ $B_3$ D (except $D_{4.6}$; $D_1$ om.) $T_2$ $G_{2-4}$ राजा (for राजन्). — $^d$) $K_2$ $B_2$ $Dn_{1.n3}$ $D_5$ $G_1$ संख्यायास्य; $K_3$ °नार्थं; $B_{1.3.4}$ Dc $M_1$ °य च; $D_{4.6}$ °यत; $T_1$ $M_2$ °य तु. B Dc $D_{4.6}$ फलान्यथ; $T_2$ G बिभीतकं ($G_1$ फलानि च)

**36** $D_1$ om. $36^{ab}$ (cf. v.l. 35); $D_5$ om. $36^a$–$37^b$. — $^b$) $K_2$ $B_2$ Dn $D_{4.6}$ [अ]थ (for च). $T_2$ $G_{2-4}$ $M_1$ बलेन (for परेण). $K_2$ B D (except $D_{2.3}$; $D_{1.5}$ om.) वै; $T_2$ $G_{2-4}$ $M_1$ च (for ह). $K_4$ तेजसा परमेण ह. — $^c$) $K_3$ वेगेन (for तेजस्वी). — $M_2$ om. (hapl.) $36^d$–$38^a$. — $^{ef}$) $T_2$ $G_3$ बिभीतकोप्रशस्तः संवृत्तः स कलि°. — After 36, $K_4$ $D_{1-3}$ ins.:

334* ततः प्रभृति राजेन्द्र लोकेऽस्मिन्पाण्डुनन्दन ।

**37** $D_5$ om. $37^{ab}$; $M_2$ om. 37 (cf. v.l. 36). — $^c$) $K_2$ $Dn_{1.n2}$ $D_5$ संनोदयामास; $D_1$ संबोध°.

**38** $M_2$ om. $38^a$ (cf. v.l. 36). — $^b$) $K_{2-4}$ B D °यशाः (for °मनाः). — $^d$) $K_3$ (*sup. lin.*) $Dc_2$ $Dn_2$ $T_2$ $G_3$ $M_2$ अप्यागमद्; $D_3$ अभ्यगमद्; $G_1$ अप्यपतद्. $K_{2.3}$ (*sup. lin.* as in text). $_4$ B D गृहं; $G_1$ द्रुमात्; $M_1$ स्वयं.

**39** $39^a$=$35^a$. — $^b$) $Ś_1$ $K_{1.2}$ $B_{1.3.4}$ Dn $D_{2.4-6}$ °पतिः (for °पते). — $^c$) $G_1$ वियुक्तः. B $D_{4.6}$ राजा; $T_2$ $G_{2-4}$ $M_1$ तत्र (for राजन्). — $^d$) $T_2$ $G_{2-4}$ °विपर्ययः.

Colophon om. in $D_2$. — *Major parvan:* $Ś_1$ $K_1$ T $G_{2-4}$ आरण्य. — *Sub-parvan:* N (except $K_3$; $D_2$ om.) $T_1$ $G_1$ (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* $B_4$ कलिनिर्गमः. — *Adhy. no.* (figures, words or both): Dn ($Dn_1$ *sup. lin.*) $M_2$ (before corr.) 72; $D_1$ 76; T G $M_2$ (after corr.) 70 (as in text); $M_1$ 71. — *Śloka no.:* Dn $D_1$ 43; $D_6$ 42.

## 71

**1** $^a$) $Ś_1$ $K_{2-4}$ $B_{3.4}$ Dc $Dn_2$ $D_{1.4-6}$ विदर्भां. $D_2$ विदर्भायां तु संप्राप्तं. — $^c$) $G_1$ तदा (for जना). $B_1$ महाराजं (for जना राज्ञे). $K_4$ Dc $D_{1.2.5}$ S राजन् (for राज्ञे). — $^d$) $K_2$ Dn $D_5$ प्रत्यपादयन्; $D_3$ च निवेदयन्.

**2** $^a$) $K_3$ ज्ञप्तः; Dc $D_3$ राजन् (for राजा). — $^d$) $K_2$ Dc Dn $D_{3.5}$ स विदिशो; $K_3$ सायं°; $K_4$ स प्रा°; $B_{2.4}$ $D_{4.6}$

नादयन्रथघोषेण सर्वाः सोपदिशो दश ॥ २
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा च समहृष्यन्त पुरेव नलसंनिधौ ॥ ३
दमयन्ती च शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४
नलेन संगृहीतेषु पुरेव नलवाजिषु ।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ५
प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तत्र रथघोषं महीपतेः ॥ ६
ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्मेघोदयमिवेक्ष्य ह ॥ ७

दमयन्त्युवाच ।

यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
मम ह्लादयते चेतो नल एष महीपतिः ॥ ८
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनशिष्याम्यसंशयम् ॥ ९
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं विनशिष्याम्यसंशयम् ॥ १०
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यो विनशिष्याम्यसंशयम् ॥ ११
यदि मां सिंहविक्रान्तो मत्तवारणवारणः ।
नाभिगच्छति राजेन्द्रो विनशिष्याम्यसंशयम् ॥ १२
न स्मराम्यनृतं किंचिन्न स्मराम्यनुपाकृतम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः ॥ १३

C. 3. 2865
B 3. 73. 13
K. 3. 71. 13

---

चोप° ; $D_{1.2}$ स($D_2$ च)प्र° ; $T_1$ $G_2$ चाथ दिशो; $T_2$ $G_3$ ताः प्र° ; $G_1$ अपि दिशो; $G_4$ स्म वि° (for सोप°). $K_4$ B D (except $D_{4.6}$) दिशः (for दश). Ś$_1$ $K_1$ सर्वतः सदिशो दश. [सोपदिशो, syllabic haplology for सोपदिशो दिशो ?]

**3** $^{b}$) Ś$_1$ चुक्रुशुः (for शुश्रुवुः). $K_3$ नलाश्वास्ते विशुश्रुवुः; $D_2$ नलास्तत्र प्रशुश्रुवुः. — $^{c}$) $K_2$ $B_3$ Dn $D_{4.6}$ श्रुत्वा तु; $K_4$ $B_{1.2}$ Dc $D_{2.3}$ श्रुत्वाथ. $D_3$ तत्राहृष्यंत; $M_2$ संप्रहृ°.

**4** $^{a}$) $K_4$ $B_3$ D (except $D_{1.4.6}$) $G_1$ $M_2$ तु (for च). — $^{b}$) Ś$_1$ $D_{3.5}$ तत्; $D_2$ तु; $T_1$ $G_1$ $M_2$ वै (for तम्). — $^{c}$) $T_2$ $G_{3.4}$ निनदं; $G_1$ निनदो (for नदतो). — $^{d}$) Ś$_1$ $G_1$ गंभीरो. — After 4, $K_{2.3}$ B D (except $D_{1.2.5}$) ins.:

335* परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।

**6** $^{ab}$) Ś$_1$ शैल° (for शाला°). $T_2$ $G_{1.3.4}$ चापि (for चैव). $K_4$ कुंजराः (for वारणाः). $D_2$ प्रासादशिखिनः शाला स्थाणुश्चैव च वारणाः. — $^{c}$) Ś$_1$ $K_{1.2.4}$ D (except $D_{4.6}$) तस्य (for तत्र). — $^{d}$) $T_2$ $G_{2-4}$ मनोहरं; some MSS. महीपते.

**7** $^{a}$) $K_2$ Dn $D_5$ तच्छ्रुत्वा; $K_4$ श्रुत्वा तु; $D_2$ श्रुत्वाथ (for ते श्रुत्वा). — $^{d}$) $B_1$ $D_1$ मेघनादम्; $B_4$ मेघनाद (for मेघोदयम्). $D_1$ इवोन्मुखाः; $D_6$ $T_1$ $M_2$ अवेक्ष्य वा ($D_6$ ह); $G_1$ इवेच्छया. Ś$_1$ $K_1$ मेघोदयवशाद्यथा; $K_{2-4}$ Dc Dn $D_{2.3.5}$ मेघनाद इ($K_4$ °दमि)वोत्सुकाः; $T_2$ $G_{2-4}$ $M_1$ दृष्ट्वे($G_{2.4}$ °ष्ट्वै)व जलदोदयं; text as in $B_{2.3}$ $D_4$!

**8** $^{a}$) $K_4$ श्रुत्वा तु; $D_{4-6}$ यथायं; $T_1$ $G_1$ यथैव (for यथासौ). — $^{b}$) $M_2$ रोदसी (for मेदिनीम्). B $D_{4.6}$ transp. पूरयन्निव and मेदिनीं. — $^{c}$) $K_{2-4}$ B D $G_4$ $M_2$ ममाह्लाद°. — $^{d}$) $M_2$ नान्य (for नल). $K_3$ $D_3$ T G एव (for एष). $D_3$ $M_2$ महीपतेः; $M_1$ तथा नृपः.

**9** $^{a}$) $K_3$ Dn $D_{1-3}$ अथ. $K_4$ चंद्रार्कवक्त्रं. — $^{d}$) = $10^{d}$, $11^{d}$, $12^{d}$. Ś$_1$ $K_{1.2.4}$ B D विनंक्ष्या($K_1$ $D_{1.3}$ °नक्ष्या-; $K_4$ $D_2$ °नश्या)मि न संशयः.

**10** $^{c}$) Ś$_1$ $K_1$ $D_1$ प्रवेक्ष्यामि. — $^{d}$) N (except $K_3$) न भविष्यामि (for विनशि°). Ś$_1$ असंशयः.

**11** Ś$_1$ $G_1$ om. (hapl.) 11. — $^{a}$) $B_1$ मेघगंभीरं; $D_3$ $M_1$ हंसनिर्घोषो. — $^{c}$) $K_3$ D (except $D_{1.3.4.6}$) °प्रख्यं. — $K_1$ om. (hapl.) $11^{d}$–$12^{c}$. — $^{d}$) $K_{2.3}$ Dc Dn $D_5$ प्रवेक्ष्यामि हुताशनं; $K_4$ B $D_{1-4.6}$ विनंक्ष्या($D_{1-3}$ °नश्या)मि न संशयः.

**12** $K_1$ om. $12^{abc}$ (cf. v.l. 11). — $^{b}$) $K_{2.3}$ B Dn $D_{3.4.6}$ S (except $T_1$ $G_1$ $M_2$) °विक्रमः. — $^{d}$) Ś$_1$ K D (except $D_{3.4.6}$) विनंक्ष्या($K_{1.3}$ $D_1$ °नक्ष्या-; $D_2$ °नश्या)मि न संशयः.

**13** $^{a}$) $M_1$ वाक्यं (for किंचिन्). — $^{b}$) Ś$_1$ $K_1$ $D_{4.6}$ [अ]नपाकृतं; $K_2$ Dn $D_5$ [अ]पकारतां; $K_3$ च पापकृत्; T G [अ]नुपातकं ($G_1$ [अ]नृतं कृतं). B न च ($B_{2.4}$ om. च) स्मराम्यपाकृतं. — $^{c}$) Ś$_1$ $K_1$ वचः (for न च). Ś$_1$ वापि; $K_1$ चापि (for वाक्यं). — $^{d}$) Ś$_1$ सुरेष्वपि; $K_2$ $D_5$ स्वेच्छयापि. $K_{2.4}$ D (except $D_{3.4.6}$) कदाचन.

**14** $^{a}$) $K_4$ वाग्मी च; $T_2$ $G_{2-4}$ वीरोपि. — $^{b}$) Ś$_1$ $K_{3.4}$ $D_2$ दाता चाप्यधिको नृपैः; $K_1$ धाता चाप्यधिकं नृपैः;

C. 3. 2865
B. 3. 73. 14
K. 3. 71. 14

प्रभुः क्षमावान्वीरश्च मृदुर्दान्तो जितेन्द्रियः ।
रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः ॥ १४
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ १५
बृहदश्व उवाच ।
एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ १६
ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ १७
ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ १८
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराज भीमं भीमपराक्रमम् ॥ १९
तं भीमः प्रतिजग्राह पूजया परया ततः ।
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति ॥ २०
किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टश्च भारत ।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ २१
ऋतुपर्णोऽपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कंचन ।
नैव स्वयंवरकथां न च विप्रसमागमम् ॥ २२
ततो विगणयन्राजा मनसा कोसलाधिपः ।
आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः ॥ २३
राजापि च स्मयन्भीमो मनसाभिविचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ॥ २४

---

K2 Dc Dn D1. 5 दाता चाभ्यधिको नृपः (Dc गुणैः; Dn1 नृपैः). — $^{c}$) T G अहो (for रहो). G4 [ऽ]तीवानु° (for ऽनीचानु°). — $^{d}$) K2. 4 Dc D1–3. 5 बलवान् (for क्लीबवन्). K3 क्लिश्यन्मन्मथनैषधः.

**15** $^{c}$) K4 चेदं; T2 G2. 3 M1 इव (for इदं).

**16** All MSS. om. the ref.! — $^{a}$) Ś1 विलप्य°; D2 प्रलप्य°. — $^{b}$) G1 भामिनी (for भारत). — $^{c}$) G1 महावेश्म.

**17** $^{ab}$) G1 नृपम् (for रथम्). T2 G2–4 M1 आलोक(T2 G3 °रोह)यंती ददृशे भैमी राजन्मनस्विनी. — $^{c}$) T2 G महाराजं (G1 सवार्ष्णेयं) (for मही°). — G4 om. (hapl.) $17^{d}$–$19^{c}$. — $^{d}$) T1 M2 सवार्ष्णेयं सबाहुकं; G1 महीपालं सबाहुकं.

**18** K3 G4 om. 18 (for G4 cf. v.l. 17). — $^{b}$) T2 G2. 3 महारथात् (for रथो°). — $^{c}$) Dc [आ]शु (for [अ]थ). — $^{d}$) K2 B1 Dn °मास वै रथं; K4 D1. 5 °मास तं रथं; D3 (*sup. lin.* as in text) °मास भूरथं; T1 (*inf. lin.* as in text) °मास कूबरं.

**19** G4 om. $19^{abc}$ (cf. v.l. 17). — $^{a}$) T1 रथात्तस्माद् (for रथोप°). — $^{b}$) K4 D5 महारथः; B Dc D4. 6 T1 महीपतिः (for नरा°). — K1 om. $19^{c}$–$20^{b}$. — $^{c}$) K2. 3 B2. 4 Dc1 Dn D4. 6 T G (G4 om.) महाराजं. — $^{d}$) = (var.) 3. 50. $5^{b}$, $9^{d}$ (q.v.). B3. 4 Dc D4. 6 °पराक्रमः.

**20** K1 om. $20^{ab}$ (cf. v.l. 19). — $^{b}$) B1. 4 G1 युतः; T2 G2–4 मुदा; M1 तदा (for ततः). D1 पूजयामास भारत. — After $20^{ab}$, Ś1 K2. 3 Dn D1. 3 (marg.). 5 ins.:

336* स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ।
स तत्र कुण्डिने रम्ये वसमानो महीपतिः ।
न च किंचित्ततोऽपश्यत्प्रेक्ष्यमाणो मुहुर्मुहुः ।
स तु राज्ञा समागम्य विदर्भपतिना तदा ।

— $^{d}$) B Dc Dn2. n3 D4. 6 T1 G1 श्रीमंतं (for स्त्रीमन्त्रं). Ś1 K1–3 D2 T1 न स विंदति; K4 D5 स न विंदति; T2 G M1 न ह्यविंदत (G1 नाभ्यविंदत); M2 न स्म विंदते.

**21** $^{b}$) Ś1 K Dn D1–3. 5 स (for च). — $^{d}$) B Dc D4. 6 S (T1 corrupt) दुहित्रर्थं. K1. 3. 4 S तमा(G1 °था)गतं.

**22** $^{a}$) Ś1 वै राजन्; K1 वै राजा; B D4. 6 [अ]सौ राजा; Dc राजन्स; Dn3 T2 G2. 3 राजासौ (for राजा स). — $^{b}$) Ś1 K1 स धीमान्सत्यविक्रमः (K1 °संगरः). — $^{d}$) D2 स (for स्म). K3. 4 Dn3 (before corr.) D2 किंचन; G2 कश्चन. D5 न पश्यति कदाचन. — $^{e}$) T1 G2 °कथा (for °कथां). — After 22, T2 G2. 3 M ins.:

337* न चान्यं किंचिदारम्भं स्वयंवरविधिं प्रति ।

**23** $^{a}$) K2. 3 B Dc2 Dn D4. 5 विगणयद्; T1 ऽव्यगणयद्; G1 [ऽ]प्यगणयद्. — $^{b}$) N (except Ś1 K1 Dn2) कोशला°.

**24** $^{a}$) D5 स (for च). Ś1 K Dc D1–3. 5 T1 G2. 4 M स्वयं (for स्मयन्). — $^{b}$) Ś1 K1 Dc मनसाभि(Dc °सा स)विचिंतयन्; K2 B1. 2. 4 D1. 5. 6 °सा समचिंतयत्; K3 G1 M1 °सापि (M1 °भि-) ऽव्यचिंतयन्; K4 B3 Dn D2–4 °सा समचिंतयन् (sic); T G3 °सापि (T1 °सा हि) व्यचिंतयत्.

ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ।
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ॥ २५
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामिति वदन्क्लान्तोऽसीति पुनः पुनः ॥ २६
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ २७
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमास्थाय रथशालामुपागमत् ॥ २८
स मोचयित्वा तानश्वान्परिचार्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ २९
दमयन्ती तु शोकार्ता दृष्ट्वा भाङ्गस्वरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३०
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३१
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनास्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३२
आहो स्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
ततोऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३३
एवं वितर्कयित्वा तु दमयन्ती विशां पते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे नृप ॥ ३४

C. 3. 2889
B. 3. 73. 36
K. 3. 71. 36

इति श्रीमहाभारते आरण्यकपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

— $24^d = 25^d$. — After 24, B2 D4. 6 ins.:

338* राज्ञश्चान्यानतिक्रम्य प्राप्तोऽयमभिवादकः ।

**25** $^a$) Ś1 (by transp.) ग्रामानतिक्रम्य बहून्; K1 पुरग्रामानति°. — $^b$) Ś1 अध्यगच्छद्; K1 D1 नाधिगच्छद्. Ś1 K1 यथागतं; Dc यथासुखं. — $^c$) B3 T1 अपि कार्यं; B4 स्वल्पकार्यं; T2 G2. 3 अल्पं कार्यं. Ś1 K1. 3 D1. 3 अनिर्दिष्टं; D2 इदं चैतत् (for विनिर्दिष्टं). D6 अनल्पकार्यं निर्दिष्टं; G1 अल्पकार्यंनिविष्टं तं. — $25^d = 24^d$. — After 25, K2. 4 B2–4 Dn D3. 4. 6 ins.:

339* पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति ।

**26** $^b$) Ś1 K1. 4 विसर्जयत्; D3 (by corr.) समर्चयत्. — $^c$) Ś1 K1 B1. 3 D1. 3–6 G1 विश्रम्यताम्. K2 Dn D5 इत्युवाच; K3 S इति तदा; K4 Dc D1–3 इत्यवदत्. — $^d$) Ś1 K1 Dc D1 T1 श्रांतोसीति. K3 वदन्मुहुः (for पुनः पुनः).

**27** $^a$) D2 transp. स and सत्कृतः. — $^d$) K1 समासदत्; B D4. 6 तदाविशत्; Dc समादिशत्; D3 G1 °गमत्.

**28** T1 om. (hapl.) 28–29. — $^c$) K1. 2 B Dn D6 रथमादाय. — $^d$) G2 अश्वशालाम्. B2 D1. 2 उपाविशत्.

**29** D1 T1 om. 29 (for T1 cf. v.l. 28). — $^a$) B D4. 6 S (T1 om.) मोक्ष° (for मोच°). — $^b$) Ś1 K1. 3. 4 B1. 2. 4 Dc D3. 4. 6 परिचर्यं; K2 B3 Dn D5 उपचर्यं; D2 परिवार्य. — D3 om. from $29^{cd}$ up to $12^a$ of the next adhy. — $^c$) Ś1 K1 अथ; K3 समं (for स्वयं). Ś1 K1 B2–4 D4 M1 चैनान्. — $^d$) D2 रथोपस्थमुपा°.

**30** D3 om. 30 (cf. v.l. 29). — $^a$) K2 B Dn2. n3 D4. 6 [अ]पि; K3 D1 च (for तु). — $^b$) Ś1 भार्गस्वरिं; K1 भंगस्वरिं; K2 Dc Dn D4. 6 T2 (after corr.) G3 भंगासुरिं; K3 भार्ग्रस्वरिं; K4 भार्ग्र°; D1. 2. 5 M2 भार्ग°; T1. 2 (before corr.) G2. 4 भाग°; G1 भागस्करिं; M1 भार्गसुरिं. — $^d$) G1 बाहुकं रथमागतं.

**31** D3 om. 31 (cf. v.l. 29). — $^b$) Ś1 K1. 3 B1. 4 Dc2 Dn1. n2 D2 T2 G3 °निःस्वनः. — $^c$) K3 नलस्य च; Dc °स्येह; Dn1 T1 G2 °स्यैव. — $^d$) B1 D6 transp. च and पश्यामि.

**32** D3 om. 32 (cf. v.l. 29). — $^b$) B4 D2 °लक्षिता (for °शिक्षिता). — $^c$) Ś1 K Dc Dn D1. 5 G4 तेनाद्य. — K2 om. (hapl.) $32^d$–$33^c$. — $^d$) B D4 T2 G3 महास्वनः (for महानभूत्). D1 नैषधस्येव दृश्यते.

**33** D3 om. 33 (cf. v.l. 29); K2 D2 om. $33^{abc}$ (for K2 cf. v.l. 32). — $^a$) K1 Dn1. n2 D1. 6 अहो; B4 संघो (for आहो). D6 [S]सौ (for ऽपि). — $^b$) K1 transp. नलः and तथा. — $^c$) Ś1 Dn D5 G1 M1 तथायं; T1 यथायं (for ततोऽयं). — $^d$) B D4. 6 नलस्येवेह लक्ष्यते (B2 °क्षये).

**34** D3 om. 34 (cf. v.l. 29). — $^a$) K2–4 Dc Dn D5 सा; D1. 2 प्र-; T1 G1 M2 च (for वि-). — B4 D4. 6 एवं वितर्कयंती सा. — $^d$) Ś1 K1. 2 Dc Dn D5 शुभा (for नृप). K3 नैषधान्वेषणेन तु; K4 D1. 2 केशिनीं नाम सुप्रियां (D2 नामतः).

Colophon om. in D2. 3. G4 broken. — *Major parvan:* Ś1 T G2. 3 आरण्य. — *Sub-parvan:* N (except Dn2; D2. 3 om.) T1 G1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both): Dn M2 (before corr.) 73; D1 77;

# ७२

C. 3. 2890
B. 3. 74. 1
K. 3. 72. 1

दमयन्त्युवाच ।
गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ १
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते ॥ २
अत्र मे महती शङ्का भवेदेष नलो नृपः ।
तथा च मे मनस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते ॥ ४
बृहदश्व उवाच ।
एवं समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्थान्ववैक्षत ॥ ५
केशिन्युवाच ।
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ६
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७
बाहुक उवाच ।
श्रुतः स्वयंवरो राज्ञा कौसल्येन यशस्विना ।
द्वितीयो दमयन्त्या वै श्वोभूत इति भामिनि ॥ ८
श्रुत्वा तं प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ९
केशिन्युवाच ।
अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः ।

---

T G1–3 M2 (after corr.) 71 (as in text); M1 72. — *Śloka no.:* Dn 37; D1 36.

## 72

**1** D3 om. 1–12[a] (cf. v.l. 3. 71. 29). — [b]) Ś1 रथवाहनः; T1 G1 M2 °सारथिः. — [c]) B3 स निविष्टो (for उप°). — [d]) T1 G1 M2 ह्रस्वो विकृतबाहुकः.

**2** D3 om. 2 (cf. v.l. 1). — [c]) Ś1 ह्येतं; K1 त्वेनं. — [d]) T1 G1 यथा वक्ष्यत्यनिंदिते; M2 याथातथ्यमनिंदिते.

**3** D3 om. 3 (cf. v.l. 1); D2. 5 om. (hapl.) 3–4. — [b]) K3 आवेदय (for भवेदेष). — [c]) N (except Dc; D2. 3. 5 om.) G1 यथा (for तथा). Ś1 K3. 4 Dc D1 G1 हि (for च). K2. 4 B Dn D1. 4. 6 मनसस् (for मे मनस्-).

**4** D2. 3. 5 om. 4 (cf. v.l. 1, 3). — [a]) K4 चैवं; T1 G1 त्वेनं (for चैनं). — [b]) K3 तथा (for यथा). — [d]) G1 पृच्छे° (for बुध्ये°).

**5** D3 om. 5 (cf. v.l. 1). All MSS. om. the ref.! — [a]) K2 Dn D5 ततः (for एवं). T2 G3 भूत्वा (for गत्वा). — [b]) D4 G2 दूती वाक्यमथाब्रवीत्. — [d]) Ś1 K2 Dc1 Dn ह्युपैक्षत; K1 [अ]भ्युपैक्षत; K3 [अ]भ्युदीक्षते; K4 ह्यवेक्ष्यते; Dc2 [अ]भ्युदैक्षत; D1. 2 ह्युदैक्षत; D5 [अ]प्युदैक्षत; T G3. 4 व्यवै(T1 °वे)क्षत; G1 M ह्यवै°; G2 [अ]भ्यवै°.

**6** D3 om. 6 (cf. v.l. 1). Ś1 K1 केश्युवाच (sic)! — [c]) T1 G1 सौम्य (for साधु). — [d]) K1 मनुजर्षभ

**7** D3 om. 7 (cf. v.l. 1). — [a]) T1 कदा हि; G1 कदापि. — [b]) K3. 4 B1. 3. 4 Dc °मिहमागताः (sic)! — [c]) K3 सत्यं (for तत्त्वं).

**8** D3 om. 8 (cf. v.l. 1). — [b]) K2 Dn D1 कोश- (Dn2 °स)लेन; K3. 4 B2–4 Dc D4. 6 कौशल्येन; B1 T2 G कौसलेन; D2. 5 T1 कौशलेन. K2. 4 D (except D4. 6; D3 om.) महात्मना. — [d]) K1 T1 G4 इव (for इति). B D4. 6 भाविनि; T1 G4 M1 भामिनी. K2–4 Dc Dn D1. 2. 5 भविता श्व इति द्विजात्.

**9** D3 om. 9 (cf. v.l. 1). — [a]) K1 श्रुतस्. K2. 4 Dc Dn D2. 5 [ए]तत्; K3 G1 तत्; D1 [ए]व (for तं). T1 तत्र स्थितो; T2 G3 चाभ्यागतो; G2. 4 त्वभ्यागतो; M1 तं ह्यागतो (for तं प्रस्थितो). — [c]) T2 G2. 3 M1 वातसमैर्. — [d]) B D4 अप्यस्य; G1 अश्वस्य (for अस्य च).

**10** D3 om. 10 (cf. v.l. 1). Ś1 K1 केश्युवाच (sic)! — [a]) B3 T1 द्वितीयो (for तृतीयो). Dn3 D1 T1 वा; T2 G2. 3 वै (for वः). G1 अथ कोसौ नृपसुतः. — [b]) Dc संगतः; G1 सत्कृतः (for स कुतः). K3 वागतः (for वा पुनः). — [c]) M1 त्वयि (for त्वं च). K1 चेह; K3 वास्य (for चेदं).

त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥ १०
बाहुक उवाच ।
पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रे भाङ्गस्वरिमुपस्थितः ॥ ११
अहमप्यश्वकुशलः सूदत्वे च सुनिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ १२
केशिन्युवाच ।
अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः ।
कथंचित्त्वयि वैतेन कथितं स्यात्तु बाहुक ॥ १३
बाहुक उवाच ।
इहैव पुत्रौ निक्षिप्य नलस्याशुभकर्मणः ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ १५
आत्मैव हि नलं वेत्ति या चास्य तदनन्तरा ।
न हि वै तानि लिङ्गानि नलं शंसन्ति कर्हिचित् ॥ १६
केशिन्युवाच ।
योऽसावयोध्यां प्रथमं गतवान्ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनः पुनः ॥ १७
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ १८
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवारात्रं वस्त्रार्धेनाभिसंवृता ॥ १९
तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च ॥ २०
तस्यास्तत्प्रियमाख्यानं प्रब्रवीहि महामते ।

C. 3. 2910
B. 3. 74. 21
K. 3. 72. 21

---

**11** D3 om. 11 (cf. v.l. 1). — $^{a}$) D1 T2 G2–4 M1 transp. वै and सूतो. — $^{c}$) B1. 2. 4 D4. 6 प्र° (for वि°). — $^{d}$) K2 B3. 4 Dc Dn D4. 6 T2 (after corr.) G3 भांगासुरिम्; K3 D2 भार्ग्रस्वरिम्; K4 D1. 5 भार्ग°; T1. 2 (before corr.) G2. 4 भाग°; G1 भागस्करिम्; M1 भार्गस्वरिम्; M2 भार्ङ्ग°. D1 उपाश्रितः.

**12** D3 om. 12$^{a}$ (cf. v.l. 1). D1 om. 12$^{ab}$. — $^{a}$) T1 G1 M2 अश्व° (for अश्व°). — $^{b}$) N T2 (by corr.) G3. 4 M2 सूतत्वे; G1 सूदने (for सूदत्वे). Cf. 3. 73. 22$^{c}$ and v.l., where also there is confusion between सूत and सूद. K2–4 D (except D4. 6; D1 om.) G1 प्रतिष्ठितः; B1 सुनिश्चितः; B3 विनिश्चितः; T2 G3 विनिष्ठितः. T1 सितत्वेपि च निष्ठितः; G2 सूदकर्मसु निष्ठितः. — $^{c}$) B3 ऋतपर्णस्य. — $^{d}$) K2 वै; T2 G3 [ऽ]पि (for च). Ś1 K1 धृतः (for वृतः). D3 corrupt.

**13** Ś1 K1 केश्युवाच (sic)! — $^{b}$) D1 कुतो (for क्व नु). G1 (by transp.) गतो नलः; M2 नलो नृपः. — $^{c}$) K2. 3 B D (except D1. 2) T G कथं च (for कथंचित्). K3. 4 Dn D5 S (except M2) चैतेन; B Dc D3. 4. 6 वा तेन; D1 एतेन (for वैतेन). — $^{d}$) K2 Dc2 M2 नु; D2 च (for तु).

**14** $^{b}$) Ś1 K B3 Dn D1. 5 T1 G1 M शुभकर्मणः; Dc शुभलक्षणः; T2 G2–4 प्रियदर्शनौ (for [अ]शुभ°). D2 तस्यैव शुभ°. — $^{c}$) K3. 4 D2 सूतो (for ततो).

**15** $^{a}$) Dc1 D2 चास्य (for चान्यः). — $^{b}$) T1 न तु; G1 न च (for नलं). B2 नलं जानाति वै नृपं. — $^{c}$) G4 लोकेषु (for लोकेऽस्मिन्).

**16** $^{a}$) D2 आत्मानं (for आत्मैव). Ś1 K2–4 Dn D1. 2. 5 T1 G1 तु (for हि). K2–4 Dn D1. 4. 5 वेद (for वेत्ति). — $^{b}$) D5 यो वास्य; T2 G3 या वास्य; G1 यश्चास्य (for या चास्य). Ś1 K1 G4 तदनंतरं. Dn2 न चैवान्योपि कश्चन; D1 दमयंती स्यादनंतरा; D दमयंतीं पतिं प्रभुं. — $^{c}$) K2 Dn D5 वै स्वानि; K3 Dc D1. 2. 6 T2 G2–4 चैतानि (for वै तानि). — $^{d}$) Ś1 नरः; K2–4 B1. 2. 4 D (except Dc) नलः. N (except B3 Dc1) T1 शंसति. K3. 4 कस्यचित्.

**17** Ś1 K1 केश्युवाच (sic)! — $^{b}$) K2 Dn D5 गतोसौ ब्राह्मणस्तदा; S (except T G1) ब्राह्मणो गतवांस्तदा. — $^{c}$) T1 G1 तानि (for नारी-). — $^{d}$) M1 पठन्युक्तः (for कथ°).

**18** = 3. 67. 9.

**19** = (var.) 3. 67. 10. — $^{a}$) Ś1 K1 तथा (for यथा). — $^{b}$) K2–4 B D (except D1) T2 G तथास्ते. Ś1 K1 Dc D6 तत्- (for त्वत्-). Some MSS. -प्रतीक्षणी. — $^{c}$) K2 Dn D1. 5 दिवा रात्रौ.

**20** = (var.) 3. 67. 11. — K4 om. 20$^{b}$–21$^{a}$. — $^{c}$) K2. 3 B4 Dn D2. 4–6 मे वीर; Dc वीर त्वं (for वै वीर). — $^{d}$) K1 Dc D3 ददस्व च; K2 Dn D1. 2. 5 वदस्व च; B1. 2 T2 G3 प्रयच्छत; D4. 6 प्रयच्छ हि.

**21** K4 om. 21$^{a}$ (cf. v.l. 20). — $^{a}$) B2 ततस् (for तस्यास्). T1 M2 आख्यातुं; T2 G2–4 M1 आख्यास्ये (for आख्यानं). — $^{b}$) Ś1 K D (except D4. 6) प्रवदस्व; B2

C. 3. 2910
B. 3. 74. 21
K. 3. 72. 21

तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता ॥ २१
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २२
बृहदश्व उवाच ।
एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ २३
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् ॥ २४
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ २५
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचा धारयन्तीह सत्स्त्रियः ॥ २६
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ २७
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ २८
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः ।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत ॥ २९
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं चैव तस्य तम् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

तद्ब्रवीहि; B3. 4 T1 G1 प्रब्रवीमि; G2 °वीषि. M1 यथामति. — D2 om. (hapl.) $21^{d}$–$22^{c}$.

**23** $^{a}$) K4 Dn2 G1 एवमुक्ते तु; Dc D3 T1 °क्तस्तु. — $^{c}$) T1 G1. 4 transp. हृदयं and व्यथितं. — $^{d}$) D3 M2 वि- (for च).

**24** $^{a}$) Ś1 स न गृह्या°; K2 B3. 4 Dn D5 T2 G3 स निग्राह्या°; K3 B1. 2 संनिग्राह्या°; D2 संगृह्य चात्मनो; T1 G1. 2. 4 संनिगृह्य मनो-. D1 वेगं (for दुःखं). — $^{d}$) Ś1 K1. 4 D1. 2 बाहुकश्चे° (for पुनरेवे°).

**25** = 3. 68. $8^{abcd}$. — Before 25, K2 B D (except D2. 5) T G1–3 ins. बाहुक उ° (resp. बाहुकः). — Ś1 K1 om. $25^{cd}$. In D3, the portion from मात्मना (in $25^{c}$) up to स्वरि in $21^{e}$ of the next adhy. is lost on a missing fol. (105). G1 जित्वा (for सत्यो). — $^{d}$) K3. 4 B2 Dn D1. 2. 5 M2 जितः स्वर्गो; T1 जितस्वर्गो. G1 स्वर्गं गच्छंत्यसंशयं.

**26** $26^{ab}$ = (var.) 3. 68. $8^{ef}$. — D3 missing (cf. v.l. 25). — $^{a}$) K2. 4 Dc Dn D2. 5 T2 G2–4 M चापि; B4 सर्वा; T1 G1 साध्व्यो (for चैव). — $^{b}$) K4 D2 न कुप्यंति. T2 G2–4 M1 कथंचन. — $^{c}$) Ś1 K2 B D (D3 missing) °कवचान् (Dc °कं चैव); K3 °कवचं. — $^{d}$) K1 [इ]ति मत्स्त्रियः; K2 Dn D2. 5 वरस्त्रियः; K4 Dc D1 कुलस्त्रियः (for [इ]ह सत्स्त्रियः). — After 26, K4 B4 Dn D4. 6 S *repeat* 3. 68. 9 (some MSS. with slight v.l.).

**27** = 3. 68. 10. — D3 missing (cf. v.l. 25). K4 D6 om. 27.

**28** = (var.) 3. 68. 11. — D3 missing (cf. v.l. 25). — $^{b}$) K1 ज्ञात्वा (for दृष्ट्वा). K1. 2 Dn D5 T2 G2–4 M1 तथाविधं; Dc1 यथागतं. — $^{c}$) K2 Dn D5 राज्यभ्रष्टं (for भ्रष्टराज्यं). — $^{d}$) Ś1 K1. 3 दुःखितं. K3. 4 Dc D1. 2. 5 व्यसनप्लुतं.

**29** D3 missing (cf. v.l. 25). — $^{b}$) K2 D (except D2. 4. 6) परमदुर्मनाः. — $^{c}$) K1 D1 रोद्धुं (for सोढुं). — $^{d}$) B D4. 6 [अ]थ (for च).

**30** D3 missing (cf. v.l. 25). — $^{a}$) D2 G1 तत्र (for ततः). — $^{c}$) T2 G2. 3 यत्तेन (for तत्सर्वं). — $^{d}$) K2 B1. 2 Dn D5 M2 transp. चैव and तस्य. Ś1 K1. 3 B4 D5 M1 तत्; K2 ह; T2 G3. 4 वै (for तम्). T1 G1 विकारश्चैव भामिनी.

Colophon om. in D2. D3 missing. — *Major parvan:* Ś1 Dn2 D6 T G2–4 M1 आरण्य. — *Sub-parvan:* N (D2 om.; D3 missing) T1 G1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both): Dn M2 (before corr.) 74; D1 78; T G M2 (after corr.) 72 (as in text); M1 73. — *Śloka no.:* Dn 30; D1 29.

## 73

**1** 1–$21^{c}$ missing in D3 (cf. v.l. 3. 72. 25). — $^{ab}$) Ś1 [इ]ति (for तु). S (except T1 G1 M2) केशिन्यास्तद्वचः श्रुत्वा दमयंती विशां पते. — $^{c}$) Dc चैव (for तं वै).

## ७३

बृहदश्व उवाच ।

दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ २
यदा च किंचित्कुर्यात्स कारणं तत्र भामिनि ।
तत्र संचेष्टमानस्य संलक्ष्यं ते विचेष्टितम् ॥ ३
न चास्य प्रतिबन्धेन देयोऽग्निरपि भामिनि ।
याचते न जलं देयं सम्यगत्वरमाणया ॥ ४
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ॥ ५
दमयन्त्यैवमुक्ता सा जगामाथाशु केशिनी ।
निशाम्य च हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ६
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तदा दृष्टं बाहुके दिव्यमानुषम् ॥ ७

केशिन्युवाच ।

दृढं शुच्युपचारोऽसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः ॥ ८
ह्रस्वमासाद्य संचारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ।

C. 3. 2930
B. 3. 75. 9
K. 3. 73. 9

---

**2** $D_3$ missing (cf. v.l. 1). — $^{a}$) $D_2$ transp. गच्छ and भूयः. Dc गच्छ (for भूयस्). — $^{b}$) $T_2$ $G_{2-4}$ बाहुकस्य समीपतः. — $^{d}$) $T_1$ उप- (for अस्य). $D_2$ $M_2$ चरितं तस्य लक्षय.

**3** $D_3$ missing (cf. v.l. 1). — $^{a}$) $G_{2.4}$ transp. किंचित् and कुर्यात्. $D_2$ वै कुर्यात् (for कुर्यात्स). $D_1$ $G_{2.4}$ च (for स). $T_2$ $G_3$ यदा च कुर्याद्यत्किंचित्; $G_1$ कुर्याद्यत्किं च चरितं. — $^{b}$) B $D_{4.6}$ कौशलं (for कारणं). $K_2$ B $Dc_1$ $Dn_3$ $D_{4.5}$ भाविनि (*or* °नी); $Dc_2$ भावितं; $T_2$ $G_{2-4}$ चाधिकं. $G_1$ स तस्यास्ति परीक्षणं. — $D_2$ om. (hapl.) $3^{c}$–$4^{b}$. — $^{d}$) $Ś_1$ $K_{1.2}$ Dc Dn $D_{1.5}$ लक्षयंती; $K_{3.4}$ संलक्षंती; $B_1$ संलक्षते; $B_3$ संवक्ष्यंते; T $G_{2-4}$ $M_2$ संलक्ष्ये(*or* °क्षे)थाः; $G_1$ लक्षयेथाः; Cnp संलक्ष्यं ते (as in text).

**4** $D_3$ missing (cf. v.l. 1). $D_2$ om. $4^{ab}$ (cf. v.l. 3). — $^{a}$) $T_1$ $G_{1.2}$ न चास्याप्रति°; $M_1$ न चास्मै प्रति°. — $^{b}$) $K_2$ $B_{1.2.4}$ Dn $D_{4.6}$ केशिनि; $B_3$ Dc $D_5$ भाविनि. — $^{d}$) $Ś_1$ त्वरया त्वरमाणया; $K_{1.3}$ त्वया सत्वर°; $K_2$ Dn $D_1$ सर्वथा त्वर°; $K_4$ सकृदत्वर°; Dc M सक्तमत्वर°; $D_{2.5}$ सर्वमत्वर°; $T_1$ सकृत्संचर°; $T_2$ $G_{3.4}$ सकृच्च त्वर°; $G_1$ किंचिदत्व°; $G_2$ असकृच्चर°.

**5** $D_3$ missing (cf. v.l. 1). — $^{a}$) $G_1$ समाचक्ष्व (for समीक्ष्य त्वं). — $^{b}$) $K_4$ Dc $T_2$ G त्वरितं (for चरितं). $D_1$ चरितानि च वेदय. — After $5^{ab}$, $K_2$ $B_3$ Dn $D_5$ ins. (a v.l. of $7^{cd}$):

340* निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषम् ।

— $^{c}$) $K_3$ अथा° (for यच्चा°). $G_1$ यच्चाप्यन्यदपश्येथाः. — $^{d}$) $K_{3.4}$ $B_3$ तदाख्येयं; $G_1$ तत्रा°. $K_1$ त्वयानघे.

**6** $D_3$ missing (cf. v.l. 1). — $^{b}$) $K_2$ Dn $D_5$ च; $K_{3.4}$ $D_{1.2}$ $G_1$ सु- (for [आ]शु). — $^{c}$) $Ś_1$ $K_{1.2.4}$ $B_{1.3.4}$ Dn $D_5$ $T_2$ $G_3$ निशम्य. $K_2$ Dn $D_5$ [अ]थ; $G_1$ तु (for च). B $D_{4.6}$ यथान्यायं; $D_2$ तथा तस्य (for हय°). $K_4$ (by corr.) निशम्य चाह राज्ञश्च; Dc निशम्य तानि चान्यानि. — $^{d}$) $D_2$ आगता (for अगमत्).

**7** $D_3$ missing (cf. v.l. 1). — $^{a}$) $B_2$ यथादृष्टं; $D_{4.6}$ °न्यायं; $G_1$ °तत्त्वं. — $^{b}$) $D_2$ निवेदयत्. — With $7^{cd}$ cf. 340* above. — $^{c}$) $K_2$ $B_{1-3}$ Dc Dn $D_{4.5}$ $T_2$ $G_3$ $M_2$ तया; $K_3$ $B_4$ $D_1$ त्वया; $K_4$ यथा; $D_6$ मया (for तदा). $D_2$ निमित्तं च यथावृत्तं. — $^{d}$) $Ś_1$ $K_3$ देव°; $K_{1.2.4}$ $B_3$ Dn $D_{1.5}$ दैव° (for दिव्य°). $D_2$ बाहुकेनैव मानुषं.

**8** $D_3$ missing (cf. v.l. 1). — $^{a}$) $K_2$ $D_5$ तस्योपचारो°; $K_3$ शुद्धोप°; Dc गुह्योप°; $T_2$ $G_{3.4}$ शुच्यपदानो°; $G_1$ शुभापदानो°; $G_2$ दिव्यापदानो°; $M_1$ दिव्योपचारो°. $T_1$ दृढं शुच्यपचारेण. — $^{c}$) $K_1$ दृष्टपूर्वा; $K_3$ $G_2$ दृष्टपूर्व-; $Dn_3$ $D_2$ दृष्टः पूर्वं. — $^{d}$) $K_4$ $M_2$ यथाविधः.

**9** $D_3$ missing (cf. v.l. 1). — $^{a}$) $T_1$ $G_1$ स्वयम् (for ह्रस्वम्). $T_2$ $G_{2-4}$ तु द्वारं (for संचारं). — $^{c}$) $K_3$ $D_1$ तत्र; Dc तं च (for तं तु). $K_4$ transp. तु and दृष्ट्वा. $K_4$ $T_2$ $G_{2.3}$ तथासंगम्. — $^{d}$) $K_3$ न सर्पति; $K_4$ $D_2$ स सर्पति; $G_1$ अर्पयंति (for उत्सर्प°). — $^{e}$) $Ś_1$ $K_{1.3}$ [ऽ]प्यत्र; S (except $T_1$) तस्य (for ऽप्यस्य). $Ś_1$ $K_{2-4}$ D (except $D_{2.4.6}$) सुमहान् (for सुमहद्). — $^{f}$) $T_1$ $G_1$ कुरुते; $T_2$

C. 3. 2930
B. 3. 75. 10
K. 3. 73. 9

संकटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ॥ ९
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा च मांसं सुबहु पाशवम् ॥ १०
तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः ।
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत्तदा ॥ ११
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय आविध्यैनं समादधत् ॥ १२
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता ॥ १३
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैव दह्यत्यसौ शुभे ॥ १४
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ॥ १५
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ ॥ १६
भूय एव सुगन्धीनि हृषितानि भवन्ति च ।
एतान्यद्भुतकल्पानि दृष्ट्वाहं द्रुतमागता ॥ १७

बृहदश्व उवाच ।

दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १८
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् ॥ १९

---

G2–4 M भवते (for जायते). K2 B1 Dc Dn D5 विवरो जायतेधिकः (B1 °कं); K3. 4 D1. 2 विचारो जायतेधिकः.

**10** D3 missing (cf. v.l. 1). — b) K2 D5 त्वनेकशः (for अने°). — c) Ś1 K1. 2 D (except D4. 6; D3 missing) तु (for च). — d) Ś1 K1. 2 B2. 4 Dc Dn D5 बहु च; K3. 4 B3 D4. 6 च बहु; B1 बाहुक (for सुबहु). K2 D5 पायसं; T1 G1 पेशलं; T2 G2. 3 पाशुकं; G4 पाचकं (for पाशवम्). D1. 2 मांसं चैव (D1 बहु) प्रभूतवत्.

**11** D3 missing (cf. v.l. 1). — a) D1 प्रक्षालनार्थं च; T2 G (except G1) चैव जलार्थाय. — b) D4. 6 [अ]थ; T1 G1. 2 [अ]पि; T2 G3. 4 M [अ]भि- (for [उ]प-). K2 Dn D5 कुंभास्तत्रोपकल्पिताः. — c) Ś1 K1 वीक्षितः; T1 G1 वेक्षितः (for [अ]वेक्षितः). K2 Dn D5 ते (K2 स) तेनावेक्षिताः कुंभाः. — d) Ś1 K1. 3. 4 ततः (for तदा). K2 Dn D5 पूर्यमाणाभवंस्ततः.

**12** D3 missing (cf. v.l. 1). — b) K2 D5 संविसृज्य च; K3 समधिसृत्य; D2 T1 G4 °श्रुत्य. — c) K1 B D4. 6 उपादाय (B2 अवेक्ष्याथ); Dc समास्थाय; M2 समाधाय. — d) Ś1 समृद्धेग्नौ; K1 समिद्धेग्नौ; K2 D5 समिध्यंतं; K3 समिद्धे तं; K4 सोपध्मातुं; B1. 2. 4 Dn D4. 6 सवितुस्तं; B3 Dc समिधे तं; D1. 2 समृद्ध्यर्थं; G1 ह्याविध्यैनं. Ś1 K1. 3 D1. 2 समासृजत्; K4 समादधे; D5 अवासृजत्.

**13** D3 missing (cf. v.l. 1). — After $13^{ab}$, T1 G1 read $17^{cd}$ followed by 341*. — c) Ś1 T1 तम् (for तद्). K3 D1 तदद्भुतमिदं दृष्ट्वा; T2 G2–4 तस्यैतच्चरितं दृष्ट्वा.

**14** D3 missing (cf. v.l. 1). — a) K3 transp. तस्मिन् and सुमहत्. — K1 om. (hapl.) $14^{b}$–$15^{c}$. — c) B2 D4. 6 उप- (for अपि). — d) B2 Dc D4. 6 T2 G2–4 न च (for नैव). K (K1 om.) D (except D4. 6; D3 missing) [अ]सौ दह्यते; G1 दह्येदसौ (for दह्यत्यसौ).

**15** D3 missing (cf. v.l. 1). K1 om. $15^{abc}$ (cf. v.l. 14). — a) G1 शयेन (for छन्देन). K4 T1 G1 [ए]व (for च). — b) Ś1 T1 G1 भवत्या° (for वहत्या°). D4. 6 बहु; G1 ध्रुवं; M1 घटं (for द्रुतम्). T2 G2–4 भवत्यावर्जिताद्घटात्. — c) Ś1 (corrupt) अवतीर्यं (for अतीव). K3 तस्य (for चान्यत्). — d) D2 °र्यं पश्यती ह्यहं.

**16** D3 missing (cf. v.l. 1). — a) Dc यानि; D2 यतः; M2 यत्सु- (for यत्स). — b) K4 पाणिभ्यां (for हस्ता°). T2 G3. 4 ममृशे; G2 अमृशत् (for ममृदे). — c) T2 G2–4 मृश्यमानानि. K3 पुष्पाणि; G4 बाहुभ्यां. — d) Ś1 चान्यथा; K2 Dc2 Dn D2 T2 G2–4 नान्यथा; T1 G1 तान्यपि (for तान्यथ).

**17** D3 missing (cf. v.l. 1). — a) Ś1 K3 भूयश्चापि; K1 भूयस्तानि; G1 भूत्वा भूयः. Ś1 K1. 2 सुगंधानि. — b) K1 [अ]पि; K2. 3 B4 D (except D2. 4. 6; D3 missing) T2 G3 हि; B1 वै; M2 [उ]त (for च). T1 हृषितानि तथैव च. — T1 G1 read $17^{cd}$ after $13^{ab}$. — c) Ś1 K Dc Dn D1. 2. 5 °लिंगानि; B D4. 6 T1 G1 °रूपाणि (for °कल्पानि). — d) K1 पुनरागता; S भृशविस्मिता (M2 °मागता). — After 17, S ins.:

341* चेष्टितानि विशालाक्षि बाहुकस्य समीपतः ।

**18** D3 missing (cf. v.l. 1). — a) Ś1 दृष्ट्वा (for श्रुत्वा). — Ś1 K1 om. (hapl.) $18^{cd}$. — d) Dc कर्मचेष्टित°.

**19** D3 missing (cf. v.l. 1). — a) K4 आशंक° (for सा शङ्क°). — b) Ś1 K Dn D1–3. 5 बाहुकं पुनरिं-

पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छृतं मांसं समादायैहि भामिनि ॥ २०
सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी ।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ॥ २१
सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूदं प्राक्रोशद्भृशदुःखिता ॥ २२
वैक्लव्यं च परं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत ॥ २३
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् ॥ २४
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सस्वरं प्ररुरोद ह ॥ २५
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ २६
इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः ।
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ २७
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे नमोऽस्तु ते ॥ २८

C. 3. 2950
B. 3. 75. 28
K. 3. 73. 28

इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

गितैः. — $^c$) Ś$_1$ Dc$_1$ केशिनी. — $^d$) Ś$_1$ K$_{2-4}$ D (except D$_{4.6}$) T$_1$ G$_1$ M$_2$ रुदंती ; G$_2$ शंसंतीं.

**20** D$_3$ missing (cf. v.l. 1). D$_2$ om. from $20^b$ up to $1^a$ of the next adhy. — $^b$) T$_1$ [ए]व संवृतं ; T$_2$ G M सुसंस्कृतं (G$_1$ [ए]व सांप्रतं) (for [उ]पसंस्कृतम्). — $^c$) Ś$_1$ K$_4$ B$_1$ Dn$_2$ M$_2$ श्रितं ; B$_2$ च तं ; T$_2$ G$_3$ द्रुतं ; G$_{2.4}$ घृतं (for श्रृतं). K$_3$ G$_1$ महानसाश्रि(G$_1$ °श्रृ)तं मांसं. — $^d$) Ś$_1$ समादायेह ; K$_1$ B$_2$ °य हि ; K$_2$ Dn D$_5$ आनयस्वेह ; Dc समादायैव ; T$_2$ G$_{2-4}$ M$_1$ आदायेहै(G$_2$ °यैह्ये- ; G$_4$ °यैहै)-हि. K$_2$ भाविनी ; B Dc Dn$_{2}$. n$_3$ D$_{4-6}$ भाविनि (B$_2$ केशिनी).

**21** D$_2$ om. 21 (cf. v.l. 20). D$_3$ resumes from ता in $21^c$ (cf. v.l. 3. 72. 25). — $^a$) K$_{2.3}$ (by corr. *sec. m.*) Ḋn D$_5$ बाहुकस्याग्रे (for °के व्यग्रे). — $^b$) K$_3$ M$_2$ उप° (for अप°). Ś$_1$ K$_{3.4}$ D$_1$ M ह (for च). — $^d$) K$_{2.4}$ D (except D$_{4.6}$ ; D$_2$ om.) तत्क्षणात्. — $^e$) T$_2$ G$_{2-4}$ तदा (for ततः). — $^f$) K$_3$ कुरुसत्तम ; G$_1$ °पुंगव.

**22** D$_2$ om. 22 (cf. v.l. 20). — $^a$) K$_4$ (by corr.) सूचिता ; T G$_{2-4}$ M साशिता (for सोचिता). G$_1$ प्राशिता नलसिध्यर्थं. — $^c$) K$_{2.4}$ B D (except D$_{1.3}$ ; D$_2$ om.) T$_1$ M$_2$ सूतं (for सूदं).

**23** D$_2$ om. 23 (cf. v.l. 20). — $^a$) K$_2$ D$_5$ वैकल्यं ; B D$_6$ क्लैव्यं च ; D$_4$ क्लैब्यं च. K$_{2-4}$ B D (D$_2$ om.) T$_2$ G$_{1.3}$ परमं ; T$_1$ च पुनर् ; M$_2$ तु परं. — $^b$) T$_1$ G$_1$ वदनं (for च मुखं). — $^d$) T$_2$ G$_{3.4}$ मानिनी ; G$_2$ भामिनी (for भारत).

**24** D$_2$ om. 24 (cf. v.l. 20). — $^b$) G$_1$ M$_2$ तद-(M$_2$ °दा)भिज्ञाय. T$_2$ G$_{2-4}$ तां विज्ञाय च नैषधः ; M$_1$ तदा विज्ञाय नैषधः. — $^c$) D$_1$ सोभिकृत्य (for अभि°). Dc$_2$ नलो ; S (except T$_1$ G$_1$) तदा (for ततो). — $^d$) Ś$_1$ K$_1$ परिपूज्यांक°.

**25** D$_2$ om. 25 (cf. v.l. 20). — $^c$) Ś$_1$ M$_2$ भृश- (for भृशं). — $^d$) Ś$_1$ स स्वयं ; K$_1$ B$_2$ Dc सस्वनं ; K$_{3.4}$ B$_4$ Dn D$_{1.3-6}$ G$_4$ सुस्वरं.

**26** D$_2$ om. 26 (cf. v.l. 20). — $^a$) T$_1$ G$_1$ M$_2$ [अ]थ ; G$_4$ तौ (for तु). — $^b$) Dc असृजत् (for असकृत्). T$_1$ G$_1$ तथा.

**27** D$_2$ om. 27 (cf. v.l. 20). — $^a$) Ś$_1$ K$_2$ Dn D$_5$ च ; K$_3$ D$_3$ (by corr.) तु ; B$_1$ D$_{4.6}$ स्व- (for सु-). — $^c$) Ś$_1$ K D (except D$_{4.6}$) T$_1$ G$_1$ M$_2$ अतो (for ततो). D$_1$ -निमित्तं (for दृष्ट्वैव).

**28** D$_2$ om. 28 (cf. v.l. 20). — $^a$) K$_2$ D$_5$ संवदंतीं (for संप°). — $^b$) S (except T$_1$ G$_1$ M$_2$) दोषवत् (for °तः). — $^d$) Dc$_2$ transp. गच्छ and भद्रे. B D (except D$_{1.3.5}$ ; D$_2$ om.) S (except T$_1$ G$_1$ M$_2$) यथासुखं (for नमोऽस्तु ते).

Colophon om. in D$_2$. — *Major parvan :* Ś$_1$ Dn$_2$ D$_6$ T G$_{2-4}$ आरण्य. — *Sub-parvan :* N (D$_2$ om.) T$_1$ G$_1$ (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both) : Dn M$_2$ (before corr.) 75 ; D$_1$ 79 ; T G M$_2$ (after corr.) 73 (as in text) ; M$_1$ 74. — *Śloka no. :* Dn 29.

# ७४

C. 3. 2951
B. 3. 76. 1
K. 3. 74. 1

बृहदश्व उवाच ।

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ १
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ २
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३
स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि ।
विदितं वाथ वाज्ञातं पितुर्मे संविधीयताम् ॥ ४
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानाच्च पार्थिवः ॥ ५
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ७
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ८
दृष्टपूर्वस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ ९
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ १०
किं नु तस्य मया कार्यमपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम् ॥ ११
साक्षाद्देवानपाहाय वृतो यः स मया पुरा ।

---

## 74

**1** D2 om. 1ᵃ (cf. v.l. 3. 73. 20). — ᵃ) D3 एवं (for सर्वं). S (except T1 G1 M2) तत् (for तु). — ᶜ) S (except T1 G1) आगम्य. Ś1 K1-3 Dc Dn D5 सर्वं; K4 D1-3 शीघ्रं (for क्षिप्रं).

**2** ᵈ) Ś1 K1. 4 D1. 2 नलशंकासमन्विता; K2. 3 Dc Dn D3. 5 °दर्शनकांक्षया (Dc °क्षिणी).

**3** ᵃ) K4 M1 [ऽ]पि; B Dc D4. 6 [ऽ]थ (for मे). — ᶜ) K2 D2. 5 रूपं मे; B3. 4 Dc S (except M1) रूपेण.

**4** ᵃ) D1 स च; D2 तं च (for स वा). — ᵇ) D3 M1 मा (for मां). Dc om. वा. K2 चैवाज्ञातुम्; K3 वा चाज्ञातुम्; D1. 2. 5. 6 चानुज्ञातुम्; M2 वोनुज्ञातुम्. — ᶜ) K3 Dc D1 चाथ (for वाथ). Ś1 K1. 2 D2 M2 वा ज्ञातुं; Dc विज्ञातं (for वाज्ञातं). D5 T2 G2-4 विदितं वा यथाज्ञातं; T1 G1 विदितं मे यथाज्ञातं (G1 °था ज्ञात्वा).

**5** ᵇ) K4 जननी (for सा देवी). — ᶜ) D2 स्वम् (for तम्). — ᵈ) Ś1 अभिजानात्; Dc D3 अनुजानात्; G1 अन्वजानन्. K2 B4 Dn D5 T2 G स (for च). K4 अनुजानीष्व पार्थिव.

**6** ᵇ) D1 [ए]व पुनः पुनः; T1 G1 M2 कुरुनंदन (for भरत°). — After 6, N ins.:

342* तां स दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ।

[(L. 1) D2 तां स; D3 तस्मिन्; D4. 6 तां तु (for तां स). Ś1 om. (hapl.) from the posterior half of line 1 up to 7ᵃ. D4. 6 तदा (for नलो). K1 तदा (for नृपः). — (L. 2) K4 D2 दुःखशोकाभ्यां (for शोक°). D4. 6 मन्युनाभिपरिप्लुतः.]

**7** Ś1 om. 7ᵃ (cf. v.l. 6); K4 D1. 2 om. 7. — ᵃ) K3 Dc D3 च (for तु). — ᵇ) Dc T2 G2 तथा (for तदा). — ᶜ) T1 G1 M2 °समायुक्ता.

**9** ᵃ) K2 Dn D5 पूर्वं दृष्टस् (for दृष्टपूर्वस्). — ᶜ) Dc G1 गहने; D2 विजने (for विपिने). — T1 om. (hapl.) 9ᵈ-11ᶜ. — ᵈ) B2 D6 transp. गतः and यः.

**10** T1 om. 10 (cf. v.l. 9). — ᵃ) Ś1 K3 (by corr.) Dc2 D1 अनागसां; S (except G1; T1 om.) °सीं. — ᵇ) M1 विपिने. B1 T2 G2-4 M1 श्रमकर्शितां; G1 M2 शोकमोहितां. — ᵈ) D2 S (T1 om.) °श्लोकादृते नलात्.

**11** T1 om. 11ᵃᵇᶜ (cf. v.l. 9). — ᵃ) K2 B1 Dn D1. 5 किमु (for किं नु). N (except Ś1 K1) बाल्यात्; T2 G3. 4 चीर्णं (for कार्यं). — ᵇ) G1 अपकारं. — ᶜ) K4 गतवान्; D4 विजने (for विपिने). — ᵈ) K4 विपिने (for गतवान्). K2 Dn D5 [अ]र्दितां (Dn2 °न्वितां) (for हृताम्).

**12** ᵃ) Ś1 अपास्यायं; D3 विहायेह (for अपाहाय). — ᵇ) K2. 4 D (except D1. 4. 6) transp. मया and पुरा.

अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ॥ १२
अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम् ।
भरिष्यामीति सत्यं च प्रतिश्रुत्य क्व तद्गतम् ॥ १३
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १४
अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्त इदमब्रवीत् ॥ १५
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ १६
त्वया तु धर्मभृच्छ्रेष्ठे शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां विवाससम् ॥ १७
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।
त्वच्छापदग्धः सततं सोऽग्नाविव समाहितः ॥ १८
मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ १९
विमुच्य मां गतः पापः स ततोऽहमिहागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥ २०
कथं तु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ २१
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ २२
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भाङ्गस्वरिरुपस्थितः ॥ २३
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ २४

C. 3. 2975
B. 3. 76. 25
K. 3. 74. 30

इति श्रीमहाभारते आरण्यकपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

— [c]) D$_4$ अनुजातां. T$_1$ G$_1$ M$_2$ अभिमतां; T$_2$ G$_{2-4}$ M$_1$ अभीकामां.

**13** [a]) Ś$_1$ K$_{1.3}$ D$_{2.3}$ अग्निं पाणौ गृहीत्वा तु; K$_{2.4}$ B Dc Dn D$_{1.4-6}$ अग्नौ पाणिं गृहीत्वा तु (B$_{1.3}$ च). — [b]) K$_1$ B$_4$m Dn D$_{2.4.6}$ देवानां (for हंसा°). Ś$_1$ K$_{1.4}$ B$_{1.3.4}$ Dn D$_{2.4.6}$ T$_1$ G$_1$ अग्रतः; K$_2$ D$_5$ वचनं; K$_3$ B$_2$ Dc D$_3$ °नात् (for °ने). Ś$_1$ K$_1$ पुरा; K$_2$ D$_5$ यथा; K$_{3.4}$ B Dc Dn D$_{3.4.6}$ T$_1$ G$_1$ तथा; D$_{1.2}$ तदा (for स्थिताम्). — [c]) N (except Dc$_1$ D$_{1.3}$) भविष्या°. G$_1$ संश्रुत्य (for सत्यं च). Ś$_1$ K$_1$ तत्; K$_2$ Dn D$_{1.3.5}$ तु; K$_{3.4}$ D$_2$ यत् (for च). — [d]) D$_1$ कृतव्रतां; D$_3$ तु सोगमत् (for क्व तद्गतम्).

**14** [a]) B$_3$ S (except T$_1$ G$_1$ M$_2$) दमयंत्यां ब्रुवंत्यां तु; Dc दमयंत्यब्रुवंत्यास्ते. — [c]) G$_1$ श्रुत्वा तु शोकजं वारि. — [d]) K$_3$ D$_2$ आपतद्; K$_4$ D$_1$ प्रापतद्; M$_2$ प्राद्रवद्. K$_4$ जलं (for बहु). Ś$_1$ उदकं प्राश्रुवन्मुहुः; G$_1$ नेत्राभ्यामसृजद्बहु.

**15** [a]) N (except Ś$_1$) कृष्णसाराभ्यां. — [b]) K$_3$ हि तत्; K$_4$ तु यत् (for तु तत्). D$_2$ नेत्राभ्यां च जलं तदा; S रक्ताभ्यां सलिलं तु तत्. — [c]) D$_3$ T$_2$ G$_{2-4}$ राजा (for दृष्ट्वा). D$_2$ पतितं सहसा दृष्ट्वा. — [d]) B D (except Dc$_1$ D$_1$) शोकार्ताम्. T$_1$ G$_4$ शोकार्ता (for शोकार्तं). G$_1$ शोकार्तां तामुवाच ह.

**16** [a]) Ś$_1$ K$_{1.3}$ B Dc D$_4$ T$_1$ G$_{1.4}$ प्रणष्टं. — [b]) Ś$_1$ K$_1$ transp. नाहं and तत्. — [c]) T$_1$ G$_1$ °च; M$_2$ तु (for तत्).

**17** [a]) K$_2$ Dn यस्त्वया धर्मकृच्छ्रे तु; K$_3$ Dc त्वया तु पापकृच्छ्रेण; K$_4$ D$_{1.2}$ त्वया तु धर्मकृच्छ्रेषु (D$_1$ °च्छ्रे तु); B D$_{3.4.6}$ त्वया धर्मभृतां श्रेष्ठे; D$_5$ यस्त्वया पापकृच्छ्रेण; G$_1$ त्वया च धर्मविच्छ्रेष्ठे; G$_2$ त्वया तु धर्मरतया. — [b]) D$_{4.6}$ हि (for [अ]भि-). — [c]) K$_4$ D$_2$ त्वया दुःखात् (for दुःखि°). — [d]) Ś$_1$ K$_{1.3.4}$ Dn D$_{1.2.3}$ (by corr.) दिवानिशं; G$_4$ सवाससं.

**18** [a]) Dc मच्छरीरेपि त्व°; D$_{2.3}$ मच्छरीरे तथा (D$_3$ त्वया) शापात्. — After 18[ab], K$_4$ D$_{2.3}$ ins.:

343* कर्कोटकविषादग्धो मम सत्येन शोभने ।

— [c]) T$_2$ G$_{2-4}$ स (for त्वत्-). K$_4$ संदग्धः; D$_2$ संतप्तः (for सततं). — [d]) B$_3$ Dc D$_{4.6}$ योग्ना°; T$_1$ G$_1$ M$_2$ अग्ना° (for सोऽग्ना°). K$_{1.2.4}$ Dn D$_{1.2.5}$ सोग्नावग्निरिवाहितः.

**19** [b]) T$_1$ G$_1$ च वि- (for चैव). — D$_2$ om. 19[cd]. — [c]) K$_4$ वा तेन; D$_1$ T$_1$ चान्येन; T$_2$ G$_{2-4}$ चैतेन (for चानेन). — [d]) K$_4$ नः सुखं; Dn$_3$ D$_{1.3}$ नः शुभे; S शोभने (for नौ शुभे).

**20** [b]) Dc उपा° (for इहा°). K$_2$ Dn D$_{1.2.5}$ ततोहमिह चागतः. — After 20[ab], K$_3$ ins.:

344* आविष्टः शोकदुःखाभ्यां बाष्पधारापरिप्लुतः ।

**23** [a]) T$_1$ G$_1$ स्वैरवृत्त्या. — [c]) B Dc D$_{1.4}$ G$_4$ चैतत्; T$_2$ G$_{1-3}$ चैव. — [d]) Ś$_1$ भार्गस्वरि°; K$_1$ भंगस्वरि°;

# ७५

C. 3. 2976
B. 3. 76. 26
K. 3. 74. 31

दमयन्त्युवाच ।
न मामर्हसि कल्याण पापेन परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ १
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥ २
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ॥ ३
तेन वाक्ये हृते सम्यक्प्रतिवाक्ये तथाहृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥ ४
त्वामृते न हि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ ५
तथा चेमौ महीपाल भजेऽहं चरणौ तव ।
यथा नासत्कृतं किंचिन्मनसापि चराम्यहम् ॥ ६
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ॥ ७
तथा चरति तिग्मांशुः परेण भुवनं सदा ।
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ॥ ८
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।

---

K2 Dc Dn D4. 6 T2 (by corr.) G3 भांगासुरि°; K3. 4 D1-3. 5 M1 भार्गस्वरि°; T1. 2 (before corr.) G2. 4 भागस्वरि°; G1 भागस्करि°; M2 भार्ङ्गस्वरि°. — After 23, Ś1 K3 ins.:

345* कथमुत्सृज्य भर्तारं निभृतैव वधूश्चरेत् ।

**24** $^{a}$) B4 D1. 4 T2 G3 च; Dn2. n3 [इ]ति (for तु). — $^{b}$) D2 M1 परिदेवनं. — $^{d}$) Ś1 भैमी; K1 नलं (for भीता.)

Colophon om. in K2. 4 Dn1. n2 D2. 3. 5. — *Major parvan:* Ś1 K1 T G2-4 आरण्य. — *Sub-parvan:* Ś1 K1. 3 B1-3 Dc D1. 4. 6 T1 G1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both): Dn3 M2 (before corr.) 76; D1 80; T G M2 (after corr.) 74 (as in text); M1 75. — *Śloka no.*: Dn3 25; D1 24.

## 75

**1** $^{b}$) K2 B Dn D4. 6 दोषेण (for पापेन). — $^{c}$) K4 D1. 2 T1 तु (for हि). Ś1 K1. 3 Dc मया देवान् समुत्सृ(K1 प्रत्यि)ज्य.

**2** $^{a}$) K3. 4 D4. 6 G2. 4 M तवाधि°; T1 विवाहा° (for तवाभि°). — $^{b}$) T2 G2-4 transp. सर्वतः and ब्राह्मणाः.

**3** $^{a}$) Ś1 K1 त्वा; D2 तु (for त्वां). — $^{b}$) K3 वै द्विजः (for पार्थिव). — $^{c}$) Ś1 K1. 3. 4 B Dc M अध्यगच्छत्; D2 G1 अभ्या°; D3 अध्या°. N (mostly) कोशलायां. T2 G2-4 सं(G2. 4 त्वां)दृष्टवान्कोसलेषु.

**4** $^{a}$) K2 Dn D5 वाक्ये कृते; K4 (after corr.) D2 वाक्येरिते; B4 Dc D3 G1 M °न ते; T2 G2-4 °न वै (for वाक्ये हृते). Ś1 D1. 2 तस्मिन् (for सम्यक्). K1 B1-D4. 6 तेन वाक्येन सम्यक्ते. — $^{b}$) D3 अभिज्ञाने (for प्रति°. Ś1 K1 तथागते; K3 B4 Dc D3 तथा कृते; K4 हृते त्वया; D त्वया कृते; D2 कृते त्वया; T2 G2-4 समाहृते. — $^{d}$) K4 D नैषधागमने.

**5** $^{a}$) S त्वद् (M1 यद्) (for त्वाम्). — $^{b}$) Ś1 एकाह K3 D1. 2 एकाह्नात्; G1 एकाह्नौ. D1 पृथिवीतले.

**6** $^{ab}$) T1 G1 M2 च मां (M2 मा); T2 (before corr.) G2. 4 [अ]पि मां; T2 (after corr.) G3 [अ]पीमौ; M1 चाह (for चेमौ). B1 T1. 2 (before corr.) G1. 2. 4 M भजेतां; B2 शपेहं; B3 M1 भजेयं (for भजेऽहं). Ś1 K D (except D4. 6) स्पृशेयं तेन सत्येन पादावेतौ महीपते. — $^{c}$) B4 नापकृतं; T G ना(T1 नौ; G1 न)संमतं; M न विकृतं (for नासत्कृतं). — $^{d}$) Ś1 K1. 3 मनसाभिचरा°; K1 D2. 3 (*sup. lin.*) °सापि स्मरा°; D1 °सा विस्मरा°; T1 M °सा विचरा°. — After 6, G1 M read 9.

**7** D2 T1 om. (hapl.) 7-8. G1 M transp. 7 and 8. — $^{a}$) M2 अंतश्च (for अयं). — $7^{cd}$ = (var.) $8^{cd}$, $9^{cd}$. — $^{c}$) G1 M2 स वि- (for एष). K2 Dn D5 transp. मुञ्चतु and मे.

**8** Ś1 om. (hapl.) 8-10; D2 T1 om. 8 (cf. v.l. 7). G1 M transp. 7 and 8. In K4, $8^{ab}$ is cancelled. — $^{a}$) Dn यथा (for तथा)! — $^{b}$) D1 प्रायेण; S (except T1) परितो (G1 करेण) (for परेण). K1 तथा; D3 त्विषा (for सदा). — K4 om. $8^{cd}$. — $8^{cd}$=$9^{cd}$; cf. $7^{cd}$. — $^{c}$) N (Ś1 K4 D2 om.) स मुंचतु मम प्राणान्.

**9** Ś1 D5 om. 9 (for Ś1 cf. v.l. 8). G1 M read 9

स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ॥ ९
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथासत्यमेते वाद्य त्यजन्तु माम् ॥ १०
एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ११
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ १२
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वदृतेऽन्यः पुमानिह ॥ १३
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया ॥ १४
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ १५
तदद्भुततमं दृष्ट्वा नलो राजाथ भारत ।
दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिंदमः ॥ १६
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजानं ततो लेभे वपुः स्वकम् ॥ १७
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ १८
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ १९
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ २०
तथैव मलदिग्धाङ्गी परिष्वज्य शुचिस्मिता ।
सुचिरं पुरुषव्याघ्रं तस्थौ साश्रुपरिप्लुता ॥ २१
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।

C. 3. 3002
B. 3. 76. 47
K. 3. 74. 52

---

after 6. — $9^{cd} = 8^{cd}$; cf. $7^{cd}$. — [c]) N ($Ś_1$ $D_5$ om.) स मुंचतु मम प्राणान् (cf. v.l. 8).

**10** $Ś_1$ om. 10 (cf. v.l. 8). — [a]) $K_3$ जगत् (for त्रयः). — [c]) $K_1$ तैर्ब्रुवंतु; B $D_{4.6}$ ते ब्रुवंतु; $Dn_2$ विवदंतु. B $D_{4.6}$ यथातथ्यम्. — [d]) Dn एतद् (for एते). $K_2$ Dn $D_5$ $G_1$ देवास्; $K_3$ चान्यत्; $B_{1.3}$ $D_{1.3}$ चाद्य; $B_4$ त्वद्य; $D_2$ सद्यस्; $T_1$ वाक्यं (for वाद्य).

**11** [a]) $K_2$ Dc Dn $D_5$ उक्तस् (for उक्ते). $K_2$ $Dn_1$ $D_5$ तया; $K_{3.4}$ Dc $D_{1-3}$ तदा; $Dn_2$. $n_3$ तथा (for ततो). — [b]) $D_3$ °रिक्षेभ्यभाषत.

**13** [b]) $B_2$ $D_6$ तु नल (for अतुलो). $Ś_1$ [ऽ]नघ; $K_2$ Dc मया; $G_1$ महान् (for ऽनया). — [c]) $Ś_1$ न ह्यस्या हृदयं गंता; $K_4$ $B_3$ $D_{4.6}$ न ह्येकाहाच्छतं गंता; $B_{1.4}$ न ह्येकाह्नाच्च तं गंता; $T_2$ $G_{2-4}$ नैकाह्ना दूरतो गंता. — [d]) $K_1$ $Dn_1$. $n_2$ $D_5$ त्वामृते°. $T_1$ $M_2$ इति (for इह). $K_4$ त्वदन्यः कः पुमानिह; $G_1$ ऋतेन्यः पुण्यवानिति.

**14** [b]) $K_4$ $D_2$ त्वं चास्या हि; $D_1$ उभाभ्यां च (for त्वं च भैम्या). Dc विशां पते (for मही°). — [c]) $T_2$ $G_{2-4}$ न तु (for नात्र). — [d]) $K_3$ transp. सह and भार्यया (unmetrical!).

**15** [a]) $K_4$ $D_2$ एवं; B $D_{4.6}$ ततो (for तथा). — [d]) $B_3$ शुचिः; $T_1$ शुभं; $G_1$ सुखं; $M_2$ शुभः (for शिवः). $D_1$ ववुश्च मरुतः शिवाः.

**16** [a]) $K_2$ Dn $D_{1.5}$ तदद्भुतमयं; $K_3$ $T_1$ $G_2$ $M_2$ तमद्भुततमं. — [b]) $T_2$ $G_{2.3}$ $M_1$ विशां पते (for [अ]थ भारत). — [c]) $K_{1.4}$ $D_5$ $G_2$ $M_1$ दमयंत्या; $Dn_1$ $T_1$ $G_1$ °यंतीं. $D_1$ विशंकायां; $T_1$ विशंकंतीं; $G_1$ मनःकांतां. — [d]) $Ś_1$ $K_1$ $G_4$ व्यपकर्षद्; $K_3$ Dn $D_5$ उपा°; $D_1$ अपा°; $D_2$ त्वपा°. A few MSS. अरिंदम.

**17** [a]) $K_{2.4}$ (m as in text) $B_{2.4}$ $Dn_2$. $n_3$ $D_{4.6}$ अजरं; G (except $G_3$) अरजं. — [c]) $K_{1-3}$ Dn $D_{1.5}$ $G_1$ $M_1$ नागराजं तं; $K_4$ Dc $D_{2.3}$ $T_1$ $M_2$ °राजं तु (for °राजानं). — [d]) Dc $Dn_2$ $D_3$ नलो (for ततो). $K_2$ Dn $D_5$ transp. वपुः and स्वकं.

**18** [a]) $T_1$ $G_1$ $M_2$ स्वरूपेण.

**19** [b]) B $D_{4.6}$ भजमानां; Dc $Dn_3$ भ्राजमानां. $D_2$ यथामरः; $T_{1.2}$ (before corr.) $G_{2.4}$ M °पुरं.

**20** [a]) $Ś_1$ $K_{1.3.4}$ $B_{2.3}$ $D_{4.6}$ M सोरसि; $B_1$ शिरसि; $G_1$ चोरसि. $K_3$ विन्यस्ता. — [b]) $K_3$ महात्मनः (for शुभा°). — [c]) $T_1$ $G_1$ M परिश्रांतेव दुःखेन; $T_2$ $G_{2-4}$ परिश्रांता सुदुःखेन. — [d]) $Ś_1$ $D_2$ विशश्वास; $K_1$ निःश्व°; $K_4$ निःश्वसच्च.

**21** [a]) B D (except $D_{1-3.5}$) °दिग्धांगीं. — [b]) $K_2$ $B_{1.3.4}$ D (except $D_{1-3.5}$) शुचिस्मितां; $B_2$ [आ]यतेक्षणां; S (except $T_1$ $G_1$ $M_2$) शुभानना. — [c]) $K_2$ B D (except $D_{1-3}$) $T_1$ $G_1$ $M_2$ °व्याघ्रस्. — [d]) $K_2$ B D (except $D_{1-3}$) शोकपरिप्लुतः; S (except $T_1$ $G_1$ $M_2$) चाश्रुपरिप्लुता.

**23** [a]) $K_4$ $B_3$ Dc $D_{1.3.4.6}$ $G_4$ $M_1$ महाराज. — [b]) $K_4$ $D_2$ मलं; $D_1$ नलं; $G_1$ मुदा (for अहं). $D_1$ नृपं (for

C. 3. 3002
B. 3. 76. 47
K. 3. 74. 52

भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप ॥ २२
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं काल्यं द्रष्टा सुखोषितम् ॥ २३
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ २४
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ २५
दमयन्त्यपि भर्तारमवाप्याप्यायिता भृशम् ।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा ॥ २६
सैवं समेत्य व्यपनीततन्द्री
शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा
शीतांशुना रात्रिरिवोदितेन ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

# ७६

बृहदश्व उवाच ।
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ १
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
तस्यानु दमयन्ती च ववन्दे पितरं शुभा ॥ २
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।

---

नलम्). $T_2$ $G_{2-4}$ कृतार्थं तमहं नलं. — $^c$) $D_1$ सुखो° (for सहो°). — $^d$) Ś$_1$ कल्ले; $K_{1.3}$ काले; $K_{2.4}$ (before corr.) B D कल्यं ($K_4$ marg. *sec. m.* तल्पे); $G_1$ नलं (for काल्यं). Ś$_1$ $K_{1.3}$ $D_5$ द्रक्ष्ये; $K_4$ $Dn_1$ $D_{1-3}$ $G_{1.2.4}$ दृष्ट्वा; $B_3$ प्रष्टा (for द्रष्टा). Ś$_1$ $K_{1.3.4}$ $D_{1.4}$ सुखोचितं; $D_2$ सहोचितं; $G_1$ सहोषितं.

**24** $^a$) Ś$_1$ $K_3$ Dc $T_1$ रात्रौ (for रात्रिं). — $^b$) $B_2$ परस्परं (for पुरा°). — $^c$) $K_3$ सद्भिर् (for वने). — $^d$) Ś$_1$ $K_1$ ऊचतुर्. — After 24, N ins.:

346* गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसंकल्पौ वैदर्भी च नलश्च ह ।

**25** $^a$) $D_1$ चतुर्थे तु (for स चतुर्थे). Dc नलो (for ततो). — $^b$) $K_3$ स नलः सह; $K_4$ (by corr.) $D_2$ संगत्य सह; $M_1$ सह संगम्य (by transp.). — $^c$) $K_4$ Dc $D_{1.2.4.6}$ $T_2$ $G_{2-4}$ M समृद्धार्थो (for सुसि°). $T_1$ $G_1$ सर्वकामसमृद्धात्मा.

**26** $^b$) $K_{2.3}$ Dc Dn $D_{3.5}$ आसाद्या° (for अवाप्या°). $T_1$ वाचाप्याययिता शुभं (भृशं also). — $^c$) Ś$_1$ अवशीजात°. — $^d$) $K_4$ $D_2$ जलं (for तोयं).

**27** Ś$_1$ om. 27. — $^a$) $B_4$ सोयं; Dc $D_3$ सा वै; S (except $T_1$ $G_1$ $M_2$) सा तं (for सैवं). $K_1$ व्यपीत; $D_1$ समेता (for समेत्य). $K_2$ Dn $D_5$ व्यपनीय तंद्रां ($K_2$ °द्रा; $D_5$ °द्रीं); Dc $D_{4.6}$ °नीततंद्रा. $K_3$ (marg. *sec. m.*) सैवं समेत्याद्य नलेन राजन्. — $^b$) $K_1$ $D_1$ S (except $T_2$ $G_3$ $M_1$) °विबुद्ध°; $B_2$ $D_{4.6}$ °विशुद्ध° (for °विवृद्ध°).

Colophon. — *Major parvan:* $Dn_2$ T $G_{2-4}$ आरण्य. — *Sub-parvan:* N (except $B_4$) $T_1$ $G_1$ (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. name:* $B_4$ दमयंतीसमागमः; $D_2$ विदर्भानगरे दमयंतीनलसंयोगः; $T_1$ दमयंतीनळसमागमः. — *Adhy. no.* (figures, words or both): Dn ($Dn_1$ *sup. lin.*) $M_1$ 76; $D_1$ 81; T G $M_2$ (after corr.) 75 (as in text); $M_2$ (before corr.) 77. — *Śloka no.:* Dn 53; $D_1$ 28.

## 76

**1** $^a$) Ś$_1$ $K_1$ $Dn_1$. $n_2$ $D_5$ व्युषितां; B $D_{3.4.6}$ उषितो. — $^b$) $T_1$ $G_1$ विशां पते (for स्वलं°). — $K_3$ om. $1^c$–$2^b$. — $^c$) K ($K_3$ om.) Dn $D_5$ काले; B Dc $D_{4.6}$ कल्यं; $D_{1.3}$ कल्ये; $D_2$ कल्यो (for काल्यं). $G_1$ वैदर्भीसहितः कार्यं. — $^d$) $D_2$ $T_1$ $G_1$ °धिपः.

**2** $K_3$ om. $2^{ab}$ (cf. v.l. 1). — $^a$) $T_2$ $G_{2-4}$ ततो भीमं महाराजं. — $^b$) $G_1$ transp. प्रयतः and श्वशुरं. $B_{2.3}$ Dc $D_{4.6}$ T $G_{2-4}$ M प्रणतः; $D_3$ प्रयतं. — $^c$) $K_{1.2.4}$ Dn $D_{2.3.5}$ ततोनु; $G_1$ तथा च (for तस्यानु). — $^d$) $B_1$ तदा (for शुभा). $B_2$ ववंदे चरणौ पितुः.

यथार्हं पूजयित्वा तु समाश्वासयत प्रभुः ।
नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ॥ ३
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ४
ततो बभूव नगरे सुमहान्हर्षनिस्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम् ॥ ५
अशोभयच्च नगरं पताकाध्वजमालिनम् ।
सिक्तसंमृष्टपुष्पाढ्या राजमार्गाः कृतास्तदा ॥ ६
द्वारि द्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ।
अर्चितानि च सर्वाणि देवतायतनानि च ॥ ७
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ८
तमानाय्य नलो राजा क्षमयामास पार्थिवम् ।
स च तं क्षमयामास हेतुभिर्बुद्धिसंमतः ॥ ९
स सत्कृतो महीपालो नैषधं विस्मयान्वितः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ १०
कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासं वसतो मद्गृहे निषधाधिप ॥ ११
यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि कानिचित् ।
मया कृतान्यकार्याणि तानि मे क्षन्तुमर्हसि ॥ १२

नल उवाच ।

न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव । C. 3. 3022 B. 3. 77. 14 K. 3. 75. 14

---

**3** $^{a}$) $T_1$ परि° (for प्रति°). — $D_2$ om. (hapl.) $3^{b}$–$3^{e}$. — $^{c}$) Dc सुभृशं; $T_1$ तदा तं; $G_1$ तथा सं- (for यथार्हं). Dc वर्ध° (for पूज°). $Ś_1$ [अ]थ; K B Dc Dn $D_{4-6}$ च; $D_3$ स (for तु). — $^{d}$) $D_5$ स समासाद्य तं प्रभुः. — $^{e}$) $G_{2.4}$ दृष्ट्वा (for तत्र). — $^{f}$) $D_1$ शुचिस्मितां; $T_2$ $G_{2-4}$ मुदान्वितः (for पति°). — After 3, S ins.:

347* अनुजग्राह महता सत्कारेण क्षितीश्वरः ।

**4** $^{a}$) Dc वैदर्भ्या सहितो राजा.

**5** $^{b}$) $K_{1.2.4}$ Dn $D_{1-3.5}$ हर्षजः स्वनः. — $^{cd}$) $D_2$ तथाविधं (for °गतम्). $T_2$ $G_{2-4}$ जनाश्च सर्वे संहृष्टा राजा चोत्सवमाचरन्.

**6** $^{a}$) $K_2$ $Dn_3$ $D_{1.2.4.6}$ अशोभयंत; $K_4$ $B_4$ °यत्तं. $T_1$ $G_1$ $M_2$ नगरीं. — $^{b}$) $T_1$ $G_{1.2.4}$ $M_2$ पताकध्वजमालिनीं ($G_{2.4}$ °नं). — $^{c}$) $Ś_1$ $K_1$ सिक्तसं($K_1$ °मा)मृष्टपुष्पाढ्यं; $K_{2.4}$ Dn $D_5$ सिक्ताः सु($K_4$ स)मृष्टपुष्पाढ्याः; $B_2$ सिक्तसंमृष्टपुष्पाढ्यैः; $D_2$ सिक्तं संमृद्धपुष्पाढ्यं. — $^{d}$) $Ś_1$ $D_3$ $G_1$ तदा कृताः; $K_{1.3}$ $Dc_1$ $D_{4.6}$ कृतास्तथा; $K_2$ $Dc_2$ Dn $D_5$ स्वलंकृताः; $K_4$ $D_2$ ततस्तदा; $T_1$ $M_2$ तथागताः.

**7** $^{a}$) $K_3$ $D_2$ S (except $T_1$ $G_1$ $M_2$) द्वारे द्वारे. $Ś_1$ $K_1$ स (for च). $D_1$ सर्वेषां; $M_2$ सूत्राणां (for पौराणां). — $^{b}$) $K_2$ $Dn_2$ पुष्पभागेपि ($Dn_2$ °भंगोप) कल्पिताः; $Dn_1$ $D_5$ °भारोपकल्पिताः ($D_5$ °तः); $D_3$ °भंग्याः प्रकल्पिताः; $G_1$ °भागः प्रकल्पितः. — $^{c}$) $K_1$ $D_1$ [अ]पि; $B_2$ $D_{4.6}$ $G_4$ तु (for च). $K_{3.4}$ $D_{1.2.3}$ (marg. *sec. m.*) वेश्मानि; $B_4$ $D_{4.6}$ पुष्पैश्च (for सर्वाणि). — $^{d}$) $Ś_1$ $K_3$ Dc [अ]पि (for च). $D_3$ दैवतायतनान्यपि; $T_1$ $G_1$ $M_2$ दैवतानि च भारत.

**8** $^{b}$) $Ś_1$ $K_1$ $G_1$ °छद्मना; $T_1$ °छद्मिकं; $G_2$ °छद्मकं. — $^{c}$) $K_4$ समासक्तं; Dc $T_2$ $G_{2-4}$ सहोपेतं. — $^{d}$) $Dc_2$ $T_2$ $G_{2.3}$ जहर्ष. $B_4$ $D_1$ स (for च). Dc परंतप; $D_{4.6}$ $T_2$ $G_{2.3}$ नराधिप; $T_1$ $G_1$ परंतपः; M जनाधिपः. $K_1$ जहृषे वसुधाधिपः.

**9** $^{a}$) $G_{1.2}$ ताम् (for तम्). $K_2$ Dn $D_5$ T G नलं. — $^{b}$) $K_{3.4}$ $D_1$ क्षामया°. $D_{3.4.6}$ पार्थिव; T G पार्थिवः. — $^{c}$) $K_{3.4}$ $D_1$ क्षामया°. — $^{d}$) $Ś_1$ °संमतैः; $K_1$ $D_5$ °संमितैः; $K_2$ Dn °संमितः; $B_2$ $T_1$ °सत्तमः; $G_1$ °वित्तमः; $M_1$ °संमतं.

**10** $^{a}$) $G_{2.4}$ $M_1$ सत्कृत्य (for °तो). — $^{b}$) $K_2$ B Dn $D_{4-6}$ विस्मिताननः ($Dn_3$ $D_4$ °नं); Dc विस्मितो नलं. — After $10^{ab}$, Dn $D_{1.3}$ (marg. *sec. m.*) ins.:

348* उवाच वाक्यं तत्त्वज्ञो नैषधं वदतां वरः ।

— $^{c}$) $T_1$ $G_1$ $M_2$ त्वं (for स्वैर्). — $T_1$ om. (hapl.) $10^{d}$–$13^{a}$. — $^{d}$) $K_4$ $D_5$ भवानित्यभिनंदितः; $G_1$ $M_2$ इत्युक्त्वा च नलं नृपं.

**11** $T_1$ om. 11 (cf. v.l. 10). — $^{a}$) $K_2$ $Dn_{1.n2}$ $D_5$ किंचित्तु; $B_{1.3}$ $D_1$ क्वचित्तु; Dc कच्चिच्च. $Ś_1$ $K_1$ किंचि($K_1$ कश्चि)दूनापराधं ते. — $^{c}$) $B_4$ $Dn_3$ °वासे. Dc उषितो (for वसतो). — $^{d}$) $K_4$ मे गृहे. $K_{1.2}$ Dn $D_{1.2}$ $T_2$ $G_{2-4}$ वसुधाधिप.

**12** $T_1$ om. 12 (cf. v.l. 10); $Ś_1$ $K_1$ om. $12^{ab}$. — $^{a}$) $G_1$ ते (for वा). — $^{b}$) $K_2$ Dn $D_5$ यद्यबुद्ध्यापि; $B_1$ यद्यनुक्तानि. $D_1$ $G_1$ कर्हिचित्. — $^{c}$) Dc कार्या° (for कृता°). $Ś_1$ K $B_2$ $Dn_1$ $D_2$ $G_1$ कार्याणि (for [अ]का°). — $^{d}$) $K_{2.3}$ Dn $D_5$ $G_1$ त्वं (for मे).

**13** $T_1$ om. $13^{a}$ (cf. v.l. 10); $K_2$ om. (hapl.) $13^{b}$–$14^{c}$. — $^{b}$) $B_3$ $D_{1.3}$ $T_2$ $G_{2.3}$ अल्पम् (for स्वल्पम्).

C. 3. 3022
B. 3. 77. 14
K. 3. 75. 14

कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १३
पूर्वं ह्यसि सखा मेऽसि संबन्धी च नराधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ १४
सर्वकामैः सुविहितः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ १५
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १६

बृहदश्व उवाच ।
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १७
ततो गृह्याश्वहृदयं तदा भाङ्गस्वरिर्नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव हि ॥ १८
ऋतुपर्णे प्रतिगते नलो राजा विशां पते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

— D5 om. 13$^{c}$–14$^{b}$.

**14** K2 om. 14$^{abc}$; D5 om. 14$^{ab}$ (cf. v.l. 13). — $^{a}$) K1 अपि; K4 B Dn D3. 4. 6 T2 G3 M1 ह्यपि (for ह्यसि). B2 यथा (for सखा). D1 मेपि; D2 मेति; T1 चासि; G1 M2 चापि (for मेऽसि). — $^{b}$) B1 जनार्दन (!); B2–4 D (except D1–3; D5 om.) T2 G3 जनाधिप (for नरा°). — $^{c}$) B Dc Dn2. n3 D4. 6 अतश्चोर्ध्वं. D1 S (except G4) च (for तु). B Dc महाभाग; Dn2. n3 D4. 6 महाराज; D3m अपि विभो (for तु भूयस्त्वं). — $^{d}$) K2 D5 प्रीतिमान्क्षंतुमर्हसि (cf. 349*). — After 14, Dn2. n3 ins.:

349* अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमान्क्षन्तुमर्हसि ।
[Prior half = 14$^{c}$. Cf. v.l. 14$^{d}$.]

**15** $^{a}$) K (except K4) B D (except D1–3. 5) सुविहितैः; G4 च सहितः. — $^{b}$) = 3. 43. 24$^{d}$. B1. 4 T2 G अध्यु° (for अस्म्यु°). — $^{c}$) T1 G1 M2 स्वे (for स्व-).

**16** $^{a}$) D3 G1 हि यज् (for हय-). — $^{c}$) B4 उपाहर्तुम्; D5 T2 (before corr.) G2. 4 M1 अपाकर्तुम्. — $^{d}$) D4. 6 यदि मन्यसि पा°.

**17** All MSS. except B4 D3 om. the ref. The portion from 17$^{c}$ up to 22$^{d}$ of adhy. 77 is lost in D3 on a missing fol. (109). — $^{d}$) = 1. 13. 37$^{b}$; 53. 13$^{d}$; 96. 52$^{d}$; etc. S (except T1 G1 M2) शास्त्र° (for विधि°).

**18** D3 missing (cf. v.l. 17). — $^{a}$) K2 न कर्मणा गृहीत्वा च; Dn D5 गृहीत्वा चाश्वहृदयं. — $^{b}$) Ś1 तथा; K1 नृपो; K3. 4 Dn D1. 2. 5 राजन्; T1 ततो; T2 G2. 4 प्रीतो; G1 ददौ (for तदा). Ś1 भा*श्वरि°; K1 भंगिस्वरि°; K2 भार्गसुरि°; K3 भार्ग्रस्वरि°; K4 D1. 2. 5 M1 भार्गं°; B3 भांगसुरि°; Dc Dn D4. 6 T2 (after corr.) G3 भांगासुरि°; T1. 2 (before corr.) G2. 4 भागस्वरि°; G1 भागस्करि°; M2 भाङ्गस्वरि°. — After 18$^{ab}$, K1. 2. 4 B1. 3–4 D (except D1. 2. 5; D3 missing) ins.:

350* निषधाधिपतेश्चापि दत्वाक्षहृदयं नृपः ।

— $^{d}$) K1. 2 Dn D5 M1 ह; B Dc D4. 6 तत्; T2 G2–4 तु (for हि). T1 G1 M2 प्रययौ स्वपुरीं (G1 स्वां पुरीं; M2 स्वपुरं) प्रति.

**19** D3 missing (cf. v.l. 17). — $^{a}$) K2 Dn D5 गते राजन् (for प्रति°). — $^{d}$) B1 °दीर्घं (for °दीर्घम्). D1 उवास सः (for इवावसत्).

Colophon om. in D2. D3 missing. — *Major parvan:* Ś1 K1 T G2–4 आरण्य; Dn2 अरण्य. — *Sub-parvan:* N (D2 om.; D3 missing) T1 G1 (all om. sub-parvan name) mention only नलोपाख्यान. — *Adhy. no.* (figures, words or both): Dn (Dn1 sup. lin.) M1 77; D1 82; T G M2 (by corr.) 76 (as in text); M2 (before corr.) 78. — *Śloka no.:* Dn1. n3 21; Dn2 22; D1 20.

## 77

**1** In D3, stanzas 1–22 are lost on a missing fol. (cf. v.l. 3. 76. 17). — $^{c}$) D1 जगामाल्प°; D2 पुरात्स्वल्प°. — $^{d}$) K4 D2 ययौ स; D1 कुंडिनान् (for जगाम).

**2** D3 missing (cf. v.l. 1). — $^{b}$) D1 चापि (for परि-). — $^{c}$) T1 G1 M2 चापि (for चैव).

**3** D3 missing (cf. v.l. 1). — $^{b}$) T2 G2–4 महापुरीं (for मही°). — Dn1 om. 3$^{cd}$. — $^{c}$) K2 B4 Dn2. n3 D5 G1 [अ]थ; B1–3 D4. 6 सु-; T2 G2–4 M1 [अ]भि- (for [अ]ति-). — $^{d}$) Ś1 K1 D2 महामतिः; K2. 3 Dn2. n3 D1. 5

# ७७

बृहदश्व उवाच ।
स मासमुष्य कौन्तेय भीममामन्त्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ १
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २
स कम्पयन्निव महीं त्वरमाणो महीपतिः ।
प्रविवेशातिसंरब्धस्तरसैव महामनाः ॥ ३
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ॥ ४
दमयन्ती च यच्चान्यन्मया वसु समर्जितम् ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ५
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ ६
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः परं हि धनमुच्यते ॥ ७
न चेद्वाञ्छसि तद् द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८
वंशभोज्यमिदं राज्यं मार्गितव्यं यथा तथा ।
येन तेनाप्युपायेन वृद्धानामिति शासनम् ॥ ९
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नम्यतां धनुः ॥ १०
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ॥ ११
दिष्ट्या त्वयार्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ।

C. 3. 3041
B. 3. 78. 12
K. 3. 76. 12

---

महीपतिः (for महा°). $K_4$ तत्रैव च महामतिः; Dc सह सैन्येन भूपतिः.

**4** $D_3$ missing (cf. v.l. 1). $D_2$ om. $4^{ab}$. — $^{b}$) Ś$_1$ बलः; $K_1$ B $D_{4.6}$ बली (for नलः); cf. 3. 50. $1^{b}$.

**5** $D_3$ missing (cf. v.l. 1). $B_2$ $M_1$ om. $5^{ab}$. — $^{a}$) S ($M_1$ om.) दमयंत्या. Dc च किं; $D_2$ तथा (for च यच्). $D_1$ दमयंत्या रहितं चान्यत् (hypermetric). — $^{b}$) B ($B_2$ om.) $Dn_3$ $D_{4.6}$ $T_1$ $G_1$ M समार्जितं. $K_{2.3}$ Dc $Dn_{1}$. $n_2$ $D_5$ मम (Dc न मे) किंचन विद्यते; $D_{1.2}$ मया वित्त($D_2$ धन)-मुपार्जितं; $T_2$ $G_{2-4}$ जय त्वं सुसमार्जितं. — $^{c}$) $D_2$ एष मे वै पणः सर्वं.

**6** $D_3$ missing (cf. v.l. 1). — $^{a}$) Dc ततः (for पुनः). — $^{c}$) = $18^{c}$. $K_{1.2}$ Dn $D_5$ पणेनैकेन (for एकपाणेन). — $^{d}$) $K_3$ Dc $D_{4.6}$ पणयोश्च. $D_2$ पणामहे.

**7** $D_3$ missing (cf. v.l. 1). — $^{a}$) $B_3$ आसाद्य; Dc आकृष्य (for आहृत्य). — $^{c}$) $T_1$ $G_1$ प्रतिपाणं. Ś$_1$ $K_{1.3}$ तु दातव्यः; $T_1$ $G_1$ प्रदातव्यं. — $^{d}$) $T_2$ $G_{2-4}$ प्राणो (for परं). $B_2$ $G_2$ पणम् (for धनम्). Ś$_1$ $K_3$ परं धर्ममिति स्मृतं; $K_1$ परो धर्म इति स्मृतिः; $K_2$ Dn $D_5$ परमो धर्म उच्यते; $D_1$ परो हि धर्ममुच्यते (metrically defective).

**8** $D_3$ missing (cf. v.l. 1). — $^{a}$) Ś$_1$ K Dc $D_{1.2}$ व्यवसितं; $M_1$ इच्छसि पुनर् (for वाञ्छसि तद्). B $D_{4.6}$ द्यूतं त्वं; Dn त्वं द्यूतं (for तद् द्यूतं). — $^{b}$) B $D_{4.6}$ प्राणद्यूतं; Dc युद्धपूर्वं; $G_1$ भवान्युद्धं. — $^{c}$) Ś$_1$ Dc द्वैरथो नास्ति; $K_1$ $B_{2.4}$ $Dn_2$ द्वैरथेनास्ति; $T_1$ °नापि; $G_1$ °नाप. $K_4$ यदा (for [अ]स्तु वै). Ś$_1$ $K_1$ $D_{1.2}$ वा; $G_2$ सा (for वै). $K_3$ द्विरथेनास्तु शांतिर्वा. — $^{d}$) $T_2$ $G_{2-4}$ पुष्कर (for वा नृप).

**9** $D_3$ missing (cf. v.l. 1). — $^{a}$) $D_1$ वंश्यं भोग्यम्; $G_1$ वीरभोज्यम्. $T_2$ $G_{2-4}$ परहस्तगतं राज्यं. — $^{b}$) $K_2$ $B_3$ Dn $D_5$ अर्थितव्यं; $D_1$ आद्रितव्यं; $T_2$ $G_{2-4}$ आर्जितव्यं. $K_4$ $T_1$ $G_{1.2}$ $M_2$ यथातथं. — $^{c}$) Ś$_1$ तेनान्युपायेन; $K_{1.3.4}$ $D_{1.5}$ केनाभ्यु°; $K_2$ B Dc $D_{4.6}$ तेनाभ्यु°; Dn $D_2$ S केनाप्यु°. — $^{d}$) $K_3$ $G_1$ अनु- (for इति).

**10** $D_3$ missing (cf. v.l. 1). — $^{a}$) Dc तयोर् (for द्वयोर्). $K_{3.4}$ $D_2$ °तरा; $D_1$ °तमे (for °तरे). — $^{b}$) $D_{1.2}$ इति (for अद्य). — $B_2$ om. $10^{cd}$. — $^{c}$) $K_2$ Dn $D_5$ तु (for वा). — $^{d}$) Ś$_1$ $K_1$ बध्यतां; $K_{2-4}$ B ($B_2$ om.) Dc Dn $D_{4.6}$ $M_2$ नाम्यतां; $G_{2.4}$ नह्यतां. $K_1$ मनः (for धनुः). $D_1$ नाम्यतां धनुरुत्तमं; $D_5$ युद्धे चानम्य तद्धनुः; $G_1$ युद्धेनानम्यतां धनुः.

**11** $D_3$ missing (cf. v.l. 1). — $^{b}$) $D_1$ प्रहसन्निव पुष्करः; $T_2$ $G_{2-4}$ पुष्करो राज्यगर्वितः. — $^{d}$) $T_2$ $G_{2-4}$ $M_1$ निषधाधिपं; $G_1$ $M_2$ पृथिवीपतिः.

**12** $D_3$ missing (cf. v.l. 1). $D_1$ om. $12^{ab}$. — $^{a}$) $D_2$ $T_1$ $G_1$ $M_2$ द्रव्यं (for वित्तं). — $K_2$ om. (hapl.) $12^{c}$–$14^{b}$. — $^{c}$) S (except $T_1$ $G_1$) वै (for च). $B_{2.4}$

C. 3. 3042
B. 3. 78. 13
K. 3. 76. 13

दिष्ट्या च ध्रियसे राजन्सदारोऽरिनिबर्हण ॥ १२
धनेनानेन वैदर्भी जितेन समलंकृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ १३
नित्यशो हि स्मरामि त्वां प्रतीक्षामि च नैषध ।
देवने च मम प्रीतिर्न भवत्यसुहृद्गणैः ॥ १४
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ॥ १५
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ १६
स्मयंस्तु रोषताम्राक्षस्तमुवाच ततो नृपः ।
पणावः किं व्याहरसे जित्वा वै व्याहरिष्यसि ॥ १७
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ।
सरत्नकोशनिचयः प्राणेन पणितोऽपि च ॥ १८
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ।
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ॥ १९
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २०
न तत्त्वया कृतं कर्म येनाहं निर्जितः पुरा ।
कलिना तत्कृतं कर्म त्वं तु मूढ न बुध्यसे ।

---

Dc1 G1 दुष्करं; G4 सुकृतं. — [e]) D1 [अ]सि; T2 G (except G1) वै (for च). K1 Dn3 G1 ध्रियते; Dc T1. 2 (after corr.) G2. 4 प्रीयसे; D1 इश्यसे; D5 [आ]प्यायसे; T3 G3 प्रीयसे. — [f]) K1 Dn D5 सदारोद्य (K1 °रि) महाभुज; K3. 4 D1 T1 °रोरिनिबर्हणः; B3 (corrupt) सदा वा विनिवर्तनं; T2 G (except G1) लाभाय मम नैषधः. — After 12, S ins.:

351* पुनर्द्यूते च ते बुद्धिर्दिष्ट्या पुरुषसत्तम ।

**13** D3 missing (cf. v.l. 1). K2 om. 13 (cf. v.l. 12). — [a]) K4 D2 पाणेनानेन; T1 G1 जितेना°. Ś1 K1 D (except D2. 4. 6; D3 missing) M1 वै भैमी (for वैदर्भी). — [b]) D1 वित्तेन; T1 G1 धनेन (for जितेन). — [c]) G1 क्षिप्रं (for व्यक्तं). — [d]) K3. 4 Dc इवामराः; T1 G1 M शची यथा.

**14** D3 missing (cf. v.l. 1). K2 om. 14[ab] (cf. v.l. 12). — [a]) Ś1 K1 Dc [ऽ]पि (for हि). Ś1 M त्वा (for त्वां). G1 corrupt. — [b]) K1 संप्रक्ष्यामि; B1. 2 Dc Dn D5 प्रतीक्षेपि; G2. 4 M1 प्रतीक्षे च. M1 [ए]व (for च). G2. 4 परंतप (for च नैषध). — [c]) Ś1 K D (except D4. 6) G3 देवनेन (or °ने न) (for °ने च). — [d]) T2 G2–4 भवत्येव (for न भवति). T2 (after corr.) G3 सुहृद्गणैः (for [अ]सुहृद्गणैः). B2 Dc D4. 6 अभवन्न सुहृद्गणैः.

**15** D3 missing (cf. v.l. 1). — [a]) T1 G1 [अ]द्यैव; M2 [अ]द्याहं (for त्वद्य). — [d]) Ś1 K1 या (for सा).

**16** D3 missing (cf. v.l. 1). — [a]) B2–4 D4. 6 T2 G2. 3 M transp. तु and तस्य. K4 B2–4 Dc D1. 2. 4. 6 T1 G1 M2 तां वाचं; K2 तद्वाचो (for ता वाचो). B1 श्रुत्वा तस्याशुभां वाचं. — [b]) K2. 3 T1 G1 बह्वबद्धः (K3 G1 °द्धं) प्रलापिनः; B3. 4 बह्वबद्धप्रणादि(B4 °शि)नः; D2 बुध्वाबद्धप्रलापिनीं; T2 G2–4 ह्यसंबद्धप्रलापिनः; M2 बह्वबद्धं प्रलापिनं.

— [c]) T2 G2. 3 M1 तत् (for स).

**17** D3 missing (cf. v.l. 1). — [a]) K3 D2 सु; K4 स; B2. 3 Dc D1. 4. 6 च (for तु). — [b]) Ś1 K D (except D4. 6; D3 missing) T1 M2 नलो (for ततो). T2 G नलः (for नृपः). — [c]) K1 Dc1 D5 G1 पणाव; T1 M पणाय; T2 (before corr.) वैभेयः; G2 वधाय; G4 वैधेयं (for पणावः). K3 G4 व्याहरसि. — [d]) Ś1 K1. 3. 4 B4 Dn D1. 2. 5 जितो न; K2 ततो न; T1 M2 जितो वै; G1 कैतव्ये; M1 जिते वै.

**18** D3 missing (cf. v.l. 1). — [a]) Dc पुनः (for ततः). Ś1 K1 प्रवर्तितं; K4 M2 प्रवर्ततां. — [c]) = 6[c]. B D4. 6 वीरेण (for भद्रं ते). — [e]) K2 Dn D5 °निचयैः. — [f]) K1–3 B1. 3 D4. 6 T G3 पाणेन; B2 G1 पणेन (for प्राणेन). K3 पणतो°; K4 पाणितो°; D4. 6 गणितो°. M2 यत् (for च).

**19** D3 missing (cf. v.l. 1). — [a]) Ś1 G1 जित्वा तु; T2 G2. 3 M1 स जित्वा. Dc प्रहसन् (for पुष्करं). — [b]) Dc पुष्करं चेदमब्रवीत्. — [c]) Ś1 न च; M2 जितं (for मम). Dc transp. सर्वं and राज्यं. — [d]) T2 G2–4 प्राप्तं निहतकंटकं.

**20** D3 missing (cf. v.l. 1). — [b]) K1 S राजापशद. — [c]) B1. 2 D4. 6 यस्यास्त्वं.

**21** D3 missing (cf. v.l. 1). — [a]) Ś1 K Dc Dn D1. 2. 5 (by transp.) त्वया तत्; B D4. 6 T2 G3 च त्वया. — [b]) K2 B1. 3. 4 Dc Dn D5 S (except T2 G3) विजितः (for निर्जितः). B1. 3. 4 Dc D4. 6 तदा; B2 T1 G1 M त्वया (for पुरा). — [c]) T1 M2 तु; G1 च (for तत्). Dc D4. 6 S (except T1 G1 M2) सर्वं (for कर्म). — [d]) K2 Dn D1. 5 च (for तु). K1 रूप; T1 G1 M2 नीच (for मूढ). D2 त्वं मूढ न च बुध्यसे. — [e]) K4 D1. 2 पापं (for दोषं).

नाहं परकृतं दोषं त्वय्याधास्ये कथंचन ॥ २१
यथासुखं त्वं जीवस्व प्राणानभ्युत्सृजामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ २२
सौभ्रात्रं चैव मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता संजीवस्व शतं समाः ॥ २३
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ २४
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २५
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ २६
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनावृतः ॥ २७
महत्या सेनया राजन्विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ २८
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभितम् ।
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ॥ २९

C. 3. 3061
B. 3. 78. 32
K. 3. 76. 32

इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

**22** $D_3$ missing (cf. v.l. 1). — [a]) $K_{2-4}$ Dc Dn $D_{1.2.5}$ $T_1$ $G_1$ M वै; $B_{2-4}$ $D_{4.6}$ $T_2$ $G_{2-4}$ च (for त्वं). $K_{2.3}$ Dc Dn $D_5$ $T_2$ $G_{2-4}$ $M_1$ जीव त्वं; $B_1$ संजीव; $T_1$ $G_1$ $M_2$ त्वं जीव (for जीवस्व). — [b]) $K_2$ Dn $D_5$ अवसृजामि; $T_2$ $G_{2-4}$ अप्युत्सृजामि. Ś$_1$ वै (for ते). — After $22^{ab}$, $K_{1.2}$ B D (except $D_{1.2.5}$; $D_3$ missing) ins.:

352* तथैव सर्वसंभारं स्वमंशं वितरामि ते ।

— [c]) Ś$_1$ $K_1$ यथैव: $B_{2-4}$ $D_{4.6}$ च त्वयि; $M_1$ (by transp.) मम च. — [d]) $B_2$ $D_{4.6}$ मम चैव; $B_{3.4}$ मम वीर; $T_2$ $G_{2-4}$ $M_1$ त्वयि चैव (for त्वयि वीर).

**23** $D_3$ resumes! — [a]) $K_2$ $B_1$ Dn $D_5$ सौहार्दं (for सौभ्रात्रं). Ś$_1$ K D (except $D_{4.6}$) चापि; $T_2$ $G_3$ हि च (for चैव). $K_4$ ते (for मे). Dc नित्यं (for त्वत्तो). — [b]) $T_2$ (before corr.) $G_{2.4}$ प्रयास्यति. — [c]) $T_1$ $G_1$ $M_2$ च (for हि). — [d]) $K_3$ $D_4$ M स जीवस्व; T G स ($T_1$ $G_1$ सं-) जीव त्वं (for संजीवस्व). Ś$_1$ $K_4$ Dc $D_{1.2}$ सं(Ś$_1$ स)जीव शरदां शतं; $K_{1.2}$ Dn $D_{3.5}$ सं($D_3$ त्वं)जीव शरदः शतं.

**24** [a]) $K_3$ $B_{1.3}$ $D_3$ शांतयित्वा. — [c]) $T_1$ $G_1$ $M_2$ पुष्करं क्षमयामास; $T_2$ $G_{2-4}$ वचनैस्तोष°. — [d]) $T_1$ $G_1$ $M_2$ सांत्वयित्वा (for परि°).

**25** [a]) $D_1$ अथ; $D_2$ $M_2$ एव (for एवं). $T_1$ $G_1$ नलेन सांत्वितो तेन (sic). — [b]) $K_4$ $B_{2.3}$ $Dc_2$ $D_{3.5.6}$ ह (for तम्). $K_3$ प्रत्युवाच स तं नलं. — [c]) Dc यदा राजन्; $D_2$ महाराजं.

**26** [b]) $K_1$ वर्षशतं. $D_{3.5}$ $T_2$ $G_{2-4}$ $M_1$ सुखं; $T_1$ समी (for सुखी). — [c]) Ś$_1$ $K_1$ वितरति; $K_2$ °से.

**27** [a]) Dc सत्कथा- (for स तथा). $T_1$ $G_1$ $M_2$ स तथा सांत्वितो राजा ($G_1$ °ज्ञा). — $T_2$ $G_3$ om. (hapl.) $27^b$–$29^a$. — [b]) Ś$_1$ समाज्ञाय; $B_1$ समाश्लिष्य (for मास°). $K_3$ $B_{2-4}$ $D_{4.6}$ ततो नृपः; $K_4$ $D_{2.3}$ $G_4$ M तदा नृप; $G_1$ नराधिप. — [cd]) $K_2$ Dn $D_5$ transp. स्वपुरं and पुष्करः. $K_3$ $B_{2-4}$ स्वजनान्वितः; Dc स्वजनैर्वृतः.

**28** $T_2$ $G_3$ om. 28 (cf. v.l. 27). — [a]) Ś$_1$ K D (except $D_{4.6}$) $G_{1.4}$ सार्धं (for राजन्). — [b]) $T_1$ नादितैः; $G_{1.4}$ विजितैः (for विनीतैः). — [d]) $G_1$ वपुष्मान्. Ś$_1$ $K_{1.2.4}$ $D_{2.5}$ पुरुषर्षभः; $K_3$ B $D_{4.6}$ भरतर्षभ; $T_1$ $G_1$ $M_2$ कुरुनंदन. $G_{2.4}$ ययौ वीरश्रिया ज्वलन्.

**29** $T_2$ $G_3$ om. $29^a$ (cf. v.l. 27). — [c]) Ś$_1$ $K_{2.4}$ D (except $D_{1.3}$) $G_1$ $M_1$ पुरीं; $B_1$ स्वकं (for पुरं). $K_{1.3}$ $T_2$ $G_{2-4}$ $M_1$ श्रीमद्; $B_1$ धीमान्; $B_2$ राजा; $D_2$ $G_1$ रम्यां; $T_1$ $M_2$ रम्यं (for श्रीमान्). — [d]) $B_2$ चात्यर्थम्; $G_1$ अत्यंतम् (for अत्यर्थम्). Ś$_1$ $K_4$ $B_1$ D (except $D_{1.6}$) $M_1$ उपशोभितां; $T_2$ $G_3$ उपभोगितं. — [f]) $B_{1.3}$ $D_{4.6}$ $T_1$ $G_1$ $M_2$ पौरान्स; $B_2$ स पौरान् (for पौरांश्च). — $K_2$ B D (except $D_2$) ins. after 29: $K_1$, after $4^{ab}$ of the next adhy.:

353* पौरा जानपदाश्चापि संप्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ।
अद्य स्म निर्वृता राजन्पुरे जनपदेऽपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ।

On the other hand, $K_4$ ins. after 29:

354* आश्वासयत्तदामात्यान्सर्वाञ्जानपदांस्तदा ।

Finally, S (except $T_2$ $G_3$) ins. after 29:

355* हितेषु चैषां सततं पितेवावहितोऽभवत् ।

Colophon. $Dn_1$ reads it in marg. — *Major parvan:* Ś$_1$ $K_1$ $Dn_2$ $D_6$ T $G_{2-4}$ आरण्य. — *Sub-parvan:* N T $G_{1.3}$ (all om. sub-parvan name)

# ७८

C. 3. 3063
B. 3. 79. 1
K. 3. 77. 1

बृहदश्व उवाच ।
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ १
दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रस्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ २
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ३
तथा प्रकाशतां यातो जम्बूद्वीपेऽथ राजसु ।
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ॥ ४
ईजे च विविधैर्यज्ञैर्विधिवत्स्वाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसेऽचिरात् ॥ ५
दुःखमेतादृशं प्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ६
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ७
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ८
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।

---

mention only नलोपाख्यान. — *Adhy. name:* B4 नलराज्यप्राप्तिः; D2 अयोध्यागमने अक्षक्रीडायां नलेन पुष्करपराजये नलराज्यप्राप्तिः. — *Adhy. no.* (figures, words or both): Dn M1 78; D1 83; T G M2 (by corr.) 77 (as in text); M2 (before corr.) 79. — *Śloka no.:* Dn D1 33.

## 78

**1** a) B1 प्रविष्टे; T1 प्रशास्ते. S (except T1 M2) नगरे (for तु पुरे). Ś1 K1. 3. 4 B3 D1. 2 प्रयाते पुष्करे हृष्टे; B2 संप्रशांते प्रहृष्टे च. — b) D2 om. from वृत्ते up to तीर्थं (in 19c). K3 संप्रहृष्ट-; B4 संप्रवृत्त-; T1 सुप्रवृत्ते; G2-4 M सुप्रवृत्त-. — c) B1-3 D4. 6 G1 राजन् (for राजा). — d) B1 M2 अथा°; T2 G2. 3 समा° (for उपा°). — After 1, T G ins.:

356* पुण्यश्लोकं तु राज्यस्थं श्रुत्वा भीमो महीपतिः।
मुदा परमया युक्तो बभूव भरतर्षभ ।
अथ हृष्टमना राजा महत्या सेनया सह ।
सुतां प्रस्थापयामास पुण्यश्लोकाय धीमते ।

**2** D2 om. 2 (cf. v.l. 1). — a) T2 G2-4 M1 तथा (for पिता). — K2 om. 2c-3d. — c) K1. 3 B Dn1 D3. 4. 6 M प्रास्थापयद्. B1 अदीनात्मा (for अमेया°). — 2d=1. 2. 184b; 114. 9d; 144. 18b: 4. 21. 47b; etc.

**3** K2 D2 om. 3 (cf. v.l. 1, 2). — c) T2 G2-4 अतीव मुदितो वीरो.

**4** D2 om. 4 (cf. v.l. 1). — a) Ś1 K1 B2-4 D4. 6 ततः (for तथा). — b) Ś1 K1. 3. 4 Dc D3 M च; B Dn D1. 6 स (for ऽथ). K2 D5 जंबूद्वीपे रराज सः; D1 °पे चराचरे; G1 °द्वीपादिराजसु. — After 4ab, K1 ins. 353*. — c) K1 D1 चैवा°; D5 स चा°; G1 चैत्या° (for स्वे चा°). K4 D5 राज्यं; G1 राजा (for राज्ये). K2 B1-3 Dn D3. 4. 6 पुनः शशास तद्रा(B1. 3 D3. 4. 6 वै रा)ज्यं; T1 M पुनः स्वे न्यवसद्राज्ये. — d) Ś1 K1 प्रत्यावृत्य; B1 °गत्य. K1 महामनाः.

**5** D2 om. 5 (cf. v.l. 1). — b) D1 G1 विविधैः (repeated!); T2 G2-4 विधिना (for विधिवत्). Ś1 भूरिदक्षिणैः; K1. 2. 4 Dn D1. 5 G2 चाप्त°; B2. 3 D3 प्राप्त°; T2 G3. 4 वाप्त°; G1 आप्त°. K3 समाप्तवरदक्षिणैः. — d) K2 Dc सुहृदो; K3 स्वपुरं; B1. 3. 4 स्वराज्यं; D3. 6 स्वं राज्यं (for ससुहृद्). K2 Dc द्रक्ष्यसे; K3 B1. 3. 4 D3. 6 प्राप्स्यसे; K4 प्रेक्षसे; D5 प्रवसन्; T1 G2 यक्ष्यसे; T2 G3. 4 M रक्ष्यसे; G1 रक्षसे. M1 [ऽ]चिरं.

**6** D2 om. 6 (cf. v.l. 1). — a) B4 तत्तादृशं (for एतादृशं). T2 G2-4 एवं च व्यसनं प्राप्तो. — c) K3 D1. 3 नरश्रेष्ठः; B1. 3 Dc D4. 6 G1 M1 नृपश्रेष्ठ.

**7** D2 om. 7 (cf. v.l. 1). — ab) B D4. 6 वै; D1 [अ]पि (for [ए]व). G1 एकाकिना नलेनैव सुमहत्कर्म यत्कृतं. — c) M2 एतादृशं (for आसादितं). — d) K2 T2 G2-4 प्राप्तं. K4 B3 Dc2 Dn2 D5 T2 G2-4 चाभ्युदयं. G1 तथा (for पुनः).

**8** D2 om. 8 (cf. v.l. 1). — b) G1 सह (for चैव). B1 (m as in text) D1 भारत; B2. 3 D4. 6 पार्थिव; T2 G2-4 भार्यया (for पाण्डव). — c) Ś1 रमया°; K1. 3 रमस्वा°; Dc वससे°; G1 समये° (for रमसे°). T2 G2-4 कथाश्चापि समाकर्ण्य.

**9** D2 om. 9 (cf. v.l. 1). — d) = Gītā (Vulg.) 2. 28. Ś1 K (except K1) B3 D1. 3 परिवेदना. — After

नित्यमन्वास्से राजंस्तत्र का परिदेवना ॥ ९
इतिहासमिमं चापि कलिनाशनमुच्यते ।
शक्यमाश्वासितुं श्रुत्वा त्वद्विधेन विशां पते ॥ १०
अस्थिरत्वं च संचिन्त्य पुरुषार्थस्य नित्यदा ।
तस्याये च व्यये चैव समाश्वसिहि मा शुचः ॥ ११
ये चेदं कथयिष्यन्ति नलस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति ।
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ॥ १२
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ।
पुत्रान्पौत्रान्पशूंश्चैव वेत्स्यते नृषु चाग्र्यताम् ।
अरोगः प्रीतिमांश्चैव भविष्यति न संशयः ॥ १३
भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।

C. 3. 3080
B. 3. 79. 18
K. 3. 77. 20

---

9, Dn2 ins.:

357* अक्षाणां हृदये प्राप्ते ऋतुपर्णस्य संनिधौ ।
नलेन याचितं राज्ञा कलिना च प्रतिश्रुतम् ।

Dn3 cont.: K2 Dc1 Dn1. n3 D1 ins. after 9: K4, after 360*:

358* कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ।

[In D1, this *phalaśruti* occurs twice; cf. 301*.]

**10** D2 om. 10 (cf. v.l. 1). — a) K4 B2 राजन्; B3. 4 D4. 6 तात; D1 चैव; M2 चेह (for चापि). K1 इतिहासं पुरं चासि. — b) Ś1 K1 कलेर् (for कलि-). K1 उत्तमं; K2 B Dc1 Dn1 D5 M अच्युत; D4. 6 अप्युत (for उच्यते). — After 10ab, Dn2 ins. (another *phalaśruti*):

359* य इदं पठते नित्यं य इदं शृणुयान्नरः ।
न तस्य विद्यते राजन्भयं वै कलिकारकम् ।
धर्मनित्यस्य युक्तस्य सदार्जवरतस्य च ।
दान्तस्य च वदान्यस्य कलिः पुंसः करोति किम् ।

— c) B Dn2. n3 D3. 4. 6 G2 M2 आश्वसितुं; G1 अध्यासितुं. — After 10, K4 ins.:

360* इदमेवान्यदत्रैव व्यासेन परिकीर्तितम् ।
कलिना च नृपे दत्तं राजन्वरमनुत्तमम् ।
अक्षाणां हृदये प्राप्ते ऋतुपर्णस्य संनिधौ ।
नलेन पठितः श्लोकः कलिनाशाय भारत ।,

followed by 358*.

**11** D2 om. 11 (cf. v.l. 1). — a) Ś1 K1 सुस्थिरत्वं (!). Ś1 K1. 4 D1 च संप्रेक्ष्य. — b) K1 D5 M1 पुरुषो- (M1 °षे)र्थस्य. K4 सिद्धये; Dc निश्चयं; G4 सर्वदा (for नित्यदा). — D5 om. 11cd. — c) K2-4 B Dn D1. 4. 6 [उ]दये (B1 [अ]पि च); T1. 2 (after corr.) G1. 3 M2 [अ]प्याये (for [आ]ये च). K2 B2-4 Dn D4. 6 चापि (for चैव). Dc D3 व्यसने चोदये चैव; T2 (before corr.) G2. 4 तस्याप्यायस्य वै चैव. — After 11c, K3 B3 Dc Dn D6 ins.:

361* न चिन्तयितुमर्हसि ।
श्रुत्वेतिहासं नृपते.

[(L. 1) Dc नावसादितुम् (for न चिन्त°).]

— d) Dc D1 शुच. D3 न विषीदितुमर्हसि; S तदाश्वासितुमर्हसि (M1 सुस्थिरो भव मा शुचः). — K2. 3 Dn ins. after 11: D5 (which om. 11cd) ins. after 11ab:

362* व्यसने त्वं महाराज न विषीदितुमर्हसि ।

K2. 3 Dn D5 cont.: Ś1 K1. 4 B Dc D3. 4. 6 ins. after 11:

363* विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो बुधाः ।

[(L. 1) Ś1 देशे (for दैवे). B1-3 D4. 6 विलयं; B4 Dc विफलं (for ऽफलतां). K3 पौरुषेफलवंति ते. — (L. 2) K1 Dc सत्वोपा°; B1 सिद्धापा°. K2 Dn3 D5 नराः; Dn1. n2 जनाः (for बुधाः).]

**12** D2 om. 12 (cf. v.l. 1). — a) K4 D1 य इदं; S (except G1 M1) ये चैतत् (for ये चेदं). K4 कीर्त° (for कथ°). — c) Ś1 K1 B4 ये; D1 हि (for वै). T1 संश्रोष्यंति चाभीक्ष्णं वै; T2 G2-4 संश्रोष्यंतीव चा(G4 °ति च मे)-भीक्ष्णं. — d) Ś1 नाश्रीस्तेषां; K4 D1 लक्ष्मीस्तेषां. Ś1 K4 B1. 5 Dn2. n3 D1 भविष्यति. — K3 M1 om. (hapl.) 12ef. — e) Ś1 तेभ्यो; S (M1 om.) चास्य (for तस्य). Ś1 व्यवस्यंति; K1 [उ]पसंप्रांते (corrupt); Dc D1 S (except G2; M1 om.) [उ]पपद्यंते. — f) Ś1 K1 धन्यता च भविष्यति; B3 °तां चागमिष्यति.

**13** D2 om. 13 (cf. v.l. 1). — a) G1 पुण्यं (for श्रुत्वा). — c) B1 पुत्रपौत्रान्. T2 G2. 3 श्रियः; G1 सखीन्; G4 श्रियं (for पशून्). K2. 4 D (except D4. 6) चापि (for चैव). — d) K3 Dn D5 लभते; B1 T1 G2. 4 M2 वेत्स्यंते; B2 लप्स्यते; B3 वास्यते; T2 G3 लप्स्यंते; G1 लप्स्यसे. — e) K3 आरोग्यां; B2-4 D4. 6 नीरोगः; Dn1 D5 आरोग्यः, Dn2. n3 आरोग्यप्रीतिमांश्चैव; T2 G2-4 अरोगाः प्रीतिमंतश्च. — f) T2 G2-4 भविष्यंति. — After 13, B4 ins. an addl. colophon.

**14** D2 om. 14 (cf. v.l. 1). — a) D3 रूपं (for भयं)

C. 3. 3080
B. 3. 79. 18
K. 3. 77. 20

अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ १४
वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ १५
वैशंपायन उवाच ।
ततो हृष्टमना राजा बृहदश्वमुवाच ह ।
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ १६
ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने ।
दत्त्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ १७
बृहदश्वे गते पार्थमश्रौषीत्सव्यसाचिनम् ।
वर्तमानं तपस्युग्रे वायुभक्षं मनीषिणम् ॥ १८
ब्राह्मणेभ्यस्तपस्विभ्यः संपतद्भ्यस्ततस्ततः ।
तीर्थशैलवरेभ्यश्च समेतेभ्यो दृढव्रतः ॥ १९
इति पार्थो महाबाहुर्दुरापं तप आस्थितः ।
न तथा दृष्टपूर्वोऽन्यः कश्चिदुग्रतपा इति ॥ २०
यथा धनंजयः पार्थस्तपस्वी नियतव्रतः ।
मुनिरेकचरः श्रीमान्धर्मो विग्रहवानिव ॥ २१
तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने ।
अन्वशोचत कौन्तेयः प्रियं वै भ्रातरं जयम् ॥ २२
दह्यमानेन तु हृदा शरणार्थी महावने ।
ब्राह्मणान्विविधज्ञानान्पर्यपृच्छद्युधिष्ठिरः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

K2 Dn D5 भयात्त्रस्यसि (for भयं पश्यसि). G1 यत्र (for यच्च). — b) Ś1 T2 G3. 4 M आह्वयिष्यंति; K4 आकर्षयसि; G1 आश्रयिष्यसि. Ś1 मा (for मां). — c) K1 T1 G2 M अक्षज्ञा. — d) K1 भारत (for पार्थिव).

**15** D2 om. 15 (cf. v.l. 1). — a) K1 (? gloss) सर्वम् (for कृत्स्नम्). — After 15ab, T2 ins.:

364* उपपद्यति मत्तश्च भविष्यति न संशयः ।

— d) Ś1 K1. 2. 4 D5 प्रपन्नाय; K3 सत्यमेतद्; B1 प्रसन्नोस्मि.

**16** D2 om. 16 (cf. v.l. 1). — a) T2 G2–4 राजन् (for राजा). — d) G1 श्रोतुम् (for ज्ञातुम्). K4 [अ]धीष्व भो; D1 वै प्रभो (for तत्त्वतः). — After 16, T2 G2–4 ins.:

365* कौन्तेयेनैवमुक्तस्तु बृहदश्वो महामुनिः ।

**17** D2 om. 17 (cf. v.l. 1). — b) Ś1 K1 पार्थिवाय (for पाण्ड°). D1 विशां पते (for महा°). — After 17ab, S (except M1) ins.:

366* लब्ध्वा च पाण्डवो राजा विशोकः समपद्यत ।
कथामेवं तथा कृत्वा नलस्य चरिताश्रयाम् ।
आमन्त्र्य पाण्डवान्सर्वान्बृहदश्वो जगाम ह ।

— cd) T1 G1 om. 17cd. D5 गतश्चाशु सरो राजन्; T2 G (G1 om.) उक्त्वा चाशु शिरोगच्छद्. D5 तपस्तप्तुं (for उपस्प्रष्टुं). M1 दत्त्वा चास्य महातेजा तत्रैवांतरधीयत.

**18** D2 om. 18 (cf. v.l. 1). — ab) Ś1 K1 D6 पार्थस्त्वश्रौषीत्. — G1 om. (hapl.) 18cd. — d) Ś1 K1 तपस्विनं; D1 युधिष्ठिरः; T2 G (G1 om.) जितेंद्रियं (for मनी°).

**19** D2 om. up to तीर्थ in 19c (cf. v.l. 1). — b) K1 इतस्ततः; K3 समंततः. — c) Ś1 K1 °शैलचरेभ्यश्च; K4 Dc D2 °शैलच(K4 °व-; D2 °प)रेभ्यश्च; B2. 3 Dn D3. 4. 6 T G (except G2) °शैलवनेभ्यश्च. — d) B D4 T2 G3 दृढव्रतं; D1 तथैव च.

**20** b) Ś1 दुष्कृतं; K1 दुष्करं; S (except G1 M1) उदारं (for दुरापं). — c) T G M2 transp. न and तथा. M1 स (for न). D2 G4 दृष्टपूर्वं. K4 D1 वा; D2 वै; D4 T1. 2 (before corr.) G2. 4 M1 नः (for ऽन्यः). — d) D1 क्वचिद्; D2 श्रुत. D4. 6 इव (for इति).

**21** a) K2 Dc2 Dn D2. 5 G1 तथा; M1 स वै (for यथा). — b) B1 G1 नियतेंद्रियः. — c) K1 °नरः; K2. 4 D4. 5 °वरः (for °चरः). Dc मुनिवेषधरः श्रीमान्; G2 मुनिरेकश्चरन्धीमान्.

**22** a) Dc D5 पांडवा; D3 पांडवं. Ś1 K1. 3. 4 G1 राजा; Dc वीरं (for राजन्). — b) Ś1 तपमानं. — c) K4 Dn1 T1 कौंतेयं; T2 (before corr.) G2. 4 चैकांते. K2 Dc D3. 5 अन्वशोचंत कौंतेयाः. — d) D4. 6 transp. प्रियं and जयं. T2 G2–4 तं प्रियं (for प्रियं वै). G1 भ्रातरं च धनंजयं.

**23** a) Dc च; D3. 5 सु- (for तु). — b) Ś1 K2. 3 Dn1 D2. 3. 5 प्रवृत्त्यर्थं; K1 तप्यमानो (for शर°). — After 23, S ins.:

367* प्रतिगृह्याक्षहृदयं कुन्तीपुत्रो युधिष्ठिरः ।
आसीद्धृष्टमना राजन्भीमसेनादिभिर्युतः ।
स्वभ्रातॄन्सहितान्पश्यन्कुन्तीपुत्रो युधिष्ठिरः ।
अपश्यन्नर्जुनं तत्र बभूवाश्रुपरिप्लुतः ।
संतप्यमानः कौन्तेयो भीमसेनमुवाच ह । [5]
कदा द्रक्ष्यामि वै भीम पार्थमत्र तवानुजम् ।
मत्कृते हि कुरुश्रेष्ठस्तप्यते दुश्चरं तपः ।
तस्याक्षहृदयज्ञानमाख्यास्यामि कदा न्वहम् ।

# ७९

जनमेजय उवाच ।
भगवन्काम्यकात्पार्थे गते मे प्रपितामहे ।
पाण्डवाः किमकुर्वन्त तमृते सव्यसाचिनम् ॥ १
स हि तेषां महेष्वासो गतिरासीदनीकजित् ।
आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे ॥ २
तेनेन्द्रसमवीर्येण संग्रामेष्वनिवर्तिना ।
विनाभूता वने वीराः कथमासन्पितामहाः ॥ ३

वैशंपायन उवाच ।
गते तु काम्यकात्तात पाण्डवे सव्यसाचिनि ।
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ॥ ४
आक्षिप्तसूत्रा मणयश्छिन्नपक्षा इव द्विजाः ।
अप्रीतमनसः सर्वे बभूवुरथ पाण्डवाः ॥ ५
वनं च तदभूत्तेन हीनमक्लिष्टकर्मणा ।
कुबेरेण यथा हीनं वनं चैत्ररथं तथा ॥ ६

C. 3. 3095
B. 3. 80. 6
K. 3. 78. 6

---

स हि श्रुत्वाक्षहृदयं समुपात्तं मया विभो ।
प्रहृष्टः पुरुषव्याघ्रो भविष्यति न संशयः । [10]

[ (L. 2) $T_1$ $G_{1.2}$ $M_1$ राजा (for राजन्). — (L. 3) $G_1$ $M_1$ स (for स्व-). — (L. 6) $T_1$ $G_1$ M कुंतीपुत्रं धनंजयं (for the posterior half). — (L. 7) $T_1$ $G_1$ M यत्कृने. $T_2$ G परमं (for दुश्चरं). — (L. 8) M [अ]प्यहं (for न्वहं). — (L. 9) $T_1$ $G_1$ M उपादत्तं (for समु°). $T_1$ $G_1$ $M_2$ विभुः. ]

Colophon. *Major parvan :* $Ś_1$ $K_1$ $D_5$ T $G_{2-4}$ आरण्य. — *Sub-parvan :* All MSS. (om. sub-parvan name) mention only नलोपाख्यान ($B_4$ prefixing काम्यके to it) followed by समाप्त ($B_{1.2}$ $M_2$ om. समाप्त). — *Adhy. name :* $M_2$ बृहदश्वगमनं. — *Adhy. no.* (figures, words or both) : $K_1$ T G $M_2$ (after corr.) 78 (as in text); $Dn_1$ (*sup. lin.*) 76; $Dn_2$ $M_1$ 79; $Dn_3$ $M_2$ (before corr.) 80; $D_1$ 84. — *Śloka no.:* $Dn_{1.n3}$ 27; $D_1$ 25. — *Aggregate Śloka no.:* $K_4$ 1251.

## 79

**1** $K_3$ (which om. the portion of the text from st. 1 of this adhy. up to line $127^{ab}$ of adhy. 81) ins. a line which, along with the continuations added in the margins (*sec. m.*), reads as follows:

368* वैशंपायन उवाच ।
तीर्थानां चैव माहात्म्यं पुलस्त्येनाभिभाषितान् ।
कदाचित्तीर्थयात्रायां नारदो भगवानृषिः ।
तीर्थानि पर्यटंस्तत्र युधिष्ठिरमुपागमत् ।
विनयावनतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ।
तीर्थाभिधानं पुण्यं च नारदाय महात्मने ।
नारद उवाच ।
तत्तेऽहं कथयिष्यामि शृणु धर्मभृतां वर ।
पुलस्त्युवाच ।

— $^{c}$) Dn $D_5$ अकुर्वंस्ते (for अकुर्वन्त). T $G_{1.3}$ $M_2$ किमकुर्व($M_2$ °र्वं)त पार्थास्ते. — $^{d}$) $M_1$ विना (for ऋते).

**2** $^{b}$) $D_{3.5}$ सपत्नजिद् (for गतिरासीद्). $Ś_1$ $K_1$ $B_1$ Dc $D_{1.2}$ अमित्रजित्; $K_4$ $D_{3.5}$ $M_2$ अनंत°; $B_2$ $G_1$ अनेक°. — After $2^{c}$, $K_4$ ins.:

369* रुद्राणां चैव शंकरः ।
त्रिदशानां महेन्द्रश्च.

— $^{d}$) S (except $G_1$ $M_2$) मा (for मे).

**3** $^{a}$) $Ś_1$ $K_1$ देवेंद्रसम°. — $^{b}$) $Ś_1$ $K_1$ B $D_{4.6}$ समरे° (for संग्रामे°). — $^{c}$) $Ś_1$ विना तेन; $D_5$ विना तात; $T_2$ $G_{2-4}$ विनाकृता. $K_4$ महा-; $B_1$ $D_{1.2}$ च ते (for वने). $K_1$ तेन; $T_1$ $G_2$ $M_2$ पार्थाः; $G_1$ पार्थे (for वीराः).

**4** $^{ab}$) $Ś_1$ D (except $D_{4.6}$) $T_1$ transp. काम्यकात् and पाण्डवे. $Ś_1$ $K_1$ राजन्; $K_4$ $B_1$ पार्थे (for तात). N ($K_3$ om.) सत्यविक्रमे (for सव्य°). — $^{c}$) $Ś_1$ $K_{1.2}$ D (except $D_4$) $M_1$ पांडवेयास्ते. $K_4$ जाता विमनसः सर्वे. — $^{d}$) $K_4$ भ्रातृ°.

**5** $^{a}$) $Ś_1$ $D_{2.3}$ °सूत्रमणयः; $D_6$ विच्छिन्नसूत्रा मणयः. — $^{b}$) $T_2$ $G_3$ भिन्न° (for छिन्न°). Dc (by transp.) द्विजा इव; $G_2$ इवांडजाः. — $^{d}$) $K_4$ इह; S तत्र (for अथ).

**6** $^{a}$) $K_2$ D (except $D_{1.2.4.6}$) तु (for च).

**7** $^{a}$) $M_1$ तं विना (for तमृते); cf. v.l. $12^{c}$, $13^{d}$, $14^{c}$, $19^{c}$, $22^{c}$, $25^{a}$, $29^{c}$. $Ś_1$ पुरुषव्याघ्राः; $K_{2.4}$ $B_1$ D (except $D_4$) $T_1$ $G_1$ M ते नरव्याघ्राः. $T_2$ $G_{2-4}$ ऋते तेन नरव्याघ्राः. — $^{cd}$) $D_3$ सुखम् (for मुदम्). $Dn_3$ $D_3$ अप्रासवंतः; $D_1$ अवाप्नुवंतः. $Dn_3$ $D_{1.2}$ ते (for वै). $K_4$

C. 3. 3096
B. 3. 80. 7
K. 3. 78. 7

तमृते पुरुषव्याघ्रं पाण्डवा जनमेजय ।
मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ॥ ७
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठ मेध्यान्बहुविधान्मृगान् ॥ ८
नित्यं हि पुरुषव्याघ्रा वन्याहारमरिंदमाः ।
विप्रसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ॥ ९
एवं ते न्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः ।
अहृष्टमनसः सर्वे गते राजन्धनंजये ॥ १०
अथ विप्रोषितं वीरं पाञ्चाली मध्यमं पतिम् ।
स्मरन्ती पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ११
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
तमृते पाण्डवश्रेष्ठं वनं न प्रतिभाति मे ।
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् ॥ १२
बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम् ।
न तथा रमणीयं मे तमृते सव्यसाचिनम् ॥ १३
नीलाम्बुदसमप्रख्यं मत्तमातङ्गविक्रमम् ।
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे ॥ १४
यस्य स्म धनुषो घोषः श्रूयतेऽशनिनिस्वनः ।
न लभे शर्म तं राजन्स्मरन्ती सव्यसाचिनम् ॥ १५
तथा लालप्यमानां तां निशम्य परवीरहा ।
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् ॥ १६
मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे ।
तन्मे प्रीणाति हृदयममृतप्राशनोपमम् ॥ १७
यस्य दीर्घौ समौ पीनौ भुजौ परिघसंनिभौ ।

---

काम्यके भीमनकुला निवसंतीह दुःखिताः.

**8** K1 om. 8. — a) K4 D1. 2 परिक्रांताः. — b) K4 तीक्ष्णबाणैर्; G2. 4 शुद्धा बाणैर्. Ś1 महामृगान्. — c) D1 भरतव्याघ्राः; D4. 6 T G2–4 M2 °श्रेष्ठाः. M1 न्यघ्नन्भरतशार्दूल. — D1. 2 om. 8d–9a. — d) Ś1 तथा (for मृगान्).

**9** D1. 2 om. 9a (cf. v.l. 8). — a) K2. 4 °व्याघ्र. — b) K2 D5 पांडवा जनमेजय; K4 M1 वन्याहारा अरिंदमाः; Dc T G M2 वन्याहारा ह्य(T1 °राण्य)रिंदमाः. — c) K1. 4 विप्रहृत्य; K2 B2 Dn D1. 6 उपाकृत्य; B3 विनिःसृत्य; D2 उपाहृत्य; D3 विप्रकृत्य; D5 उपकृत्य; T G3. 4 M प्रविसृत्य; G1 परिसृत्य; G2 प्रविहृत्य (for विप्र°).

**10** a) K2 Dn D5 सर्वे सं- (for एवं ते). — b) B2. 4 D4. 6 शोकार्ताः (for सोत्कण्ठाः). — c) Ś1 प्रहृष्टमनसः (!); T G M2 विषण्णवदनाः (T1 M2 °मनसः).

**11** a) Ś1 D1 अथैनं; K1 अथ तं (for अथ वि-). S (except M1) राजन् (for वीरं). K2 Dc Dn D5 विशेषतस्तु (Dc2 °श्च) पांचाली. — b) K2 Dc Dn D5 स्मरंती (for पाञ्चाली). D3 पांचाली आयुधं प्रति. — c) K2 Dn D5 उद्विग्नं; Dc उद्विग्ना; D3 आत्मानं (for स्मरन्ती). Ś1 M1 पांडवं ज्येष्ठम्; K4 D1 पांडवज्येष्ठम्. — After 11, D1. 2 read 14c–15d.

**12** c) M1 तं विना (for तमृते); cf. v.l. 7a, etc. K2. 4 B4 D (except D4. 6) T1 °श्रेष्ठ; M1 °ज्येष्ठ. — d) K4 काम्यकं न विराजते; S (except T2 G3) वनं नाभाति मामिदं. — e) T2 G2–4 एव (for इव). K2 D5 S (except M1) प्र- (for च). — After 12, M1 ins.:

370* विना तेन महीनाथ शक्रप्रतिमतेजसा ।

**13** c) Ś1 K1. 2 B1. 4 Dn D5 वै; K4 ते (for मे). — d) M1 तं विना (for तमृते); cf. v.l. 7a, etc.

**14** a) Ś1 D1 नीलांजनसमप्रख्यं; K4 D4. 6 नीलांबुदचयप्रख्यं. — b) K2. 4 B4 D (except D4. 6) M1 °गामिनं. — For sequence in D1. 2, cf. v.l. 11. — c) M1 तं विना (for तमृते); cf. v.l. 7a, etc. — d) D1. 2 वनं न (for काम्यकं). D1. 2 प्रतिभाति; D3 नाद्य भाति; M1 नाभ्यभाति. G2. 4 मा (for मे).

**15** For sequence in D1. 2 cf. v.l. 11. — a) K2. 4 Dn D5 वा (for स्म). — b) Dn3 श्रूयते चाशनिस्वनः; D3 श्रूयतेस्यास्य निस्वनः. — c) K1. 4 ते; K2 B Dn D4. 6 वै (for तं). M1 तस्याहं (for तं राजन्). M2 लभे शर्म न ते राजन्. — d) M1 सव्यसाचिनः. B D4. 6 तं स्मरंती किरीटिनं.

**16** b) B2 S (except T1 G1) निशाम्य; D2 निवास्य (for निशम्य). — c) Ś1 K1 महाबाहुर् (for महाराज). — d) K4 वाक्यम् (for इदम्).

**17** Before 17, K2 B3. 4 Dc1 Dn3 D4. 6 ins. भीम उ°; Dc2 Dn1. n2 D3 भीमसेन उ°; G1 M भीमः. — a) Dc D1. 2 T1. 2 (before corr.) G1. 2 मम (for मनः-).

**18** ab) K1. 4 transp. समौ and भुजौ. — c) K1 T1 G4 मौर्वीकिणकृतौ वृत्तौ. — d) Ś1 खड्गायुधधरौ समौ; K1 खड्गयुद्धधरौ उभौ; K2. 4 Dc Dn D3. 5 खड्गायुध(Dn3 खड्गयुद्ध)धनुर्धरौ; B चारुरूपौ (B2 उग्रायुध-) गदाधरौ; D1. 2

मौर्वीकृतकिणौ वृत्तौ खड्गायुधगदाधरौ ॥ १८
निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ।
तमृते पुरुषव्याघ्रं नष्टसूर्यमिदं वनम् ॥ १९
यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ।
सुराणामपि यत्तानां पृतनासु न बिभ्यति ॥ २०
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ २१
तमृते फल्गुनं वीरं न लभे काम्यके धृतिम् ।
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् ॥ २२

नकुल उवाच ।

य उदीचीं दिशं गत्वा जित्वा युधि महाबलान् ।
गन्धर्वमुख्याञ्शतशो हयाँल्लेभे स वासविः ॥ २३
राजंस्तित्तिरिकल्माषाञ्श्रीमाननिलरंहसः ।
प्रादाद्भ्रात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ ॥ २४
तमृते भीमधन्वानं भीमादवरजं वने ।
कामये काम्यके वासं नेदानीममरोपमम् ॥ २५

सहदेव उवाच ।

यो धनानि च कन्याश्च युधि जित्वा महारथान् ।
आजहार पुरा राज्ञे राजसूये महाक्रतौ ॥ २६
यः समेतान्मृधे जित्वा यादवानमितद्युतिः ।
सुभद्रामाजहारैको वासुदेवस्य संमते ॥ २७
तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामुपनिवेशने ।

C. 3. 4019
B. 3. 80. 29
K. 3. 78. 30

---

खड्गयुद्धविशारदौ; $G_4$ $M_2$ खड्गायुधगदायुधौ.

**19** $K_4$ (which om. $19^{c}$–$20^{d}$) reads सुवर्णकठकावेव कृतावापीजडाययौ (corrupt) as *pāṭhāntara* probably for $19^{ab}$. — $^{c}$) = $7^{a}$. $M_1$ तं विना (for तमृते); cf. v.l. $7^{a}$ etc. — $^{d}$) $K_1$ नष्टसूर्यसमं; S °निभं. $D_1$ जगत् (for वनम्). $K_2$ Dn $D_5$ नष्टसूर्यमिवांबरं.

**20** $K_4$ om. 20 (cf. v.l. 19). — $^{b}$) $B_1$ Dc $D_4$ पंचालाः. — $^{d}$) S विव्यथुः (for बिभ्यति).

**21** $^{a}$) $Dn_2$. $n_3$ $D_{2.4.6}$ $T_2$ $G_{2.3}$ बाहुं. — $^{c}$) $Ś_1$ निहत्याजौ; $K_1$ हतानाजौ (for जिता°).

**22** $D_{1.2}$ om. 22. — $^{a}$) $M_1$ तं विना (for तमृते); cf. v.l. $7^{a}$ etc. N (except $Ś_1$) $T_2$ $G_3$ फाल्गुनं. — $^{b}$) $B_2$ $Dn_2$ रतिं (for धृतिम्). $Ś_1$ धृतिं न लभते वने. — $K_{2-4}$ Dn $D_5$ om. $22^{cd}$. — $^{cd}$) = $12^{cd}$. $Ś_1$ $D_6$ अपि (for इव). $D_3$ शून्यमेव जगत्सर्वमखिलं प्रतिभाति मे. — N ($Ś_1$ $K_4$ $D_{1.2}$ om. line 1) ins. after 22 ($K_2$ Dn $D_5$, which om. $22^{cd}$, ins. after $22^{ab}$):

371* पश्यामि च दिशः सर्वास्तिमिरेणावृता इव ।
ततोऽब्रवीत्साश्रुकण्ठो नकुलः पाण्डुनन्दनः ।
[(L. 2) $Ś_1$ अश्रु° (for साश्रु°).]

**23** $K_{1.4}$ $Dn_1$. $n_2$ $D_1$ om. the ref. — N ins. after नकुल उ° ($K_{1.4}$ $Dn_1$. $n_2$ $D_1$, which om. the ref., ins. after 371*):

372* यस्मिन्दिव्यानि कर्माणि कथयन्ति रणाजिरे ।
देवा अपि युधां श्रेष्ठं तमृते का रतिर्वने ।
[(L. 1) $K_1$ $B_{1-3}$ Dc $D_{4.6}$ यस्य; $K_4$ यदि (for यस्मिन्). $Ś_1$ $K_{1.4}$ Dc $D_3$ transp. दिव्यानि and कर्माणि. $D_2$ विद्याश्च; $D_5$ कर्माणि (for दिव्यानि). $D_5$ दृष्टानि (for कर्माणि). — (L. 2) $K_4$ $D_{1-3}$ युधां श्रेष्ठे; $B_4$ सुराः श्रेष्ठास् (for युधां श्रेष्ठं). $Ś_1$ $K_1$ गतिर् (for रतिर्).]

— $^{a}$) $Ś_1$ $K_{1.2}$ Dn $D_5$ transp. यः and उदीचीं. — $^{b}$) $B_1$ S (except $T_2$ $G_3$ $M_1$) transp. जित्वा and युधि. — $D_3$ om. from शतशो up to 24. — $^{d}$) $K_2$ Dc Dn $D_5$ महाद्यु(Dc °म)तिः (for स वासविः).

**24** $D_3$ om. 24 (cf. v.l. 23). — $^{a}$) $K_4$ तदा; $B_2$ $D_{1.2.5}$ राज्ञे; $M_1$ हयान् (for राजन्). Some MSS. तित्तिर°. — $^{b}$) $B_{2-4}$ Dn $D_{4.6}$ श्रीमतोनिल°. — $24^{d}$ = $26^{d}$.

**25** $^{a}$) $M_1$ तं विना (for तमृते); cf. $7^{a}$ etc. $Ś_1$ $K_1$ $D_1$ भीमकर्माणं. — $^{b}$) $B_4$ अनवरं (for अवरजं). $K_4$ सर्वशास्त्रभृतां वरं. — $^{c}$) $K_1$ चरये काम्यके; T $G_{2-4}$ (by transp.) काम्यके कामये. — $^{d}$) $Ś_1$ $K_{1.3}$ $B_{2.4}$ $D_3$ $G_{1.2}$ $M_1$ अमरोपम.

**26** $^{a}$) $D_{1.2}$ कन्यां च. — $^{b}$) $Ś_1$ $K_2$ $B_1$ Dn $D_5$ महारथः; $K_4$ °बलः; $T_2$ $G_{2-4}$ °बलान्. — $^{cd}$) $K_4$ महा-; Dc परान्; $D_3$ पुनर् (for पुरा). $B_4$ Dc $D_5$ राज्ञः; $D_3$ जज्ञे (for राज्ञे). S शतशो घातयित्वारीन्पृतनामभ्यगस्तदा. — $26^{d}$ = $24^{d}$.

**27** $^{a}$) $K_1$ युधि; $D_{1-3}$ पुरा (for मृधे). — $^{c}$) T G एकः सुभद्रामारोप्य; $M_2$ एकः सुभद्रामहरद्. — $^{d}$) $B_{1.4}$ सद्मनि (for संमते). — After 27, $B_4$ Dc S (except $M_1$) ins.:

373* येनार्धराज्यमाच्छिद्य द्रुपदस्य महात्मनः ।
आचार्यदक्षिणा दत्ता गुरोर्द्रोणस्य भारत ।
[(L. 1) $B_4$ Dc येन राज्यं समाच्छिद्य.]

**28** $^{ab}$) $D_1$ शून्यामिह दृष्ट्वा (for दृष्ट्वा शून्यामुप). $Ś_1$

C. 3. 4019
B. 3. 80. 29
K. 3. 78. 30

हृदयं मे महाराज न शाम्यति कदाचन ॥ २८
वनादस्माद्विवासं तु रोचयेऽहमरिंदम ।
न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥ समाप्तमिन्द्रलोकाभिगमनपर्व ॥

## ८०

वैशंपायन उवाच ।
धनंजयोत्सुकास्ते तु वने तस्मिन्महारथाः ।
न्यवसन्त महाभागा द्रौपद्या सह पाण्डवाः ॥ १
अथापश्यन्महात्मानं देवर्षिं तत्र नारदम् ।
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् ॥ २
स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुसत्तमः ।
विबभावतिदीप्तौजा देवैरिव शतक्रतुः ॥ ३
यथा च वेदान्सावित्री याज्ञसेनी तथा सती ।
न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा ॥ ४
प्रतिगृह्य तु तां पूजां नारदो भगवानृषिः ।
आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥ ५
उवाच च महात्मानं धर्मराजं युधिष्ठिरम् ।

---

K1 B3 Dc Dn1 D5 इव; K2 B1. 2. 4 Dn2. n3 D6 मम; K4 T G2–4 अपि (for उप-).

**29** b) B2 D1. 3. 6 [ऽ]यम् (for ऽहम्). K4 Dc अनिंदिते (for अरिंदम). — c) M तं विना (for तमृते); cf. v.l. 7a etc.

Colophon om. in Ś1 K3. — *Major parvan:* K1 T G2–4 M1 आरण्य. — *Adhy. name:* K4 D1. 2 धनंजयोत्कण्ठा; B4 काम्यके पाण्डवपरिदेवनम्; T2 G3 पाण्डवोत्कण्ठा. — *Adhy. no.* (figures, words or both): Dn1. n2 M1 80; Dn3 M2 (before corr.) 81; D1 85; T G M2 (after corr.) 79 (as in text). — *Śloka no.:* Dn 31; D1 30.

### 80

☞ This adhy. is missing in K3 (cf. v.l. 3. 79. 1); the MS. is mostly ignored here.

**1** d) S कृष्णया (for पाण्डवाः). — After 1, N (except D4. 6; Ś1 K1 om. line 1; K3 missing) ins.:

374* धनंजयोत्सुकानां तु भ्रातॄणां कृष्णया सह ।
श्रुत्वा वाक्यानि विमना धर्मराजोऽभ्यजायत ।

[(L. 1) D1. 2 एवं शोकयुतांस्तांस्तु (for the prior half). K4 D1. 2 सह भार्यया (for कृष्णया सह). — (L. 2) Ś1 K1 महायशाः (for ऽभ्यजायत).]

**2** d) Ś1 K1 D1. 2 M सूर्याग्नि°; K2. 4 Dn D5 हुतार्चिषमिवानलं. — K2. 4 D ins. after 2 (Dc ins. line 2 after 4; D1. 2 om. line 1, but ins. line 2 after 4): Ś1 K1 ins. after 4:

375* तमागतमभिप्रेक्ष्य भ्रातृभिः सह धर्मराट् ।
प्रत्युत्थाय यथान्यायं पूजां चक्रे महात्मने ।

**3** K4 D5 om. 3–4; Dc om. 3ab. — b) K1 B4 कुरुनंदन. — c) Ś1 विभाति स्म सुदिप्तौजा; K1 विबभौ हि सु°; T1 G1 M2 प्रबभा°. — d) Ś1 पितामहः (for शत°).

**4** K4 D5 om. 4 (cf. v.l. 3). — a) D1. 2 यथैव (for यथा च). Ś1 वेदानि; K1 वेदान्हि; T1 च वेदैः; G4 M2 च देवान् (for च वेदान्). — b) K1 transp. तथा and सती. K2 B1. 5 Dn D3. 4. 6 T2 G3 पतीन्; T1 पती (for सती). — After 4, Ś1 K1 ins. 375*, while Dc D1. 2 ins. line 2 only of that insertion. On the other hand, S ins. after 4:

376* अर्घ्यं पाद्यमथानीय स्वभ्यवादयदच्युतम् ।
नारदस्तु महातेजाः स्वस्त्यस्त्वित्यभ्यभाषत ।

T2 G2–4 cont.:

377* ततो युधिष्ठिरो राजा दृष्ट्वा देवर्षिसत्तमम् ।
यथार्हं पूजयामास विधिवत्कुरुनन्दनः ।

**5** a) K2 Dn D5. 6 च तां; K4 B1–3 Dc D3. 4 ततः; B4 M1 शुभां; T G M2 स तां (for तु तां). — c) K4 B2. 4 T1 आश्वासयन्. — d) B4 D1. 4. 6 इहा° (for इवा°). K4 Dc D5 उवाच वदतां वरः.

**6** B1 om. 6a–9b; K4 Dc D5 om. 6ab. — a) G1 महाप्राज्ञं. — b) Ś1 K1 M1 °पुत्रं (for °राजं). — d) T2

ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददामि ते ॥ ६
अथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह ।
उवाच प्राञ्जलिर्वाक्यं नारदं देवसंमितम् ॥ ७
त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ॥ ८
यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
संदेहं मे मुनिश्रेष्ठ हृदिस्थं छेत्तुमर्हसि ॥ ९
प्रदक्षिणं यः कुरुते पृथिवीं तीर्थतत्परः ।
किं फलं तस्य कात्स्न्येन तद्ब्रह्मन्वक्तुमर्हसि ॥ १०

नारद उवाच ।

शृणु राजन्नवहितो यथा भीष्मेण भारत ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ ११
पुरा भागीरथीतीरे भीष्मो धर्मभृतां वरः ।
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिवत्तदा ॥ १२
शुभे देशे महाराज पुण्ये देवर्षिसेविते ।
गङ्गाद्वारे महातेजा देवगन्धर्वसेविते ॥ १३
स पितृंस्तर्पयामास देवांश्च परमद्युतिः ।
ऋषींश्च तोषयामास विधिदृष्टेन कर्मणा ॥ १४
कस्यचित्त्वथ कालस्य जपन्नेव महातपाः ।
ददर्शाद्भुतसंकाशं पुलस्त्यमृषिसत्तमम् ॥ १५
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं च परं ययौ ॥ १६
उपस्थितं महाराज पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ १७
शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः ।
नाम संकीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे ॥ १८
भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत ।
तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ १९
एवमुक्त्वा महाराज भीष्मो धर्मभृतां वरः ।
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ २०

C. 3. 4041
B. 3. 81. 21
K. 3. 79. 24

M केनार्थी. Ś1 B3 Dn1 M ददानि.

**7** B1 om. 7 (cf. v.l. 6). — b) D2 प्रत्यभाषत सत्तम. — D2 om. $7^c$–$8^d$. — c) N (except B D3. 4; K3 missing) भूत्वा (for वाक्यं). — d) K2 Dn D5 G2. 4 M1 देवसंमतं; T2 G3 °सत्तमं.

**8** B1 D2 om. 8 (cf. v.l. 6, 7). — a) K4 (by transp.) तुष्टे त्वयि; T1 त्वयि दृष्टे. B2 S (except M1) महाभागे. — c) K1 संदेहं; B3 D4. 6 मन्यामि; D1 मन्यामः (for मन्येऽहं).

**9** B1 om. $9^{ab}$ (cf. v.l. 6). — a) T2 G2–4 तेहम् (for त्वहम्). — d) Ś1 K2. 4 D (except D3. 4. 6) तत्वतश्च; K1 तत्वविच् (for हृदिस्थं). Ś1 अर्हति. B4 G1 M2 हृदि संछे(B4 °वे)त्तुमर्हसि.

**10** D5 om. 10. — ab) Ś1 K2 B2–4 Dn D8 G2. 4 प्रदक्षिणां; T1 प्रतीक्षणं. K4 D1. 2 G1 M2 transp. कुरुते and पृथिवीं. M1 पृथिवीं (for कुरुते), and कुर्याद्वै (for पृथिवीं). — d) D3 (by transp.) ब्रह्मन् तद्; S (except M1) त्वं ब्रह्मन्. K2 B1 Dn भवान्; B3 फलं (for ब्रह्मन्).

**11** b) N (except B2–4 D4. 6; K3 missing) M1 धीमता (for भारत). — c) B3. 4 D1. 2 हि (for वै).

**12** c) Ś1 पैत्र्यं. B1 पित्र्यर्थं व्रतमास्थाय. — d) Ś1 K (K3 missing) Dn D1–3. 5 मुनिभिः सह (for °वत्तदा).

**13** a) Ś1 K1 B3 Dn D2. 5. 6 तथा (Ś1 °दा) राजन् (for महा°). — b) B2 देवर्षिवर्जिते; B3. 4 Dc D4. 6 M1 °पूजिते. — D1 om. $13^{cd}$. — c) Ś1 K (K3 missing) Dc D2. 3 °भाग; T2 G2–4 °देशे (for °तेजा).

**14** B4 om. (hapl.) $14^{bc}$. — b) T2 G3 (both marg.) परमर्षिभिः. — c) K1. 2 B1. 3 Dn D3. 5 तर्प° (for तोष°). — $14^d$=$17^d$.

**15** b) K2. 4 Dc Dn D5 °यशाः; B2–4 D4. 6 °मनाः; D3 °रथः (for °तपाः). — c) K1 ददर्शादित्यसंकाशं; B1 D3 T2 G2–4 °द्भुतकर्माणं.

**16** d) Ś1 K (K3 missing) Dn D1. 2. 4–6 G1 M2 परमं (for च परं).

**17** a) Ś1 °भाग; K (K3 missing) D (except D3. 4. 6) °भागं (for °राज). — $17^d$=$14^d$.

**18** a) K2 B1–3 Dn1. n3 D1. 4–6 चार्घम् (for चार्घ्यम्). D2 शिरसा चार्चयामास. — d) B4 ब्राह्मणसत्तमे; T2 G3. 4 ब्रह्मर्षिसेविते.

**19** a) B2–4 D4. 6 इति (for अस्मि). D1 धर्मात्मन्; D2 धर्मज्ञ (for भद्रं ते). — b) K1 D1. 2 तव दासोस्मि सु°. — d) D1 °संशयैः; T2 G2–4 °किल्बिषात्.

**20** a) Ś1 K1 °बाहुर् (for °राज). — c) K1 S (except M1) प्रयतो; B4 प्रणतो (for प्राञ्जलिर्).

C. 3. 4042
B. 3. 81. 22
K. 3. 79. 25

तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाभवत् ॥ २१

पुलस्त्य उवाच ।

अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग तुष्टोऽस्मि तव सर्वशः ॥ २२
यस्येदृशस्ते धर्मोऽयं पितृभक्त्याश्रितोऽनघ ।
तेन पश्यसि मां पुत्र प्रीतिश्चापि मम त्वयि ॥ २३
अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥ २४

भीष्म उवाच ।

प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं यदहं दृष्टवान्प्रभुम् ॥ २५
यदि त्वहमनुग्राह्यस्तव धर्मभृतां वर ।
वक्ष्यामि हृत्स्थं संदेहं तन्मे त्वं वक्तुमर्हसि ॥ २६
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तमहं श्रोतुमिच्छामि पृथक्संकीर्तितं त्वया ॥ २७
प्रदक्षिणं यः पृथिवीं करोत्यमितविक्रम ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ २८

पुलस्त्य उवाच ।

हन्त तेऽहं प्रवक्ष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् ॥ २९
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ३०
प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः ।

---

**21** $^{b}$) Ś$_1$ स्वाध्यायाम्नायकर्षितं; $K_1$ °मुत्तमं; $B_4$ $D_{4.6}$ स्वाध्यायेन च कर्षितं; $D_2$ स्वाध्यायाच्च विकर्षितं; $D_3$ स्वाध्यायेनाथ कर्षितं. — After 21$^{ab}$, $G_2$ ins.:

378* ततः स मधुरेणाथ स्वरेण सुमहातपाः ।
उवाच वाक्यं धर्मज्ञः पुलस्त्यः प्रीतमानसः ।

— $^{c}$) Ś$_1$ $K_1$ कुरुवरश्रीमान्; $B_{1.3.4}$ $D_{4.6}$ $M_2$ कुरुवरश्रेष्ठं. — $^{d}$) $K_1$ प्रीतामनो (sic) अभूत्; $B_1$ $D_3$ प्रीतोभवत्तदा; $T_1$ $G_{1.4}$ प्रीतमनाब्रवीत्; $M_1$ प्रीतमना अभूत्. — After 21, Dn $D_{3.4.6}$ S (except $M_1$) ins. an addl. colophon (*adhy. no.:* $Dn_1$ T G $M_2$ 80; $Dn_3$ 82).

**22** $^{b}$) $D_{1.2}$ प्रणयेन (for प्रश्र°). — $^{d}$) $K_1$ [ऽ]हं (for ऽस्मि). $K_1$ नित्यशः; $K_{2.4}$ Dn Dc $D_{1-3.5}$ सुव्रत (for सर्वशः). $B_3$ तुष्टोस्मि भरतर्षभ; S परितुष्टोस्मि सर्वशः.

**23** $K_1$ om. 23–25. — $^{b}$) $K_{2.4}$ Dc $D_{1.2.5}$ °भक्त्या श्रु($K_4$ श्रि)तेन च; $D_3$ °भक्त्या ततोनघ; S °वाक्याश्रितोनघ. — $^{d}$) T $G_{2-4}$ अस्ति; $G_1$ $M_2$ ह्यस्ति; $M_1$ चास्ति (for चापि). $K_{2.4}$ D (except $D_{3.4.6}$) प्रीतिश्च परमा त्वयि.

**24** $K_1$ om. 24 (cf. v.l. 23). — $^{a}$) $D_{1-3}$ T $G_3$ भीष्मोहं.

**25** $K_1$ om. 25 (cf. v.l. 23). — After the ref. $K_4$ (marg.) *repeats* 10$^{ab}$. — 25$^{ab}$=(var.) 8$^{ab}$. — $^{a}$) $T_2$ $G_{2.3}$ त्वयि तुष्टे (for प्रीते त्वयि). B (except $B_1$) $D_{4.6}$ महाब्रह्मन्; $T_2$ $G_{1-3}$ °भागे. — $^{c}$) =8$^{c}$. B $D_{4.6}$ मन्यामि; $D_3$ पश्यामि (for मन्येऽहं). $K_2$ Dn $D_5$ कृतमेतावता मन्ये; $T_1$ $M_1$ मन्येहं कृतमित्येव. — $^{d}$) Ś$_1$ यदिष्टं दिष्टवान्प्रभुं; $D_{1.2}$ यत्तु त्वां दिष्टवानहं; $T_1$ $M_1$ दृष्टवानस्मि ($M_1$ °सि) यत्प्रभुं.

**26** Cf. 9. — $^{c}$) Ś$_1$ K ($K_3$ missing) Dn $D_{1-3}$ संदेहं ते (Ś$_1$ °हात्ते; $D_{1.2}$ °हं तु) प्रवक्ष्यामि; $B_{2-4}$ $D_{4.6}$ प्रक्ष्यामि कृत्स्नं संदेहं. — $^{d}$) Ś$_1$ K ($K_3$ missing) $B_{3.5}$ Dn $D_{1.3}$ छेत्तुम्; $D_2$ वेत्तुम् (for वक्तुम्).

**27** $^{a}$) Ś$_1$ $K_{1.2}$ Dn $D_5$ हृदये (for भगवन्). — $^{b}$) Ś$_1$ धर्मसंचयं; $D_4$ °संग्रहः. S तीर्थानि प्रति ($T_1$ सुमहान्हृदि) संशयः. — $^{c}$) Ś$_1$ $G_{2.4}$ यदहं (for तमहं). — $^{d}$) Ś$_1$ K ($K_3$ missing) $B_1$ D (except $D_6$) तद्भवान्वक्तुमर्हति ($K_{1.4}$ $Dn_3$ $D_{1-3}$ °सि); $T_1$ $G_{2.4}$ त्वत्तो वै मुनिसत्तम. — After 27, $K_4$ ins. an addl. colophon.

**28** =(var.) 10. — $^{a}$) Ś$_1$ $K_{1.2}$ B Dn $D_{2-4.6}$ प्रदक्षिणां. $D_{1.2}$ कुरुते (for पृथिवीं). — $^{b}$) Ś$_1$ $K_1$ $B_{1-3}$ $D_3$ $T_1$ $G_{1.4}$ M करोत्यमितविक्रमः; $K_2$ Dc Dn $D_5$ करोत्यमरसंनिभ (Dc $D_5$ °भं); $K_4$ $D_{1.2}$ पृथिवीं ($K_4$ कुरुते) तीर्थतत्परः. — $^{c}$) $T_1$ $G_{2.4}$ यत् (for किं). $K_2$ Dc ब्रह्मर्षे; $D_{1.2}$ देव° (for विप्र°). — $^{d}$) $K_1$ यथातथं; $K_2$ Dn $D_5$ सुनिश्चितं; $K_4$ Dc विनिश्चितं (for तपो°).

**29** $^{a}$) Ś$_1$ $K_{1.4}$ Dc हंत (Dc अहं) ते संप्रवक्ष्यामि; $K_2$ Dn $D_5$ हंत ते कथयिष्यामि; $B_{2-4}$ $D_4$ $T_2$ $G_3$ $M_1$ कथयिष्यामि तदहं ($M_1$ तत्सर्वं); $D_{1.2}$ अहं तत्ते प्रवक्ष्यामि. — $^{b}$) $B_{1-3}$ $D_4$ $T_2$ $G_3$ $M_1$ transp. यत् and ऋषीणां. $B_1$ पुरातनं (for परा°). $T_1$ तीर्थयात्रां परायणां. — $^{c}$) Ś$_1$ K ($K_3$ om.) $B_4$ D (except $D_{3.4.6}$) पुत्र (for तात). $M_1$ तदेकाग्रेण मनसा. — $^{d}$) $B_1$ $D_3$ या गतिः (for यत्फलम्).

**31** $K_2$ om. 31$^{a}$–32$^{b}$; $D_1$ om. 31. — $^{a}$) $K_{1.4}$

अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ ३१
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते ॥ ३२
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ ३३
ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ ३४
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ ३५
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैरेकात्मभिरसंहतैः ॥ ३६
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधां वर ॥ ३७
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ ३८
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ ३९
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ ४०
नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥ ४१
दश कोटिसहस्राणि तीर्थानां वै महीपते ।
सांनिध्यं पुष्करे येषां त्रिसंध्यं कुरुनन्दन ॥ ४२
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं संनिहिता विभो ॥ ४३
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
दिव्ययोगा महाराज पुण्येन महतान्विताः ॥ ४४
मनसाप्यभिकामस्य पुष्कराणि मनस्विनः ।

C. 3. 4066
B. 3. 82. 24
K. 3. 80. 24

---

Dn1. n3 G1. 4 अपावृत्तः (for उपा°). — b) Ś1 K1. 4 D (except D3. 4. 6; D1 om.) °ष्टो येन केनचित्. — $31^{d}$ = $30^{d}$, $32^{d}$, $33^{d}$.

**32** K1 om. 32; K2 om. $32^{ab}$ (cf. v.l. 31). Ś1 transp. 32 and 33. — a) B1. 4 D2 G1. 2 °लंभो; D3 T2 G3 °लंबो (for °रम्भो). — c) Ś1 सर्वदोषेभ्यः; K2 Dn °पापेभ्यः; K4 D1. 2 °दोषैस्तु; B1 D3 °दोषैश्च. K2 विद्या तपश्च किर्तिश्च. — $32^{d}$ = $30^{d}$, $31^{d}$, $33^{d}$.

**34** a) Ś1 K1 क्रतुभिः (for क्रतवः). — b) B1. 3 Dn D1. 2 देवेषु; B2 देवेभ्यः (m वेदेभ्यः) (for वेदेषु). K1 T1 च; B1. 2m. 4 Dc D3. 4. 6 [अ]पि; D1. 2 [ए]व; G1 M2 [इ]व (for [इ]ह). — c) K2 Dn D5 यथातथ्यं; B1 °वृत्तं.

**36** a) Ś1 K1. 2 B3 Dc Dn D2. 4–6 G4 M2 एतैः; B1 चैव; B2 वेत्ति; D3 एव (for एते). — b) B4 सह (for क्वचित्). — c) Ś1 नार्थहीनैरवगणैः. K1. 2 B2–4 Dc Dn1. n2 D3(marg. *sec. m.*). 4. 6 °न्यूनैर्नावगणैः; K4 Dn3 M1 °न्यूनैरव( M °प)गुणैः; B1 °घृणैरपि गणैः; D1. 2 °न्यूनैरविगुणैः; D3 (orig.) तीर्थान्यूनैरवगणैः; G4 कार्थन्यूनोपकरणैः. — d) Ś1 Dn3 परात्मभिर्; G1 तुल्या°. Ś1 असंहितं; K1 B2–4 Dc Dn D3. 4. 6 M असाधनैः (Dn3 असंवृतं); K4 D1. 2 असंयतैः; T2 G1. 3 अहिंसकैः.

**37** b) Some MSS. जने° (for नरे°). — Ś1 om. $37^{cd}$. — d) K (K3 missing) Dn3 D4. 5 तन् (for तं). B2–4 D4. 6 T2 G3 महीपते (for युधां वर).

**39** a) Ś1 K त्रिरात्रं तु (for °त्राणि). — b) T2 G2–4 [अ]नुपसेव्य; G1 [अ]नवगाह्य (for [अ]नभिगम्य). — c) T1 G2. 4 गां (for गाः).

**40** c) T1 M समश्नाति; G1 समांशेन (for अवाप्नोति).

**41** a) K2 D1. 2. 5 त्रिलोके; T1 M त्रिलोक-; G1 त्रिलोक्यां (for नृलोके). T2 G2–4 सर्वतीर्थेषु राजेंद्र. — c) B Dc D3. 4. 6 पुष्करं तीर्थमासाद्य. — d) S (except M1) °राज (for °भागः). B Dc D4. 6 देवदेवसमो भवेत्; D3 नरो देवसमो भवेत्.

**42** a) T1 शत- (for दश). — b) Ś1 K2. 4 Dn D5. 6 महामते; K1 महाद्युते (for मही°). — c) Ś1 यांति; K1 तेषां; D3 तीर्थे; T1 ह्येषां (for येषां). — d) Dc भरतर्षभ; M1 पुरुषर्षभ (for कुरु°).

**43** a) B1 D3 चैव (for रुद्राः). — b) B1 D3 रुद्राः साध्या मरुद्गणैः. — d) B1. 3 D3. 4. 6 M1 तत्र (for नित्यं). Some MSS. प्रभो (for विभो).

**44** b) Ś1 K1 साध्याश्च मरुतस्तथा. — After $44^{ab}$, T2 G2–4 M1 ins.:

379* तपोविशेषैर्बहुभिः स्थानान्यापुर्महौजसः ।

— M1 om. $44^{cd}$. — c) G1. 3. 4 दिव्ययोगात्.

**45** a) Ś1 K1 हि (for [अ]पि). — b) B1 M1 महात्मनः (for मन°). — c) B2–4 Dc D4. 6 पुनंति; M1 नश्यंति

C. 3. 4066
B. 3. 82. 24
K. 3. 80. 24

पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ ४५
तस्मिंस्तीर्थे महाभाग नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसंमतः ॥ ४६
पुष्करेषु महाभाग देवाः सर्षिपुरोगमाः ।
सिद्धिं समभिसंप्राप्ताः पुण्येन महतान्विताः ॥ ४७
तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ४८
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥ ४९
शाकमूलफलैर्वापि येन वर्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ।
तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः ॥ ५०
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ॥ ५१
कार्तिक्यां तु विशेषेण योऽभिगच्छेत पुष्करम् ।
फलं तत्राक्षयं तस्य वर्धते भरतर्षभ ॥ ५२
सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ।
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ।
प्राप्नुयाच्च नरो लोकान्ब्रह्मणः सदनेऽक्षयान् ॥ ५३
जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा ।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥ ५४
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ।
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ॥ ५५
उष्य द्वादश वर्षाणि पुष्करे नियतः शुचिः ।

---

(for पूयन्ते). — $^{d}$) D3 मोद° (for पूज्य°).

**46** $^{a}$) Ś1 B1 D4. 6 अस्मिंस्तीर्थे. Ś1 K (K3 missing) B3 D (except D4. 6) महाराज; S महाभागाः. — $^{d}$) Ś1 K1 °संमितः; K2 Dn D5 भगवान्कमलासनः; D3 T2 G2–4 देवदानवसत्तमः; M1 °सेवितः.

**47** $^{a}$) D2 पुष्करेण. K1 महाराज; Dc D2 T2 G2. 3 °भागाः; M तपस्तप्त्वा. — $^{b}$) Ś1 K1 सर्षिगणास्तथा; K2. 4 Dn D3. 5 सर्षिगणाः पुरा; D1. 2 ऋषिपुरोगमाः. — $^{c}$) K4 च समभिप्राप्ताः; B D4. 6 परमिकां प्रा°; D3 M1 हि समनुप्रा°; G2 समनुसंप्रा°.

**48** $^{a}$) Dc transp. यः and कुर्यात्. — $^{b}$) T2 G3 पितृदेवांश्च तर्पयेत्. — $^{cd}$) = 3. 80. 87$^{cd}$; 83. 4$^{cd}$. K1. 2 B1. 3. 4 Dc Dn D5 अश्वमेधाद् (for °मेधं). Dn D5 फलं प्राहुर्मनीषिणः (for $^{d}$). S सोऽश्वमेधमवाप्नोति (T2 G3 सर्वपापविनिर्मुक्तः) ब्रह्मलोके च पूज्यते.

**49** $^{b}$) G2 पुष्करं तीर्थमाश्रितः. — $^{c}$) B2–4 D4. 6 तेनाप्नोत्यजिताँल्लोकान्. — $^{d}$) M1 नंदति (for मोदते). B2–4 D4. 6 ब्रह्मणः सदने स्थितान्.

**50** $^{a}$) Dc G2 शाकैर् (for शाक-). K2 Dn D5 शाकैर्मूलैः फलैर्वापि. — $^{b}$) Dc D4. 6 वा वर्तते (for वर्तयते). — T1 G1 M om. 50$^{cd}$. — $^{d}$) K2 श्रद्धयानसूयवे; Dc श्रुत्वा वाननसूयवान्; D5 श्रद्धावाननुसूयवे. — $^{e}$) K4 B3 D4. 6 M1 चाप्नु° (for प्राप्नु°). Ś1 K1 सर्वं (for प्राज्ञो). — After 50, T2 G2–4 ins.:

380* अपि चाप्युदपात्रेण ब्राह्मणान्स्वस्ति वाचयेत् ।
तेनापि पूजनेनाहुः प्रेत्यानन्त्याय कल्पते ।

**51** $^{ab}$) Ś1 K1. 2 B1 D (except D1. 2. 4) M1 ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा राज°. — $^{c}$) B2. 3 वै (for वि-). K2 Dn D5 न वै योनौ प्रजायंते. — $^{d}$) K2 D3. 5 स्नात्वा (for स्नातास्). G1 स्नात्वा तीर्थेषु भारत.

**52** $^{a}$) K2. 4 B Dc Dn D1. 2. 4–6 T1 G1 M कार्तिकीं (D1 M1 °की); D3 °के (for °क्यां). D1. 2 च (for तु). — $^{b}$) Ś1 K2 Dn D3. 5 G1 M1 योभिगच्छति. — After 52$^{ab}$, K1. 2 B2–4 D (except D3) read 53$^{ef}$. K2 B2–4 D (except D1–3) om. 52$^{cd}$. — $^{c}$) B1 तु चा° (for तत्रा°). K4 D1. 2 राजन्; S (except T1 M1) तेन (for तस्य). — $^{d}$) T1 भविता; T2 G M2 लभते; M1 भवते (for वर्धते). K4 B1 D1–3 भवतीत्य(D3 °हा)नुत्तमः.

**53** Ś1 K4 D3 om. 53$^{ef}$. K1. 2 B2–4 D (except D3) read 53$^{ef}$ after 52$^{ab}$. — $^{e}$) D4. 6 आप्नुयात् (for प्राप्नु°). K1 D (D3 om.) स (for च).

**54** $^{b}$) Ś1 B Dc Dn D4. 6 T2 G3 स्त्रिया वा; K2 स्त्रियं वा. K3 पुरुषोपि वा; Dc1 Dn °षेण वा; D5 °षेपि वा. — $^{d}$) Ś1 सर्वमेतत्; S तदशेषं (for सर्वमेव). D1. 2 विनश्यति. B1 D3 तत्सर्वं संप्रणश्यति.

**55** $^{c}$) Ś1 K1 S (except T2 G3 M1) पुष्करो (for °रं).

**56** $^{a}$) Ś1 K4 D1. 2 प्रोष्य; K1 प्रोक्ष्य; B Dn D4. 6 उष्ट्वा (B1 व्युष्य) (for उष्य); cf. v.l. 59. Ś1 M1 रात्राणि (for वर्षाणि). K2 Dc D5 उषित्वा दश वर्षाणि; D3 वसते दश रात्राणि. — $^{c}$) Cn ऋतून्; Cnp क्रतून् (as in text). — $^{d}$) Ś1 K2 Dn D5 S (except M1) स (for च).

**57** $^{b}$) K4 उपाचरेत्; D4. 6 उपाश्नुते (for उपासते).

क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ॥ ५६
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ।
कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ५७
दुष्करं पुष्करं गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ५८
उष्य द्वादशरात्रं तु नियतो नियताशनः ।
प्रदक्षिणमुपावृत्तो जम्बूमार्गं समाविशेत् ॥ ५९
जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ६०
तत्रोष्य रजनीः पञ्च षष्ठकालक्षमी नरः ।
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् ॥ ६१
जम्बूमार्गादुपावृत्तो गच्छेत्तण्डुलिकाश्रमम् ।
न दुर्गतिमवाप्नोति स्वर्गलोके च पूज्यते ॥ ६२
अगस्त्यसर आसाद्य पितृदेवार्चने रतः ।
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ६३
शाकवृत्तिः फलैर्वापि कौमारं विन्दते पदम् ।
कण्वाश्रमं समासाद्य श्रीजुष्टं लोकपूजितम् ॥ ६४
धर्मारण्यं हि तत्पुण्यमाद्यं च भरतर्षभ ।
यत्र प्रविष्टमात्रो वै पापेभ्यो विप्रमुच्यते ॥ ६५
अर्चयित्वा पितॄन्देवान्नियतो नियताशनः ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ ६६
प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ॥ ६७
महाकालं ततो गच्छेन्नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ६८
ततो गच्छेत धर्मज्ञ पुण्यस्थानमुमापतेः ।

C. 3. 4091
B. 3. 82. 50
K. 3. 80. 51

— After 57, Dn ins.:

381* त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च ।
पुष्कराण्यादिसिद्धानि न विद्मस्तत्र कारणम् ।

[Line 1 occurs (with v.l.) as 3. 125. $15^{ab}$. ❀ Cn: अत्र पुष्करस्तुतिप्रस्तावे विषमश्लोकव्याख्यायां त्रीणि शृङ्गाणि..इति श्लोकः पठितो व्याख्यातश्च । इदानीं मन्दबुद्धिभिर्दुर्व्याख्येयतया परित्यक्त इति न पुस्तकान्तरेषु दृश्यते । अत्र प्राचां व्याख्या । श्रयतेः शृणातेर्वा शृङ्गाणि मुमुक्षुभिराश्रयणीयानि पापहिंसकानि वा... । ❀]

**58** a) Ś1 Dn2 D1. 2 T2 G1–3 पुष्करं (for दुष्करं). Ś1 K2 B1. 4 Dn2 D1–3. 5 G1 M2 पुष्करे (for पुष्करं). — b) B2 transp. दुष्करं and पुष्करे. Ś1 D1 T2 G3 पुष्करं (for दुष्करं). Ś1 K1 पुष्करं (for पुष्करे).

**59** a) Ś1 तत्र; K1 यद्वा; B D4 उष्ट्वा (B1 व्युष्य); Dc तस्माद् (for उष्य); cf. v.l. 56. Ś1 K1 B1 वर्षाणि; K2 -रात्रिं तु; B4 Dc रात्राणि (for -रात्रं तु). — b) Ś1 नियतात्मनः; K1 °त्मकः. — c) Ś1 D4. 6 उपावृत्तं; K2. 4 Dc Dn D1. 3. 5 उपावृत्त्य. — d) K1. 2 T1 G1 M जंबुमार्गं; D3 (*sup. lin.* as in text) जंबूमार्गात्. B1. 2 उपाविशेत्; D3 (m as in text) उपाश्नुते.

**60** a) K1 G1. 2 M जंबुमार्गं; Dn3 जांबू°. Ś1 समाश्रित्य; B1 उपाविश्य; S समासाद्य. — b) B2–4 Dc D4. 6 पितृदेवर्षिपूजितं. — d) G2 M2 स (for च). K (K3 missing) Dn D1. 3. 4. 5 सर्वकामसमन्वितः (Ś1 D1. 2 °तं).

**61** b) Ś1 K1 पूतात्मा भवते नरः; K2 Dn D5 पू(K2 भू)-तात्मा जायते नरः; K4 D1–3 पूतात्मा मा(D1. 2 म)नवो भवेत्. — G4 om. (hapl.) $61^{d}$–$62^{c}$. — d) Ś1 आप्नोति; B D2. 6 चाप्नोति (B1 गच्छति) (for प्राप्नोति). B2–4 Dc D2. 6 [अ]नुत्तमां (for चोत्तमाम्).

**62** K1 om. 62; G4 om. $62^{abc}$ (cf. v.l. 61). — a) T1 G1. 2 M2 जंबुमार्गाद्. K2 B2. 4 Dn D5 उपावृत्य. — b) K2. 4 D (except Dc) तंदुलिका°; B1 तुंडलिका°; T2 G2. 3 स्थंडिलिका°. D5 यो गच्छेत्तिंदुकाश्रमं. — c) M1 तत्रास्य क्षीयते पापं. — d) Ś1 K4 ब्रह्म(K4 स्वर्ग)लोकेषु पूज्यते; K2 Dc Dn D5 G4 ब्रह्मलोकं च गच्छति; T ब्राह्मलोके च पूज्यते; G1 (by corr.) विष्णुलोकं च गच्छति.

**63** a) K2 Dn1. n3 D5 T2 G3. 4 आगस्त्यं सर; B1. 4 आगस्त्यसर; Dc Dn2 अ(Dn2 आ)गस्त्यतीर्थम्. — $63^{b}=48^{b}$.

**64** b) Ś1 K1. 4 Dn2 G1 फलं; D3 यदि (for पदम्). — c) K2 Dn D5 ततो गच्छेत्; D1. 2 समाश्रित्य (for °साद्य). — d) S लोकविश्रुतं.

**65** b) T1 हि (for च). K4 D1. 2 आद्यं भारतसत्तम; Dc D3 आसाद्य पुरुष(D3 भरत)र्षभ. — c) D1 B3 [ऽ]सौ; D2 T1 [ऽ]पि (for वै). — d) K2 Dn D5 सर्वपापैः प्रमुच्यते.

**66** a) K2 पितृ- (for पितॄन्). — Ś1 om. (hapl.) $66^{c}$–$68^{b}$. — c) G2 °समृद्धः स्याद्.

**69** a) N (except Dc D4. 6; K3 om.) धर्मज्ञः (for °ज्ञ). — b) Ś1 K1. 4 Dc D1. 2 स्थाणुतीर्थम्; K2 Dn D5 स्थाणोस्तीर्थम्; B1–3 ख्यातं तीर्थम्; D3 ख्यातस्तीर्थम्; D4. 6 स्थानं तीर्थम्; G2–4 M पुण्यं स्थानम्. B4 (corrupt) स्थाणोस्पूण्यक्षपापतेः. — c) Ś1 K1 D1. 2 रुद्र° (for भद्र°).

C. 3. 4092
B. 3. 82. 50
K. 3. 80. 51

नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ ६९
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥ ७०
नर्मदामथ चासाद्य नदीं त्रैलोक्यविश्रुताम् ।
तर्पयित्वा पितृन्देवानग्निष्टोमफलं लभेत् ॥ ७१
दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ।
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ ७२
चर्मण्वतीं समासाद्य नियतो नियताशनः ।
रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत् ॥ ७३
ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ७४
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ७५
पिङ्गातीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः ।
कपिलानां नरव्याघ्र शतस्य फलमश्नुते ॥ ७६
ततो गच्छेत धर्मज्ञ प्रभासं लोकविश्रुतम् ।
यत्र संनिहितो नित्यं स्वयमेव हुताशनः ।
देवतानां मुखं वीर अनलोऽनिलसारथिः ॥ ७७
तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ७८
ततो गत्वा सरस्वत्याः सागरस्य च संगमे ।
गोसहस्रफलं प्राप्य स्वर्गलोके महीयते ।
दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ ॥ ७९
त्रिरात्रमुषितस्तत्र तर्पयेत्पितृदेवताः ।

---

**70** $^{a}$) B2–4 D4. 6 तु (for च). — $^{c}$) K1 °प्रसादेन. — $^{d}$) Ś1 K (K3 missing) Dc Dn D1. 2. 5 स (K1. 2 Dn D1. 5 च) विंदति (for अवाप्नुयात्). — After 70, K2 B D (except D1. 2. 5) S ins.:

382* समृद्धमसपत्नं च श्रिया युक्तं नरोत्तम ।

[ D3 समृद्धः सर्वरत्नी च. D3 श्रिया युक्तो. K2 D4 नरोत्तमं; Dn नरोत्तमः; M1 नराधिप. ]

— S cont.:

383* राजश्रैवाधिपत्यं हि तत्र गत्वा समाप्नुयात् ।

**71** $^{a}$) M1 संप्राप्य (for चासाद्य). K2 B1 D3. 5 नर्मदामथमासाद्य (sic); B2–4 Dn D4. 6 T2 G3 नर्मदां तु (Dn स) समा°; D1. 2 नर्मदापथमा°.

**73** B1 om. 73; T1 om. 73, with $72^{cd}$. — $^{a}$) G1 M चर्मिला(G1 चर्मस्था)मथ संप्राप्य. — $^{b}$) D3 नदीं त्रैलोक्यविश्रुतां (= $71^{b}$). — $^{c}$) Ś1 K1. 4 B2 Dn D2 M °ज्ञातं; Dc1 D1 T2 G1. 3. 4 °ज्ञाता; G2 °ज्ञानात्. — $^{d}$) B4 त्वग्नि°; D3 ह्यग्नि° (for अग्नि°).

**74** B1 T2 G3 om. (hapl.) 74–75. — $^{a}$) K4 D1. 2 धर्मज्ञो; D4 °ज्ञं; S (T2 G3 om.) राजेंद्र (for धर्मज्ञ). — $^{c}$) D4 M पृथिव्याः (for °व्यां).

**75** B1 T2 G3 om. 75 (cf. v.l. 74). — $^{a}$) Ś1 K1 आश्रमं; M1 आश्रमे. Ś1 Dn1 D4. 6 वशिष्ठस्य. — $^{b}$) Ś1 K1 विश्रुतं.

**76** $^{a}$) Ś1 गंगातीरम्; K1 B2 गंगातीर्थम्; K4 B4 Dn2. n3 D1. 3 T1 G1 पिंग°; D3. 4 M1 पिंगतीर्थं; D5 पिंडतीर्थम्; T2 G3 कपि°. — $^{b}$) B (except B1) Dc D3. 4. 6 M1 नराधिप (Dc °पः); T G M2 समाहितः (for जितेन्द्रियः). — $^{c}$) K2. 4 Dc Dn D5 S (except M1) °श्रेष्ठ (for °व्याघ्र). — After 76, D3 ins.:

384* ततो गच्छेत तद्वृत्तं तीर्थं देवनिषेवितम् ।
स्नात्वा तत्र नरो भाति विमलश्चन्द्रमा यथा ।

(Cf. $98^{cd}$). Thereafter D3 reads 99–115, followed by 77–98 (om. $77^{d}$–$79^{e}$).

**77** $^{a}$) Ś1 Dn D5 S राजेंद्र; K4 D3 धर्मज्ञः (for °ज्ञ). — $^{b}$) Ś1 K1 Dn D5 तीर्थमुत्तमं (for लोक°). — After $77^{ab}$, S ins.:

385* तीर्थं देवगणैः पूज्यमृषिभिश्च निषेवितम् ।

— $^{c}$) K2 Dn D5 तत्र; Dc अत्र (for यत्र). — D3 om. (hapl.) $77^{d}$–$79^{e}$. — $^{e}$) Ś1 K1 चैव; G1 M1 राजन् (for वीर). — $^{f}$) Ś1 K1. 4 Dc Dn D1 ज्वलनो; D2 ज्वलने (for अनलो).

**78** D3 om. 78 (cf. v.l. 77). — $^{a}$) K2. 4 D (D3 om.) तीर्थे नरः (for तीर्थवरे).

**79** D3 om. $79^{abcde}$ (cf. v.l. 77). — $^{b}$) Ś1 संगमः; B2. 3 Dc D4. 6 G1 M1 °मं (for °मे). — $^{c}$) Ś1 K2. 4 Dc Dn तस्य; K1 लब्ध्वा; D1. 2 चैव (for प्राप्य). — $^{d}$) Ś1 K1. 2 D (except D4. 6; D3 om.) स्वर्गलोकं. Ś1 स गच्छति; K1 Dc D5 च गच्छति; K2 Dn D1. 2 च विंदति (for मही°). — $^{ef}$) Ś1 K (K3 missing) D (except D3. 4. 6) प्रभया दीप्यते नित्यमग्निवद्भरतर्षभ. — After 79, K2 B D (except D3. 4. 6) read $85^{cd}$; while S ins.:

386* तत्र स्नात्वा च राजेन्द्र विमलार्कसमद्युतिः ।

प्रभासते यथा सोमो अश्वमेधं च विन्दति ॥ ८०
वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ।
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ।
वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ८१
ततो द्वारवतीं गच्छेन्नियतो नियताशनः ।
पिण्डारके नरः स्नात्वा लभेद्बहु सुवर्णकम् ॥ ८२
तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः ।
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिंदम ॥ ८३
त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ।
महादेवस्य सांनिध्यं तत्रैव भरतर्षभ ॥ ८४
सागरस्य च सिन्धोश्च संगमं प्राप्य भारत ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ ८५
तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं दीप्यमानः स्वतेजसा ॥ ८६
शङ्कुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ८७
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ।
दमीति नाम्ना विख्यातं सर्वपापप्रमोचनम् ॥ ८८
यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ।
तत्र स्नात्वार्चयित्वा च रुद्रं देवगणैर्वृतम् ।
जन्मप्रभृति पापानि कृतानि नुदते नरः ॥ ८९
दमी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ।
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ९०
जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन्हत्वा दैवतकण्टकान् ॥ ९१

C. 3. 5017
B. 3. 82. 75
K. 3. 80. 76

---

[M विराजेत (for च राजेन्द्र).]

**80** B2. 3 om. 80–85. — a) K2 B1. 4 Dc Dn D5 स्नातस्; K4 स्नात्वा (for तत्र). — b) Dc D1. 2 S तर्पयन्. — c) Ś1 प्रभासति; B4 D4. 6 विराजति. — d) Ś1 K2. 4 B4 Dc Dn D5 सोश्वमेधं; K1 हयमेधं; B1 D3 (*sup. lin.* as in text). 4. 6 S वाजि°. D1. 2 सोश्वमेधफलं लभेत्.

**83** B2. 3 om. 83 (cf. v.l. 80). — T1 अस्मिंस्तीर्थे. D1. 2. 4. 6 T1 G1 M2 महाराज. — b) G2. 4 पुण्यलक्षणलक्षितः. — d) Ś1 K1 इवोत्तमं (for अरिंदम).

**84** B2. 3 om. 84 (cf. v.l. 80). — d) Ś1 K2 B1. 4 Dn D5 तत्र वै (for तत्रैव). Ś1 K1 कुरुसत्तम; K2 Dn D5 पुरुषर्षभ.

**85** B2. 3 om. 85 (cf. v.l. 80). — b) K4 D1. 2 संगमे. K1 प्रेत्य भारत; K4 D1–3 भरतर्षभ; T2 G2–4 प्राप्य दुर्लभं.

**86** b) K4 लोकानाप्नोति वारुणान्; D1. 2 ऋषीन्प्रयतमानसः. — K4 om. 86cd. — d) K2 B1 Dn D5 G2 दीप्यमानं.

**87** b) T1 विशां पते (for युधि°). — 87cd=3. 80. 48cd; 83. 4cd. — c) K1. 2 B1 Dn D5 S (except M1) अश्वमेधाद्.

**88** a) K4 D1. 2 उपावृत्तो. — c) K4 D1. 2 S °कुल° (for °वर°). — d) T2 G सर्वदेवैरभिष्टुतं. — e) K1. 4 B1 Dn2 D1 G4 दमी; B2–4 Dc D3. 4. 6 द्रिमी; D2 M2 द्रमी; D5 दशी; T1 M1 द्रुमी; T2 G2. 3 शमी; G1 रमी (for दमी); cf. v.l. 90. M1 चात्र (for नाम्ना). Ś1 K1 प्रथितं; D3 विज्ञा° (for विख्या°). — f) Ś1 K1. 2 Dn D5 °प्रणाशनं; K4 D1. 2 °विनाशनं.

**89** a) K2 Dn D5 तत्र (for यत्र). — b) K4 B D1–3 M1 महेश्वरमुपासते. — c) K2 Dn D5 च पीत्वा च; B1 चार्चयित्वा (for [अ]र्चयित्वा च). B3 तु (for च). — e) Ś1 K1. 2 Dn D1. 2. 5 यत्पापं (for पापानि). — f) Ś1 K1. 2. 4 Dn D1. 2 तत्स्नातस्य प्रणश्यति; B1 कृतानि प्र[णु]दन्नर; B3 कृत्वा निर्दहते नरः; Dc कृत्वा प्रणुदते नरः; D3 कृतानि प्रणुदेन्नरः.

**90** a) K1. 4 B1 Dn2 D1 दमी; B Dc D3. 4. 6 द्रिमी (B1 त्रिमी); D5 दशी; T1 M2 द्रमी; T2 G शमी (G1 रमी); M1 द्रुमी (for दमी); cf. v.l. 88. — b) Ś1 K1. 2. 4 Dn D2. 5. 6 M2 अभिष्टुतः; B1 अधिष्ठिता; Dc1 अभिप्लुतः; Dc2 °प्लुता. — c) B2–4 Dc1 D4. 6 M1 °श्रेष्ठ (for °व्याघ्र).

**91** a) Ś1 K1 चिता; K2 Dn D5 T2 G2–4 गत्वा; K4 (m as in text) इष्ट्वा; D1. 2 इष्ट्वा; D6 (m as in text) स्नात्वा (for जित्वा). K4 (m as in text) B2–4 Dc D4. 6 तत्र (for यत्र). Ś1 K1 °यज्ञा; K4 D1. 2 °यज्ञैर् (K4m °यज्ञे) (for °प्राज्ञ). — c) Ś1 K1. 4 D1–3 तत्र (for पुरा). — d) K2. 4 Dn D1. 2. 5 हत्वा दैतेयदानवान्.

**92** b) B2–4 D4. 6 वसुधाराम्. — c) Ś1 तस्यैव; K1 तस्य वै; B1 D3 राजेंद्र; D1 तस्यां तु; D4 M2 तस्या हि (for

C. 3. 5018
B. 3. 82. 76
K. 3. 80. 77

ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम् ।
गमनादेव तस्यां हि हयमेधमवाप्नुयात् ॥ ९२
स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा तु मानवः ।
तर्प्य देवान्पितृंश्चैव विष्णुलोके महीयते ॥ ९३
तीर्थं चात्र परं पुण्यं वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च वसूनां संमतो भवेत् ॥ ९४
सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहु सुवर्णकम् ॥ ९५
ब्रह्मतुङ्गं समासाद्य शुचिः प्रयतमानसः ।
ब्रह्मलोकमवाप्नोति सुकृती विरजा नरः ॥ ९६
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं शक्रलोकमवाप्नुयात् ॥ ९७
रेणुकायाश्च तत्रैव तीर्थं देवनिषेवितम् ।
तत्र स्नात्वा भवेद्विप्रो विमलश्चन्द्रमा यथा ॥ ९८
अथ पञ्चनदं गत्वा नियतो नियताशनः ।
पञ्च यज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ॥ ९९
ततो गच्छेत धर्मज्ञ भीमायाः स्थानमुत्तमम् ।
तत्र स्नात्वा तु योन्यां वै नरो भरतसत्तम ॥ १००
देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलविग्रहः ।
गवां शतसहस्रस्य फलं चैवाप्नुयान्महत् ॥ १०१
गिरिमुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ १०२
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् ।
अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः ॥ १०३
तत्र स्नात्वा नरश्रेष्ठ वाजपेयमवाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ १०४

---

तस्यां हि). — d) $Ś_{1}$ $K_{2.4}$ Dn $D_{1.2.5}$ °मेधफलं लभेत्.

**93** $D_{4}$ om. (hapl.) from कुरु° up to स्नात्वा (in $94^{c}$). — a) $K_{4}$ $D_{1.2}$ $T_{1}$ $G_{1}$ कुरुकुलश्रेष्ठ. $T_{2}$ $G_{2-4}$ तत्र स्नात्वा नरश्रेष्ठ. — b) $K_{1}$ तु भारत; $K_{2}$ Dn $D_{5}$ समाहितः; Dc च मानवः; $D_{3}$ [अ]नुशोचते. — c) S चापि (for चैव). $K_{1.4}$ B Dc $Dn_{2}$ $D_{1.2.6}$ तर्पयित्वा पितॄन्देवान्; $D_{3}$ संतर्प्य पितृदेवांश्च.

**94** $D_{4}$ om. up to स्नात्वा (cf. v.l. 93). — a) B Dc $D_{6}$ T G चापि (for चात्र). $K_{2}$ $Dn_{1.n2}$ $D_{3.5}$ सरः; $Dn_{3}$ $G_{1}$ वरं; $D_{1.2}$ पुनः (for परं). B Dc $D_{6}$ T G तत्र ($B_{1}$ रूपं) (for पुण्यं). — $Ś_{1}$ om. (hapl.) $94^{c}$–$95^{b}$; $K_{4}$ om. $94^{cd}$.

**95** $Ś_{1}$ om. $95^{ab}$ (cf. v.l. 94). — b) $K_{4}$ $B_{1}$ $D_{1-3}$ °विनाशनं.

**96** a) $K_{2}$ Dn $D_{5}$ भद्रतुंगं; $D_{3}$ ब्रह्मदत्तं; $T_{2}$ $G_{2-4}$ ब्रह्मतीर्थं. — b) $Ś_{1}$ K ($K_{3}$ missing) Dn $D_{1.2.5}$ शुचिः ($Ś_{1}$ शुचि-) शीलसमन्वितः. — d) $Ś_{1}$ K ($K_{3}$ missing) $B_{2.3}$ Dn $D_{1.2.5}$ गतिं च परमां व्रजेत्.

**97** a) S (except $M_{1}$) कुमारकाणां. — b) $T_{1}$ विधि°; $G_{4}$ शक्र° (for सिद्ध°). — c) $B_{2-4}$ Dc $D_{3.4.6}$ नरश्रेष्ठ; $M_{1}$ नरः शीघ्रं for (नरः क्षिप्रं). — d) $Ś_{1}$ ब्रह्मलोकम्; $K_{1.2.4}$ Dn $D_{1.2.5}$ $M_{1}$ स्वर्गलोकम्. T G $M_{2}$ वासवं लोकमाप्नुयात्.

**98** b) $Ś_{1}$ $K_{1.2}$ Dn $D_{5}$ सिद्ध° (for देव°). S तीर्थं देवर्षिसेवितं. — $Ś_{1}$ om. (hapl.) $98^{c}$–$100^{b}$. — c) $B_{1.3.4}$ Dc $D_{4.6}$ transp. तत्र and स्नात्वा. $K_{1.4}$ $D_{1.2}$ मर्त्यो (for विप्रो). $B_{1}$ $D_{3}$ स्नात्वा तत्र नरो भाति. — d) $K_{2}$ Dn $D_{5}$ निर्मल° (for विमल°). $D_{4.6}$ इव (for यथा).

**99** $D_{3}$ reads 99–115 after 384*. $Ś_{1}$ om. 99 (cf. v.l. 98). — d) $G_{1.2.4}$ क्रमतो (for क्रमशो). $B_{3}$ येत्र; Dc $D_{3}$ ये प्र-; $T_{1}$ ये तु.

**100** $Ś_{1}$ om. $100^{ab}$ (cf. v.l. 98). — a) $K_{2.4}$ Dn $D_{5}$ $G_{1}$ राजेंद्र (for धर्मज्ञ). — $B_{3}$ om. (hapl.) $100^{b}$–$103^{a}$. — c) T G न (for तु). — d) $D_{3}$ ततो; T G भवेद् (for नरो). $B_{1}$ $D_{3}$ नृपतिसत्तम; $D_{2}$ भारत°.

**101** $B_{3}$ om. 101 (cf. v.l. 100). — a) $D_{4.6}$ राजा (for राजन्). — b) $K_{4}$ $D_{1.2}$ S तप्तकुंडलभूषणः ($G_{4}$ °कांचनभूषणं; $M_{1}$ °कांचनकुंडलः). — d) $M_{1}$ नरः (for महत्). $Ś_{1}$ K ($K_{3}$ missing) $B_{1}$ Dn $D_{1-3.5}$ फलं प्रा($K_{1}$ $Dn_{3}$ $D_{3}$ फलमा)प्नोति मानवः.

**102** $B_{3}$ om. 102 (cf. v.l. 100). — a) $Ś_{1}$ $K_{1.2}$ Dn $D_{2.5}$ श्रीकुंजं तु ($D_{2}$ च); $K_{4}$ श्रीकुंभं तु; $B_{1.2.4}$ Dc $D_{3.4.6}$ $M_{1}$ गिरिकुंजं; Dn $D_{1}$ श्रीकुंडं तु ($D_{1}$ च). — $Ś_{1}$ $T_{1}$ om. (hapl.) $102^{c}$–$105^{b}$. — c) $M_{2}$ नमस्कृत्वा.

**104** $Ś_{1}$ $T_{1}$ om. 104 (cf. v.l. 102). — a) $K_{1}$ नरो नूनं; $K_{2}$ $B_{1.3.4}$ Dc Dn $D_{3-6}$ नरः क्षिप्रं; $K_{4}$ $D_{1.2}$ नरो राजन्; $B_{2}$ M नरव्याघ्र. — b) $K_{2.4}$ $B_{1.3.4}$ D (except $D_{4.6}$) वासवं लोकमाप्नुयात्; $T_{2}$ $G_{3.4}$ सौवर्णकमवा°; $G_{2}$ वाजपेयफलं लभेत्. — $K_{1}$ $B_{1.4}$ om. $104^{cd}$. — c)

ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायां तु संध्यायामुपस्पृश्य यथाविधि ॥ १०५
चरुं नरेन्द्र सप्तार्चेर्यथाशक्ति निवेदयेत् ।
पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥ १०६
गवां शतसहस्रेण राजसूयशतेन च ।
अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषश्चरुः ॥ १०७
ततो निवृत्तो राजेन्द्र वस्त्रापदमथाविशेत् ।
अभिगम्य महादेवमश्वमेधफलं लभेत् ॥ १०८
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः ।
एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ १०९
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम् ।
प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ ११०
त्रिशूलपाणेः स्थानं च त्रिषु लोकेषु विश्रुतम् ।
देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् ॥ १११
यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ ११२
कामाख्यं तत्र रुद्रस्य तीर्थं देवर्षिसेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं सिद्धिमाप्नोति भारत ॥ ११३

C. 3. 5047
B. 3. 82. 105
K. 3. 80. 106

---

B2 °विमुक्तात्मा. — d) K2. 4 B Dc Dn D3. 5 G1 गच्छेत; D1 लभते; D2 लभेत; G4 भजेच्च. D4. 6 परमिकां (for च परमां). — After 104, K1. 2 B Dc Dn D4. 6 ins.:

387* वितस्तां च समासाद्य संतर्प्य पितृदेवताः ।
नरः फलमवाप्नोति वाजपेयस्य भारत ।
काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च ।
वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम् ।

Thereafter the same MSS. *repeat* (with v.l.) 104!

**105** Ś1 T1 om. 105[ab] (cf. v.l. 102). — a) D3 गच्छेच्च (for गच्छेत). K1 मडवां; K2 D6 मलवां; K4 Dn वडवां; B1 मनलां; B2 वरवां; B3 Dc मनवां; D1. 2 मांडव्यां; D3 मचलं (m वटपं); D4 मवलं; D5 वडवं (for मलदां). — b) D1-3 विश्रुतं. — c) B3 D4. 6 T G3 च (for तु).

**106** a) Ś1 K1 सप्तारुचं (K1 °चंकं) चरुं राजन्; K2. 4 B D चरुं सप्तार्चिषे (K4 D1. 2 °सरुचे) राजन्. — b) K1 G4 °विधि (for °शक्ति). — After 106, K1. 4 Dn D1. 2. 3 (marg. *sec. m.*). 6 ins.:

388* ऋषयः पितरो देवा गन्धर्वाप्सरसां गणाः ।
गुह्यकाः किंनरा यक्षाः सिद्धा विद्याधरा नराः ।
राक्षसा दितिजा रुद्रा ब्रह्मा च मनुजाधिप ।
नियतः परमां दीक्षामास्थायाब्दसहस्रिकीम् ।
विष्णोः प्रसादनं कुर्वंश्चरुं च श्रपयंस्तथा । [5]
सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवम् ।
ददावष्टगुणैश्वर्यं तेषां तुष्टस्तु केशवः ।
यथाभिलषितानन्यान्कामान्दत्त्वा महीपते ।
तत्रैवान्तर्दधे देवो विद्युदभ्रेषु वै यथा ।
नाम्ना सप्तचरुं तेन ख्यातं लोकेषु भारत । [10]

[(L. 2) K2 नृपाः; K4 D1. 2 तथा (for नराः). — (L. 3) D3 नागा (for रुद्रा). — (L. 4) K1 D2 नियताः. K2. 4 Dn °सहस्रकीं; D1 °स्रकां. — (L. 5) D1. 2 विष्णोः प्रसादं कुर्वतः (for the prior half). Dn तदा (for तथा). D1. 2 चरुमश्रपयंस्ततः; D3 चरुं संश्रपयंस्तथा. — (L. 6) D1. 2 ऋग्भिस्तुष्टुवुरच्युतं (for the posterior half). — (L. 7) Om. in K1. D1. 2 ततस् (for तेषां). — (L. 10) K2 Dn2. n3 D6 विश्रुतं (for भारत).]

**107** B3 om. (hapl.) 107[bc]. — d) M समः (for श्रेयान्). Ś1 K4 D1. 2 सप्तरुचे चरुः; K1. 2 सप्तरुचश्चरुः; Dn D3 सप्तार्चिषे चरुः (D3 वचः); D3 (marg. *sec. m.*) सप्तऋचस्तथा.

**108** B1 om. 108–109; T1 om. (hapl.) 108[b]–110[a]. — b) K1 B2 रुद्रापदम्; K2 B4 Dc Dn2. n3 D4. 6 रु(B4 Dc रौ)द्रं पदम्; K4 श्रेयापथम्; B3 रुद्रात्पदम्; D3. 5 वस्त्रापथम्; T2 G2-4 भद्रापादम्; G1 भद्रापथम्; M भद्रापदम्. D1 तत्रापि नियतो वसेत्. — c) Ś1 अभिगत्वा; K2. 4 Dn D1. 2. 5 अर्चयित्वा (for अभिगम्य).

**109** Ś1 B1 T1 om. 109 (for B1 T1 cf. v.l. 108). — c) B4 Dc त्रिरात्रोपोषितो. — d) K1 गोसहस्रफलं; G4 अश्वमेध°.

**110** T1 om. 110[a] (cf. v.l. 108). — a) B1 T2 G2-4 ततो (for अथ). B1 निवृत्तो (for गच्छेत). — Ś1 om. (hapl.) 110[c]–111[b]. — c) D1m अभयं तत्र; D2 अभयं यत्र (for प्रसूतिर्यत्र).

**111** Ś1 om. 111[ab] (cf. v.l. 110). — a) K4 D1m. 2. 3 तत्स्थानं; B1 तु स्थानं (for स्थानं च). — b) B2. 4 Dc D4. 6 यत्र (for त्रिषु). — d) B2-4 Dc D4. 6 अभ्यर्च्य च; D3 T G M2 त(M2 अ)थाभ्यर्च्य (for सम°).

**113** a) K1 B1. 3 D4. 6 तस्य (for तत्र). — b) Ś1 K (K3 missing) Dn D1. 2. 5 M1 देवनिषेवितं; B Dc D4. 6 देवर्षिसंमतं; D3 (marg. *sec. m.*) सिद्धनिषेवितं. — d) K2. 4 Dn D1. 2. 5 प्राप्नोति (for आ°).

C. 3. 5048
B. 3. 82. 106
K. 3. 80. 107

यजनं याजनं गत्वा तथैव ब्रह्मवालुकाम् ।
पुष्पन्यास उपस्पृश्य न शोचेन्मरणं ततः ॥ ११४
अर्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतावद्देविकामाहुः पुण्यां देवर्षिसेविताम् ॥ ११५
ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम् ।
यत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ।
दीर्घसत्रमुपासन्ते दक्षिणाभिर्यतव्रताः ॥ ११६
गमनादेव राजेन्द्र दीर्घसत्रमरिंदम ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ११७
ततो विनशनं गच्छेन्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्र मरुपृष्ठे सरस्वती ।
चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते ॥ ११८
स्नात्वा च चमसोद्भेदे अग्निष्टोमफलं लभेत् ।
शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत् ।
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् ॥ ११९
शशयानं च राजेन्द्र तीर्थमासाद्य दुर्लभम् ।
शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत ॥ १२०
सरस्वत्यां महाराज अनु संवत्सरं हि ते ।
स्नायन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं सदा ॥ १२१
तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्सदा ।
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ ॥ १२२
कुमारकोटिमासाद्य नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
गवामयमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२३

---

**114** a) K2 Dn D5 चैव (for गत्वा). — b) K4 B1. 3 D1. 2 तत्रैव (for तथैव). Ś1 K1. 4 B3 D (except Dc D1) °वालुकं; K2 °वाकुलं. — c) K2 पुष्पभिश्र; K4 B1 D1. 2 T2 G3 पुष्पन्यासम्; Dn D5 पुष्पांभश्च; D3 पुष्पांजन; T1 G1 M पुष्पंजय (M2 °यम्); G2. 4 पुष्पजायाम् (for °न्यास). — d) T2 G (except G1) मरणे (for °णं). K2 Dn D5 गतः; K4 D6 नरः (for ततः).

**115** G4 om. $115^{a}$–$116^{d}$. — a) K1 D3 M °विस्तारं; K4 Dn D1. 2. 3 (before corr.). 5 °विस्तारा. — b) K4 Dn D1. 2. 5 आयता; M आयतं. — c) T G (G4 om.) एतां हि (for एतावद्). Ś1 K1 एतावती देविकां तु (K1 च); K2 Dn D2. 3. 5 M एतावती (D2 °ता) देविका तु; K4 D1 एतावती वेदिका तु. — d) K4 D (except Dc D6) पुण्या °सेविता; B2. 3 पुण्यां °संमितां; G2 पुण्यां राजर्षिसेवितां; M1 पुण्या राजनिषेविता.

**116** G4 om. $116^{abcd}$ (cf. v.l. 115); D3 om. $116^{b}$–$118^{b}$. — b) T G (G4 om.) यथाश्रुतं. — c) K2 Dn D5 तत्र (for यत्र). — e) T2 G2. 3 उपासंत; G4 उपागम्य (for उपासन्ते). K4 उपासते दीर्घसत्रं. — f) Ś1 K1. 4 D1. 2. 5 दक्षिणा(K1 °क्षणे; K4 D1. 2 °क्षिण)नियतव्रताः; K2 B Dc Dn D4. 6 दीक्षिता नियत°.

**117** D3 om. 117 (cf. v.l. 116). — d) G1. 2 आप्नोति (for प्रा°). Ś1 G1. 4 भारत (for मानवः).

**118** D3 om. $118^{ab}$ (cf. v.l. 116). — d) Ś1 K1. 2 B Dc Dn D3–6 T2 G3 M2 मेरु° (for मरु°). — e) K2 D5 क्रमशः (for चमसे). K (K3 missing) Dn D5 [अ]थ; Dc स (for च). S चमसो° (for च शिवो°). — After 118, S (except M2) reads 122.

**119** a) B D (except D1. 2) तु (for च). — b) D3 चाग्निष्टोमफलं (marg. *sec. m.* वाजिपेय°); S गोसहस्र°. — c) T2 G शिलोद्भेदे. — M1 om. (hapl.) $119^{de}$. — d) B1 G1 M2 गोसहस्रमवाप्नुयात्. — G1 om. $119^{ef}$.

**120** a) S शतह्रदं (for शश°). — c) Ś1 D3. 4 °प्रतिच्छन्ना; S शतरूप°.

**121** a) Ś1 K1 B D3. 4. 6 M1 °भाग (for °राज). — b) Ś1 K1 G2 त्वनु; T1 G1 शत-; T2 G3 शतं (for अनु). Ś1 K1 Dc G1 संवत्सरा. K2 Dn D5 च ते; Dc इति; G2 हि मे (for हि ते). — c) Ś1 K1. 4 B3 Dc Dn D1–3. 5 दृश्यंते; K2 दृश्यते; T1 जायंते (for स्नायन्ते). — d) Dc T1 G4 तथा; G1 M तदा (for सदा).

**122** S (except M2) reads 122 after 118. — b) B Dc D3. 4 M2 शिववत् (for शशि°). Ś1 K1. 4 Dc D1. 2. 5 नरः (for सदा).

**123** a) N (except D3; K3 missing) T2 G3. 4 कुमारकोटीम्. — D5 om. $123^{cd}$. — e) Ś1 गनामेयम्; K1 अनामयम्; K4 D3 S गवां मेधम् (for गवामयम्). K2 Dc Dn D1. 2. 4–6 गवामयुत(D2 °यन)माप्नोति.

**124** a) B1 D3 S राजेंद्र (for धर्मज्ञ). — b) Ś1 K4 B D2. 3 रुद्रकोटीं. G1. 2 समास्थितः. — d) Ś1 मुनिकोटीं; K1. 2. 4 B1 D2 मुनिकोटी- (*or* °टि-); B2. 4 ऋषिकोटी-; Dc Dn D5 मुनिकोटिः; D3 मुनिकोट्यः. K2. 4 B1 Dc2 Dn D1. 5 G4 समागता; D2 M2 °हिता; D3 °हितः; D3 (*sup. lin.*)

ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः ।
पुरा यत्र महाराज ऋषिकोटिः समाहिता ।
प्रहर्षेण च संविष्टा देवदर्शनकाङ्क्षया ॥ १२४
अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्नृषयः किल भारत ॥ १२५
ततो योगेश्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् ॥ १२६
सृष्टा कोटिस्तु रुद्राणामृषीणामग्रतः स्थिता ।
मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् ॥ १२७
तेषां तुष्टो महादेव ऋषीणामुग्रतेजसाम् ।
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान् ।
अद्य प्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ॥ १२८
तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२९
ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम् ।
सरस्वत्या महापुण्यमुपासन्ते जनार्दनम् ॥ १३०
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ।
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ॥ १३१
तत्र स्नात्वा नरव्याघ्र विन्देद्बहु सुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥ १३२
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ।
सत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १३३

C. 3. 5070
B. 3. 82. 128
K. 3. 80. 128

इति श्रीमहाभारते आरण्यकपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

T2 G1. 3 °गताः; G2 °गतः. T1 (corrupt) ऋषिकोससमागताः. — e) Ś1 K (K3 missing) B1 Dn D3 हर्षेण महताविष्टा; B2–4 Dc D4. 6 हर्षेण च समाविष्टा; D1. 2 हर्षेण महता तिष्ठे (D2 °ष्ठ)द्; M1 हर्षेण महता युक्ता. — f) K2 Dc Dn रुद्र° (for देव°).

**125** a) T1 अहं पूर्वं समासाद्य. — b) Ś1 K1 प्रेक्षामि (for द्रक्ष्यामि). S (except T1 G1 M2) द्रक्ष्यामीति वृषध्वजं.

**126** K1 om. 126. — a) K2 Dn D5 G4 योगी° (for योगे°).

**127** a) Ś1 सृष्ट्वा; T2 G1. 3 हृष्टा (for सृष्टा). K2 Dn D5 कोटीति; K4 Dc D1. 2 कोटी तु; D4. 6 तु कोटी (for कोटिस्तु). B सृष्टा तु कोटिरुद्राणां (B2 रुद्रकोटीणां). — b) Ś1 K1. 4 T2 G3 स्थिताः (for स्थिता). — c) K2 पूर्वं नरं; G4 पूर्वमयं. Ś1 K1 B3 दृष्टं; D2. 5 दृष्टा (for दृष्टः).

**128** a) K4 D1. 2 एवं (for तेषां). T1 G1 M2 दृष्टो (for तुष्टो). Ś1 K2 Dn D5 महादेवः. — b) Ś1 Dn D5 मुनीनां (for ऋषीणाम्). Ś1 K1. 4 Dn D1. 2. 5 भाविता-त्मनां (cf. 126d). — f) Ś1 धर्मबुद्धिर्; B2 D4. 6 धर्मे बुद्धिर्.

**129** K4 om. (hapl.) 129b–132a; K1 om. 129c–131b.

**130** K1. 4 om. 130 (cf. v.l. 129). — a) Ś1 सरस्वतीं; B1 Dc D2 S °त्यां. Ś1 महापुण्याम्; G1 °राज. — d) B1. 2 उपासते; D3 उपासीत. K2 Dn D1. 2. 5 केशवं समुपासते; M1 जनार्दनमुपासते.

**131** K4 om. 131; K1 om. 131ab (cf. v.l. 129). — b) K2 Dn ऋषयश्च तपोधनाः. — d) B2 D4 चैत्रे (for चैत्र-). Ś1 K1 G2 चैत्रं (Ś1 चैत्र-) शुक्लत्रयोदशीं.

**132** K4 om. 132a (cf. v.l. 129). — b) Ś1 लभेद् (for विन्देद्). — d) D4. 6 शक्रलोकं (for ब्रह्म°). D1. 2 T1 G1 M स गच्छति; T2 G2–4 गमिष्यति. Ś1 K1 ब्रह्मलोके महीयते (K1 °ति).

**133** b) K1 समस्तानि (for समा°). T G समवाप्नोति मानवः. — c) Ś1 K1. 2 Dn D5 T1 M2 तत्रावसानम्; T2 G तत्र च स्नानम्.

Colophon. K3 missing. — *Major parvan:* Ś1 K1 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan:* Dn3 T1 तीर्थयात्रा. Ś1 K1. 2 B Dc Dn1. n2 D1. 2. 4–6 T2 G1–3 (all om. sub-parvan name) mention only पुलस्त्यतीर्थयात्रा; K4 D3, likewise, only पुलस्त्ययात्रा. — *Adhy. no.* (figures, words or both): Dn1. n2 82; Dn3 M2 (before corr.) 83; D1 86; S (M2 after corr.) 81. — *Śloka no.:* Dn1. n2 28; Dn3 29; D1 145.

# 81

☞ 1–127ab is missing in K3 (cf. v.l. 3. 79. 1); the MS. is mostly ignored here up to the end of the lacuna.

**1** c) M1 पापानि (for पापेभ्यो). K1. 2 Dn यत्र मुच्यंते;

# ८१

C. 3. 5071
B. 3. 83. 1
K. 3. 81. 1

पुलस्त्य उवाच ।
ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥ १
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥ २
तत्र मासं वसेद्वीर सरस्वत्यां युधिष्ठिर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ३
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ४
मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ५
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥
ततो मचक्रुकं राजन्द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ७
ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्र संनिहितो हरिः ॥ ८
तत्र स्नात्वार्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ९
ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥
पृथिव्यास्तीर्थमासाद्य गोसहस्रफलं लभेत् ।
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ।
दशाश्वमेधिके स्नात्वा तदेव लभते फलम् ॥ १

---

$M_1$ यत्र नश्यंति (for विप्रमु°). — $^d$) $K_2$ Dn दर्शनात्; $T_1$ तद्गत्वा (for तद्गताः). $K_1$ स्नानमात्रेण सर्वशः; $M_2$ प्रविष्टस्यैव भारत.

**2** $^a$) $D_{1.2}$ $G_1$ °क्षेत्रे. — $^d$) Ś$_1$ $D_1$ $K_{1.2}$ सोपि पापात्; $K_2$ $B_{2.4}$ Dn सर्वपापैः; $K_4$ सर्वपापात्. $B_3$ विमुच्यते. — After 2, $K_4$ Dn $D_{1.2}$ ins.:

389* पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।
[Lines 3–4 = (var.) 175.]

**3** $^a$) Ś$_1$ K ($K_3$ missing) $D_5$ वै सं°; $D_1$ वासं (for मासं). $B_2$ $D_{4.6}$ S (except $T_1$ $G_1$ $M_2$) धीरः (for वीर). — $^b$) $B_2$ जनेश्वर; $D_6$ $M_1$ नराधिप; T G $M_2$ युधां वर (for युधि°). — $D_2$ om. $3^c$–$4^b$. — $^c$) $K_{1.2}$ $D_5$ तत्र (for यत्र). — $^d$) $K_1$ सिद्धा (sic) चारणतापसाः; B $D_{4.6}$ यत्र सिद्धर्षिचारणाः.

**4** $D_2$ om. $4^{ab}$ (cf. v.l. 3). — $^a$) $M_2$ चैव (for यक्षाः). — $^c$) $T_1$ ब्रह्मक्षेत्रे. Ś$_1$ $K_1$ महत्पुण्यम्.

**5** $^a$) = 3. 80. $45^a$. $T_1$ मनागप्यभिकामस्य; $T_2$ $G_3$ मनसा गंतु°; $G_{1.2.4}$ मनसा मुक्ति°. — $^b$) S (except $M_1$) युधां वर (for युधि°). — Ś$_1$ om. $5^c$–$6^b$. — $^d$) Dc S स्वर्गलोकं; $D_{1.2}$ स्वर्गलोके. $D_1$ महीयते; S स गच्छति.

**6** Ś$_1$ om. $6^{ab}$ (cf. v.l. 5). — $^{cd}$) Ś$_1$ K ($K_3$ miss-ing) D (except $D_{3.4.6}$) फलं प्राप्नोति च तदा ($K_1$ नर $D_{1.2}$ तथा) राजसूयाश्वमेधयोः.

**7** $^a$) Ś$_1$ मदाक्रुकं; $K_1$ मदक्रुकं; $K_2$ अक्रुणकं; $K_4$ मच $B_2$ मरुंतकं; $B_4$ मवक्रकं (m अरणकं); Dc $D_4$ मचकुक्रं; मंकु($Dn_1$ °क)णकं; $D_1$ मत्कुणकं; $D_2$ मकुणकं; D बहुकं (sic); $T_2$ $G_3$ स्यमंतकं; $G_2$ चमन्तुकं; $G_4$ तुम $M_1$ मचन्दुकं; $M_2$ चमंदुकं (for मचक्रुकं). — Ś$_1$ K missing) Dn $D_5$ नाम (for राजन्). $D_3$ ततोध्र्वं राजन्.

**8** $^b$) Ś$_1$ $K_1$ T $G_{3.4}$ विष्णुस्थानम्. Ś$_1$ $K_1$ अरिंद

**9** $^a$) Ś$_1$ $D_1$ च गत्वा; $K_{1.2}$ च नत्वा; $K_4$ $D_{2.3}$ [अ गम्य; B Dc $D_{4.6}$ च दृष्ट्वा (for [अ]र्चयित्वा). $K_4$ [अ]थ; $D_2$ [अ]पि (for च). — $^b$) $K_{1.4}$ $D_{1.2}$ त्रैलो (for त्रिलोक°). — $^d$) Dc $D_1$ T G स (for च).

**10** $^a$) $K_4$ $D_{1.2}$ S (except $T_1$ $M_1$) परिप्लवं. — $D_1$ S (except $T_1$ $M_1$) आप्नोति; $D_6$ चा° (for प्रा°). Dn $D_5$ भारत (for मानवः).

**11** $^a$) Ś$_1$ K ($K_3$ missing) Dn $D_{1.2.5}$ $G_2$ पृथि $T_1$ $M_1$ °व्यां (for °व्यास्). $B_{1.4}$ आगम्य (for आसा — $^b$) $G_{1.2.4}$ $M_2$ गोसहस्रमवाप्नुयात्. — $^c$) $T_2$ शल्मलिकं; $G_2$ शललिकं; $M_2$ शाकलिनीं. — $^e$) $K_{2.4}$ $D_{1.2.5}$ दशाश्वमेधे स्नात्वा च; $G_{1.4}$ °मेधके स्नात्वा. —

सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ।
अग्निष्टोममवाप्नोति नागलोकं च विन्दति ॥ १२
ततो गच्छेत धर्मज्ञ द्वारपालं तरन्तुकम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३
ततः पञ्चनदं गत्वा नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ।
अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ १४
ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितोऽभवत् ।
तत्र स्नात्वा नरव्याघ्र अग्निष्टोमफलं लभेत् ॥ १५
ततो जयन्त्या राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ।
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १६
कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह ।
पुण्डरीकमवाप्नोति कृतशौचो भवेन्नरः ॥ १७
ततो मुञ्जवटं नाम महादेवस्य धीमतः ।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ १८
तत्रैव च महाराज यक्षी लोकपरिश्रुता ।
तां चाभिगम्य राजेन्द्र पुण्याँल्लोकानवाप्नुयात् ॥१९
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ २०
संमिते पुष्कराणां च स्नात्वार्च्य पितृदेवताः ।
जामदग्न्येन रामेण आहृते वै महात्मना ।
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति ॥ २१
ततो रामह्रदान्गच्छेत्तीर्थसेवी नराधिप ।
यत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ।
क्षत्रमुत्साद्य वीर्येण ह्रदाः पञ्च निवेशिताः ॥ २२
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ।

C. 3. 5098
B. 3. 83. 28
K. 3. 81. 28

---

$D_n$ $D_5$ तदेव फलमाप्नुयात्.

**12** $D_3$ om. $12^a$–$14^d$. — a) Ś$_1$ सर्पिदर्शीं; $K_2$ $D_n$ $D_{2.5}$ सर्पदेवीं; $B_1$ सर्पिदार्वीं; $B_2$ सार्पदीर्वीं; $B_3$ सर्पिं दर्वीं; $B_4$ सर्पिदेवीं; $D_c$ सर्पिदध्नां; $D_{4.6}$ सर्पग्रीवीं. — d) $T_2$ $G_{3.4}$ स (for च). B $D_{c2}$ $T_2$ $G_3$ गच्छति (for विन्दति).

**13** $D_3$ om. 13 (cf. v.l. 12). $G_1$ damaged. — b) $K_1$ तरंडुकं; $K_4$ $D_4$ तुरंडुकं; $B_{1.2}$ अनंतकं; $B_4$ अवंतकं; $D_c$ वसंतकं; $D_5$ तरंडकं; T $G_{2.3}$ अरुंदुकं; $G_1$ $M_2$ अरंदुकं; $G_4$ अरिंतुदं; $M_1$ अरिंदुकं (for तरन्तुकम्).

**14** $D_3$ om. $14^{abcd}$ (cf. v.l. 12). — a) $T_1$ $G_1$ पंचवटीं; M °वटं. — e) $D_c$ $D_{4.6m}$ आगम्य (for आसाद्य).

**15** $M_2$ om. 15–16. — c) Ś$_1$ $B_4$ $D_c$ $D_{1-3}$ वराह° (for वाराह°). — d) $M_1$ transp. पूर्वं and यत्र. B (except $B_1$) $D_{3.4.6}$ पुरा (for पूर्वं). S विभुः ($G_4$ भुवि) (for ऽभवत्). — e) $D_3$ (*sup. lin.* as in text) यत्र (for तत्र). $K_{2.4}$ $D_c$ $D_n$ $D_5$ नरश्रेष्ठ.

**16** $T_1$ $G_{1.4}$ $M_2$ om. 16 (for $M_2$ cf. v.l. 15). — b) $T_2$ $G_3$ अनुव्रजेत्; $G_2$ समाव्रजेत् (for °विशेत्). — c) $K_4$ स्नात्वा च फलमाप्नोति. — d) $D_1$ भारत (for मानवः). — e) $D_5$ एकाहं च; $T_2$ $G_3$ एकाह्नेन (for एकहंसे).

**17** b) $K_{1.2}$ $D_n$ $D_5$ नराधिप (for कुरू°). — c) S पौंडरीकम्. — d) Ś$_1$ $D_c$ तु सः; K ($K_3$ missing) $D_n$ $D_{1-3}$ $G_1$ च सः; $B_1$ सदा; $B_{2.4}$ $D_{4.6}$ स च (for नरः).

**18** a) $B_{3.4}$ $D_{4.6}$ $T_2$ $G_3$ मुं($B_3$ मं)जावटं. — b) $K_{2.4}$ $D_c$ $D_n$ $D_5$ स्थाणोः स्थानं ($K_4$ $D_c$ by transp. स्थानं स्थाणोर्) महात्मनः. — c) $K_2$ $D_n$ $D_5$ उपोष्य (for तत्रोष्य).

**19** $M_2$ om. 19. — b) $K_1$ $D_3$ यक्षिणीं लोकविश्रुतां; $K_2$ $D_{1.2}$ यक्षिणी °विश्रुता; $B_{2.3}$ $D_{4.6}$ यक्षीं °परिश्रुतां. — c) Ś$_1$ $K_{1.2}$ B $D_n$ $D_{3-6}$ स्नात्वा° (for तां चा°). $D_{1.2}$ तत्र स्नात्वाभिगत्वा च. — d) Ś$_1$ $D_{1-4.6}$ सर्वकामान्; K ($K_3$ missing) B $D_n$ $D_5$ सर्वान्कामान्; $D_c$ सर्वकामम्; $T_1$ पुण्यलोकम्; $M_1$ सर्वलोकान्.

**20** d) Ś$_1$ $K_1$ $D_{1.2}$ $M_1$ नराधिप (for समा°).

**21** a) $B_3$ संमितां; $D_n$ °तं (!) (for °ते). B $D_{3.4.6}$ तु (for च). — d) Ś$_1$ $K_1$ आहृतानि; $K_2$ $D_n$ हृतं तत्सु- (!); $K_4$ आहितानि; $B_3$ $D_6$ $M_1$ आहृतो वै; $D_c$ प्राकृते वै; $D_{1.2}$ आहृतं तन्; $D_5$ कृतं तत्सु-; T $G_{2.4}$ $M_2$ आहृते सु-; $G_1$ (corrupt) हृदाते सु- (for आहृते वै). — f) Ś$_1$ $T_2$ $G_{2-4}$ अश्वमेधफलं लभेत्; $K_1$ °मवाप्नुयात्.

**22** a) B $D_c$ $D_{n3}$ $D_{3.4.6}$ M रामह्रदं; $G_{2.4}$ रक्तह्रदान्. $T_1$ पश्येत्; $G_{2.4}$ पश्यन्. — b) $K_2$ $D_n$ $D_5$ समाहितः (for नरा°); cf. $20^d$. — c) $K_2$ $D_n$ $D_5$ तत्र; $D_3$ अत्र (for यत्र). — e) $K_4$ $D_3$ उत्सार्य; $B_3$ उत्सृज्य; $T_2$ G (except $G_1$) आसाद्य (for उत्साद्य). Ś$_1$ $K_{1.2}$ $B_1$ $D_n$ $D_5$ वीरेण. — f) Ś$_1$ $K_1$ प्रकल्पिताः (for निवे°).

**23** b) T G रुधिरस्येति. $K_2$ $B_3$ $D_n$ $D_5$ विश्रुतं; $T_1$

C. 3. 5098
B. 3. 83. 28
K. 3. 81. 28

पितरस्तर्पिताः सर्वे तथैव च पितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्महीपते ॥ २३
राम राम महाभाग प्रीताः स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो ।
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ॥ २४
एवमुक्तः स राजेन्द्र रामः प्रहरतां वरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् ॥ २५
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपसाप्यायनं पुनः ॥ २६
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततश्च पापान्मुच्येयं युष्माकं तेजसा ह्यहम् ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ २७
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ॥ २८
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ २९
ततश्च पापान्मुक्तस्त्वं कर्मभिस्ते च पातिताः ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥ ३०
ह्रदेष्वेतेषु यः स्नात्वा पितॄन्संतर्पयिष्यति ।
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् ।
ईप्सितं मनसः कामं स्वर्गलोकं च शाश्वतम् ॥ ३१
एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीतास्तत्रैवान्तर्दधुस्तदा ॥ ३२
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ।
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः ।
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ॥ ३३
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ॥ ३४
कायशोधनमासाद्य तीर्थं भरतसत्तम ।
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ।
शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् ॥ ३५
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।

---

$M_2$ नः श्रुतिः. — $^{d}$) N ($K_3$ missing) प्र- (for च). — $^{f}$) $K_2$ $B_4$ Dn $D_{1.2.5}$ नराधिप (for मही°).

**24** For 24–32, cf. passage 71* of the Ādi (vol. 1, p. 33); and Sukthankar, "Epic Studies (VI)," *ABORI.* 18. 6. — Before 24, $B_{1.3.4}$ Dc Dn ins. पितर ऊचुः. — $^{d}$) B $D_{4.6}$ [ऽ]नघ (for विभो). — $^{f}$) $T_2$ G (except $G_1$) $M_2$ यदिच्छसि. B $D_{4.6}$ महामते.

**25** $^{a}$) S तु (for स). — $^{d}$) $K_4$ $D_{1.2}$ तान्; Dc स्वान् (for स).

**26** $^{a}$) $K_4$ $D_{1.2}$ भवंत्योद्य यदि प्रीता. — $^{c}$) $K_2$ $B_{1.2}$ Dn $D_5$ पितृप्रसादम्. — $^{d}$) $K_{2.4}$ Dn $D_5$ तपआप्यायनं; $D_1$ तपसोप्या°; $T_1$ $G_{2.4}$ तपःस्वाध्यायनं.

**27** $27^{ab}$ = (var.) $29^{cd}$. — $^{c}$) S (except $G_1$ $M_1$) तु (for च). $Ś_1$ $K_1$ $D_3$ ततः पापात्प्रमुच्येयं. — $^{d}$) $K_1$ भवतां (for युष्माकं). $Ś_1$ ह्ययं; Dn $D_6$ [अ]प्यहं (for ह्यहम्).

**28** $^{d}$) B $D_{3.4.6}$ तोष° (for हर्ष°).

**30** $K_1$ om. $30^{ab}$ (with 29). — $^{a}$) $K_2$ तु (for त्वं). — $^{b}$) $Ś_1$ न (for च). $K_{2.4}$ Dn $D_{1.2.5}$ पतितास्ते स्वकर्मभिः; B Dc $D_{3.4.6}$ $M_1$ निहतास्ते स्व($D_3$ *sup. lin.* °स्तेन)कर्मभिः ($D_3$ °णा).

**31** $^{a}$) $K_{2.4}$ Dc Dn $D_5$ S (except $M_1$) ह्रदेषु तेषु. T $G_{2-4}$ $M_1$ (by transp.) स्नात्वा यः. — $G_1$ om. $31^{cdef}$. — $^{e}$) $K_2$ $B_4$ Dn $D_5$ च मनः-; $D_{1.2}$ मनसा (for मनसः). $T_1$ समीप्सितं मनःकामं; $M_2$ स इप्सितं मनःकामं. — $^{f}$) $K_4$ Dc $D_{1-3}$ S ($G_1$ om.) स्वर्गवासं.

**32** $^{a}$) $K_4$ B $D_4$ $T_1$ $G_{2.4}$ वरं (for वरान्). — $^{c}$) $K_2$ Dn $D_5$ प्रीत्या (for प्रीतास्). — $^{d}$) $K_{1.2}$ Dc Dn $D_5$ अंतर्हिताः (for °र्दधुः). $K_1$ ययुः; $K_2$ B Dn $D_5$ S (except $G_1$ M) ततः; $K_4$ स्वयं (for तदा).

**33** $K_4$ om. $33^{a}$–$34^{b}$. — $^{d}$) $D_3$ S शुचि° (for शुभ°). — $T_1$ om. $33^{e}$–$35^{b}$.

**34** $T_1$ om. 34; $K_4$ om. $34^{ab}$ (cf. v.l. 33). — $^{a}$) $K_1$ $Dc_1$ Dn $D_{3-5}$ वंशमूलक आ°. — $^{c}$) $D_3$ $G_1$ स (for स्व-). $T_2$ $G_3$ श्रीमान् (for राजन्). $K_2$ Dn स्वयं समुद्धरेद्राजन्.

**35** $T_1$ om. $35^{ab}$ (cf. v.l. 33). — $^{cd}$) $K_4$ B Dc $D_{1-4.6}$ $M_1$ शरीरशुद्धिमा($M_1$ °द्धिं प्रा)प्नोति. The same MSS. except Dc स्नातस्तस्मिन् (for तस्मिंस्तीर्थे). — $^{f}$) $D_{1.2}$ $G_4$ शुद्धा° (for शुभा°).

लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ३६
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यविश्रुतम् ।
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् ।
श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ॥ ३७
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा ।
कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ३८
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितॄन्देवानुपवासपरायणः ।
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ३९
गवांभवनमासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ४०
शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ४१
ततो गच्छेत राजेन्द्र द्वारपालमरन्तुकम् ।
तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ४२
ततो गच्छेत धर्मज्ञ ब्रह्मावर्तं नराधिप ।
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ॥ ४३
ततो गच्छेत धर्मज्ञ सुतीर्थकमनुत्तमम् ।
यत्र संनिहिता नित्यं पितरो दैवतैः सह ॥ ४४
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति पितृलोकं च गच्छति ॥ ४५
ततोऽम्बुवश्यं धर्मज्ञ समासाद्य यथाक्रमम् ।
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ।
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ४६

C. 3. 6027
B. 3. 83. 57
K. 3. 81. 57

---

**36** M2 om. 36a–37d. — a) Ś1 K (K3 missing) D (except D4. 6) धर्मज्ञ (for राजेन्द्र). — 36b = 37b. — Ś1 D2 om. (hapl.) 36c–37b. — c) B2. 3 T1 M1 लोकयात्रोद्धृताः; G4 लोको यत्रोद्धृतः. — 36d = 5. 13. 9b.

**37** Ś1 D2 om. 37ab; M2 om. 37abcd (cf. v.l. 36). — b) = 36b. K1 तीर्थं ते लोकविश्रुतं; K2 Dn D5 तीर्थं त्रैलोक्यपूजितं; T1 G (except G3) तीर्थसेवी कुरूद्वह (=41b). — After 37c, K2 Dn D2. 5 ins.:

390* स्नात्वा नियतमानसः।
अर्चयित्वा पितॄन्देवान्.

**38** D2 om. 38a–39c. — a) D1 कपिलं; S कापिलं (for कपिला-). — G4 om. 38c–39b. — d) Ś1 K1 पितॄन्देवांस्तथैव च; K2. 4 Dc Dn D5 पितॄन्स्वान्दैवतान्यपि (Dc °नि च); B2 देवानि स्वपितॄंस्तथा; D1 पितॄंश्च देवतांस्तथा; D4. 6 देवानिह पितॄंस्तथा; G1 देवताश्च पितॄंस्तदा. — f) K4 D1. 3 S (G4 om.) भारत (for मानवः).

**41** a) D1. 2 M तत (for तत्र). T2 G2 चासाद्य. Ś1 शंखिनीं त्वं समासाद्य; K1 B Dc D3. 4. 6 T1 शंखिनीतीर्थमासाद्य. — b) B D4. 6 नराधिप; D1 यथाक्रमं (for कुरू°). — d) Ś1 K1 तीर्थम्; B D3. 4. 6 वीर्यम् (for रूपम्).

**42** K4 D2. 4 om. 42; G4 om. 42b–44a. — 42ab = (var.) 13ab. — b) Ś1 B2 Dc2 अहं(Ś1 अरं)तकं; K2 Dn1. n2 D5 तरंडकं; B1 D3 अनंतकं; B3. 4 अवर्णकं; Dn3 D6 मचक्रुकं; T1 अरुंदकं; T2 G3 अरुंधुकं; M अनुत्तमं (for अरन्तुकम्). K1 ब्रह्मावर्तं नरोत्तमं. — c) K1. 2 Dn D1. 5 G2 तच्च; B2 D3 (*sup. lin.* as in text) यस्य; M1 तत्र (for तस्य). T1 G1 M2 समासाद्य; T2 G3 महापुण्यं (for सरस्वत्यां). — D2. 4 G2 om. 42ef; G1 om. 42f–44c.

**43** G1. 4 om. 43 (cf. v.l. 42). — a) Ś1 ब्रह्मज्ञ; K2 B4 Dn D5 S राजेंद्र (for धर्मज्ञ). — K2 om. (hapl.) 43b–44a. — b) Ś1 D5 नरोत्तम; Dn नरोत्तमः (for नरा°). K4 द्वारपालमरंतुकं (=42b). — d) T2 G2. 3 लभते रूपमुत्तमं.

**44** G1 om. 44abc; K2 G4 om. 44a (cf. v.l. 42, 43). — a) Ś1 K4 धर्मात्मन्; Dn D5 T1 M राजेंद्र; T2 G2. 3 धर्मात्मा (for धर्मज्ञ). — b) Cf. v.l. 46b. K4 वसुतीर्थम् (for सुतीर्थकम्). — c) K2 Dc Dn D5 T G2–4 तत्र (for यत्र). D1. 2 S राजन् (for नित्यं). — d) A few MSS. देवतैः. K1 देवताः पितृभिः सह.

**45** d) Dc2 T2 G (except G1) स (for च).

**46** a) K1 G2. 4 ततोंबुपश्यं; K2 Dn D5 °बुम(K2 °मा)-त्यां; B2 °श्वत्यां; B3 °भ्युपत्यां; Dc °बुवत्यां; D3. 4. 6 ततो युवत्यां; T1 M1 °बपश्यन्; M2 °बपश्यं. K4 D1. 2 ततो भवस्य धर्मात्मन्. — b) K2 Dn D5 सुतीर्थकमनुत्तमं (=44b). — c) K1. 2 B1–3. 5 कामेश्वरस्य; K4 B2. 4 Dc Dn D4. 6 काशी°; G2 M केशे°. Ś1 K (K3 missing) Dn D1. 2 तीर्थे च (for तीर्थेषु).

**47** b) K1 M2 तत्र (for यत्र). K4 निश्रितं; B D3. 4. 6 पार्थिव; T2 G2–4 धीमतः (for भारत). Ś1 स्नात्वा वस्त्र

C. 3. 6028
B. 3. 83. 58
K. 3. 81. 58

मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत ।
प्रजा विवर्धते राजन्ननन्तां चाश्नुते श्रियम् ॥ ४७
ततः शीतवनं गच्छेन्नियतो नियताशनः ।
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥ ४८
पुनाति दर्शनादेव दण्डेनैकं नराधिप ।
केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत ॥ ४९
तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ।
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ॥ ५०
श्वानलोमापनयने तीर्थे भरतसत्तम ।
प्राणायामैर्निर्हरन्ति श्वलोमानि द्विजोत्तमाः ।
पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ॥ ५१
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ।
तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥ ५२
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः ।
अवगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ॥ ५३
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ५४
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ।
आपगा नाम विख्याता नदी सिद्धनिषेविता ॥ ५५
श्यामाकभोजनं तत्र यः प्रयगच्छति मानवः ।
देवान्पितॄंश्च उद्दिश्य तस्य धर्मफलं महत् ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ५६
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा ।

---

भारत. — $^{c}$) $T_2$ $G_{2-4}$ प्रज्ञा (for प्रजा). $K_1$ [अ]भिवर्धते; $D_3$ सं° (for वि°). $Ś_1$ प्रजाभिर्विधिना राजन्. — $^{d}$) $K_1$ $D_{1.3}$ प्राप्नुते; $K_4$ चाप्नुते; $B_3$ चाप्नुयात्; Dc लभते. Dn $D_5$ अतन्वीं ($D_5$ महतीं) श्रियमश्नुते.

**48** $G_4$ om. $48^{a}$–$50^{b}$. — $^{a}$) $K_2$ $D_6$ सीत°; Dn $D_5$ सीता° (for शीत°). — $^{c}$) $K_4$ (by transp.) तत्र तीर्थं; S (except $G_1$ $M_1$; $G_4$ om.) तीर्थे तत्र. — $^{d}$) $T_1$ लभेद् (for महद्). $M_2$ मनुष्याणां सुदुर्लभं.

**49** $G_4$ om. 49 (cf. v.l. 48). — $^{a}$) $K_4$ गमनाद् (for दर्शनाद्). $K_2$ $Dn_3$ $D_{3.5}$ $G_1$ M एकं; $D_{1.2}$ चैकं; $T_1$ एनं (for एव). $K_2$ Dn $D_5$ पुराभिगमनादेकं ($Dn_2$ °व). — $^{b}$) ❀ Arj.: दण्डेनैकं नराधिपेति। एकमिति तृतीयार्थे द्वितीया। ❀ $Ś_1$ K ($K_3$ missing) Dn $D_5$ दृष्ट्वमेकं; $D_{1.2}$ स्नात्वा चैकं; $D_3$ दृष्टैनैव; $G_2$ कुलमेकं (for दण्डेनैकं). — $^{c}$) $G_{1.2}$ M केशोना° (for केशाना°). $Dc_1$ चैतस्मिन्; Dn ($Dn_1$ by corr.) $D_{1.2}$ चैकस्मिन् (for वै त°).

**50** $G_4$ om. $50^{ab}$ (cf. v.l. 48). — $^{a}$) $K_4$ transp. तीर्थं and तत्र. B Dc $D_{3.4.6}$ तत्र तीर्थवरं चान्यत् (Dc स्नात्वा; $D_3$ राजन्). — $K_2$ om. $50^{b}$–$51^{a}$. — $^{b}$) Cf. $51^{a}$ and v.l. $K_1$ $B_3$ $D_{4.6}$ स्वान($D_6$ स्वानु)लो°; $B_1$ स्नानलो°; Dc नखलो°; $Dn_{1}$. $n_3$ श्वाविल्लो°; $D_1$ स्नानं लो°. $Dn_2$ महदन्यत्र दुर्लभं (= $48^{d}$). — $^{c}$) $K_4$ B $Dn_2$ $D_6$ तत्र. — After 50, B D (except $D_{2.5}$) $T_2$ G (except $G_1$) ins.:

391* गतिं गच्छन्ति परमां स्नात्वा भरतसत्तम ।

[ $B_3$ $Dn_2$ $D_{1.4.6}$ प्रीतिं (for गतिं). $T_2$ $G_{2-4}$ स्नाता- (for स्नात्वा). ]

**51** $K_2$ om. $51^{a}$ (cf. v.l. 50); $Dc_1$ $D_3$ om. $51^{ab}$. — $^{a}$) Cf. $50^{b}$ and v.l. $K_1$ $B_{1.2}$ $Dc_2$ $D_{4.6}$ स्वान($D_6$ स्वानु)लो°; $K_4$ Dn श्वाविल्लो°; $B_4$ स्नात्वा लो°; $D_{1.2}$ स्थाने लो°. — $^{c}$) $Ś_1$ विहिंसंति; $K_1$ विहंसंति; $D_{1.2}$ न्यस्तलोमा; $T_1$ निर्हरंत; $T_2$ $G_{3.4}$ हरंतीह (for निर्हरन्ति). $D_3$ $M_1$ ब्रह्मयामेन निघ्नंति. — $^{d}$) $Ś_1$ $K_2$ B Dc Dn $D_{3-6}$ स्वलोमानि; $K_1$ स्वालोमानि; $D_{1.2}$ निरजस्का; $T_1$ $M_2$ श्वानलोमा; $T_2$ $G_{1.3.4}$ श्वानलोमाद्; $G_2$ corrupt.

**52** $^{a}$) $T_2$ $G_{2-4}$ चापि (for चैव). — $^{b}$) $K_1$ Dc महामते; $M_2$ महायशाः (for मही°). $D_{1.2}$ तीर्थं भुवि सुदुर्लभं. — $^{c}$) $D_{1.2}$ गत्वा तत्र नर°. — $^{d}$) $K_1$ लभते; $B_{2.4}$ $D_6$ गच्छंति; $D_{1.2}$ गच्छते; $D_3$ गच्छेच्च.

**53** $^{c}$) B तत्र (for यत्र). Dc $D_{4.6}$ कृष्णा मृगा. — $^{d}$) N ($K_3$ missing) शरपीडिताः. — $Ś_1$ $K_1$ $G_1$ om. $53^{ef}$. — $^{e}$) Hypermetric! $K_2$ B D (except $D_{1-3}$) S (except $M_1$; $G_1$ om.) वि° (for अव°). $K_4$ $D_3$ अवगाह्य सरस्तद्धि; $D_{1.2}$ अवगाह्य जलं तद्धि.

**54** $^{b}$) $K_2$ B Dn $D_{4-6}$ समाहितः (for जिते°).

**56** $^{a}$) $Ś_1$ श्यामकं; K ($K_3$ missing) Dc $D_{1.2.4-6}$ श्यामाकं (for श्यामाक-). Dn श्यामाकं भोजने तत्र (!). — $^{c}$) N ($K_3$ missing) $T_2$ $G_3$ समुद्दिश्य; $G_{1.4}$ च वोद्दिश्य; M चैवोद्दिश्य (for च उद्दिश्य). — $D_6$ $G_4$ om. $56^{e}$–$57^{d}$.

**57** $D_6$ $G_4$ om. 57 (cf. v.l. 56). — $^{b}$) Cf. v.l. $64^{b}$. $Ś_1$ स्वान्पितॄन्दैवतानि च; $K_1$ Dc $T_1$ $G_2$ $M_2$ पितॄन्स्वान् दै- ($K_1$ $T_1$ $M_2$ दे)वतानि च; $K_{2.4}$ Dn पितॄन्वै दैवतानि च;

उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ५७
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ॥ ५८
तत्र सप्तर्षिकुण्डेषु स्नातस्य कुरुपुंगव ।
केदारे चैव राजेन्द्र कपिष्ठलमहात्मनः ॥ ५९
ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ६०
कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ६१
ततो गच्छेत राजेन्द्र सरकं लोकविश्रुतम् ।
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् ।
लभते सर्वकामान्हि स्वर्गलोकं च गच्छति ॥ ६२
तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन ।
रुद्रकोटिस्तथा कूपे ह्रदेषु च महीपते ।
इलास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ६३
तत्र स्नात्वार्चयित्वा च पितॄन्देवांश्च भारत ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ६४
किंदाने च नरः स्नात्वा किंजप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ६५
कलश्यां चाप्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ६६
सरकस्य तु पूर्वेण नारदस्य महात्मनः ।
तीर्थं कुरुवरश्रेष्ठ अनाजन्मेति विश्रुतम् ॥ ६७
तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोति दुर्लभान् ॥ ६८
शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् ।

C. 3. 6053
B. 3. 83. 83
K. 3. 81. 83

D1. 2 पितृंश्च देवतानपि ( D2 °नि च ); T2 G3 पितृंस्तान्देवतानि च.

**58** a) K1 B D4 धर्मज्ञ (for राजेन्द्र). — b) Ś1 K1 D3 ब्रह्मस्थानमनुत्तमं. — c) Ś1 K1 एतत्; B2–4 Dc D4. 6 एवं (for एव). G4 ब्रह्मणोदरमित्येव. — d) Dn2 (? gloss) प्रख्यातं (for प्रकाशं). S (except M1) भरतर्षभ (for भुवि भा°).

**59** a) Ś1 K1. 4 Dc ब्रह्मर्षि-; K2 समेषु (for सप्तर्षि-). — b) Ś1 K2 Dn D5 नरपुंगव; K1 B2–4 D3. 4. 6 T1 भरतर्षभ; K4 Dc M1 कुरुनंदन; G4 कुरुसत्तम. — d) K (K3 missing) कपिल( D5 °ष्ठ )स्य महा°; T G M2 कपिष्ठ( T2 G3. 4 कपिंज )लमहामुनेः.

**60** a) Ś1 K2 D5 G2 अधिगत्वा; K1. 4 B1 D1. 2 अभिगत्वा; D3 M2 अधिगम्य (for अभिगम्य). Ś1 K1. 2 B1 D1. 2. 5 G2 च; K4 [आ]शु (for [अ]थ).

**61** a) K1 Dn2 D1. 3(*sup. lin.*). 4. 6 कपिलस्य च; K2 D5 कपिस्थलस्य; D3 कपिपापिष्ठ-; T2 G3 कपिंजलस्य.

**62** b) Ś1 शनकं; K1 T1 M2 शरकं; K2 Dn1. n2 D5 T2 G2–4 शंकरं; M1 शरभं (cf. v.l. 63b, 67a). — c) B4 D1 S कृष्णपक्ष- (T1 ततः कृष्ण-). — e) B1. 2. 4 Dn1. n3 D4 लभेत. K1 सर्वकामांश्च; B2 °कामान्वै; T1 °कामानि.

**63** b) K1 शनके; B1 Dn1 T1 M2 शरके; B2 सवंके; D3 सरंके; T2 G शंकरे; M2 शरभे (cf. v.l. 62b, 67a). — c) Ś1 K1 D5 भद्रकोट्यां; K2 B1. 2. 4 Dc D1. 2. 4 रुद्रकोटी; K4 Dn D3 (*sup. lin.*) °कोट्यां; D3 (orig.) M2 °कोटिं (for °कोटिस्). T2 G2–4 रुद्रकोट्यां तु (G2 °कोट्यस्तु) पुण्यायां. — d) B D3. 4. 6 समंततः (for मही°). — D5 om. (hapl.) 63c–65b. — e) Ś1 K1. 4 D1. 2 इडास्पदं; T G शुद्धा( G1 इळा )स्पदं.

**64** D5 om. 64 (cf. v.l. 63). — b) Cf. v.l. 57b. Ś1 K1 Dc पितृन्स्वान्दैवतानि च; K4 स्वपितृंश्चैव तानि च; B Dn D4. 6 दैवतानि पितृनपि ( B2 °तृंस्तथा; Dn D4. 6 °तृनथ ); D1–3 स्वपितृन्दै( D3 °न्दे )वतानि च; M1 पितृन्देवांस्तथैव च. — T1 M2 om. (hapl.) 64c–65d.

**65** D5 om. 65ab; T1 M2 om. 65 (cf. v.l. 63, 64). — b) Ś1 Dc D1. 2 T2 G2. 4 किंजपे च (Dc2 °प्येन). — d) B D4. 6 तथैव च (for च भारत). D3 तदानंतं तथैव च.

**66** a) Ś1 कोलश्यां; K2 B2. 4 D1 कलस्यां. B1. 2. 4 Dc2 Dn D3. 4. 6 T2 (by corr.) G3 वार्युपस्पृश्य. — b) Ś1 K1 ब्रह्मचारी (for श्रद्द°).

**67** a) K1 T1 M2 शरकस्य; D5 T2 G2–4 शंकरस्य; M1 शरभस्य (cf. v.l. 62b, 63b). — c) K2 Dn D1. 2. 5 G2 M1 तीर्थं कुरुकुलश्रेष्ठ; B D3. 4. 6 कुरुश्रेष्ठ शुभं तीर्थं. — d) Dn2 अंबाजन्मेति(!); D1. 2 अन्यज°; D3 मम ज°.

**68** K1 om. (hapl.) 68a–70b. — a) D3 transp. तत्र and स्नात्वा. K4 D1. 2 तस्मिन् (for तत्र). — b) Ś1 K2. 4 D (except D4. 6) om. च. — d) Dc D1–4 आप्नोति (for प्रा°). K2 Dn D5 [अ]नुत्तमान् (for दुर्ल°).

**69** K1 om. 69 (cf. v.l. 68). — a) B1 S शुक्लपक्ष-.

C. 3. 6053
B. 3. 83. 83
K. 3. 81. 83

तत्र स्नात्वा नरो राजन्पुण्डरीकफलं लभेत् ॥ ६९
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ७०
तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ७१
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् ।
यत्र देवाः सदा राजन्फलकीवनमाश्रिताः ।
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ॥ ७२
दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ॥ ७३
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ।
गोसहस्रस्य राजेन्द्र फलं प्राप्नोति मानवः ॥ ७४
पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः ।
राजसूयमवाप्नोति ऋषिलोकं च गच्छति ॥ ७५
ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ।
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ७६
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् ।
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ७७
ततो व्यासवनं गच्छेन्नियतो नियताशनः ।
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ७८
गत्वा मधुवटीं चापि देव्यास्तीर्थं नरः शुचिः ।
तत्र स्नात्वार्चयेद्देवान्पितॄंश्च प्रयतः शुचिः ।
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥ ७९
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत ।
स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते ॥ ८०
ततो व्यासस्थली नाम यत्र व्यासेन धीमता ।
पुत्रशोकाभितप्तेन देहत्यागार्थनिश्चयः ॥ ८१
कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तदा ।

---

$K_2$ Dn $D_5$ च (for तु). — $^d$) S पौंडरीक° (G$_4$ सर्वयज्ञ°).

**70** $K_1$ om. $70^{ab}$ (cf. v.l. 68). — $^a$) T G तत्र (for ततस्). B $D_4$ त्रिपिष्टपं. — $^d$) $K_{1.2}$ Dn $D_3$ $T_2$ $G_{2-4}$ पापप्रणाशिनी.

**72** $^b$) $T_1$ $G_{1.2.4}$ $M_2$ फलजी($G_2$ $M_2$ °लं जी)वनम् (cf. $^d$). — $^c$) $K_2$ B D (except Dc) $T_1$ तत्र; $K_4$ अत्र (for यत्र). — $^d$) G $M_2$ फलजी($G_2$ $M_2$ °लं जी)वनम् (cf. $^b$). — $^f$) $K_{1.4}$ B $D_{3.4.6}$ $M_2$ °सहस्रिकं. — After 72, $T_2$ G ins.:

392* तत्र स्नात्वा नरो राजन्सर्वयज्ञफलं लभेत् ।

**73** $G_1$ om. $73^{ab}$. — $^a$) $B_{2-4}$ दृशद्वत्यां. — $K_1$ om. $73^c$–$74^d$. — $^d$) $K_5$ $T_2$ $G_{2.4}$ मानवः (for भारत).

**74** $K_1$ $D_2$ om. 74 (for $K_1$ cf. v.l. 73); Dc om. $74^c$–$75^b$. — $^c$) $B_1$ (m as in text) गोसहस्रं च रा°. — $^d$) Ś$_1$ $K_2$ Dn $D_{1.5}$ $T_1$ M विंदति; $B_{2.3}$ $D_{4.6}$ आप्नोति (for प्राप्नोति).

**75** $K_1$ transp. $75^{ab}$ and $75^{cd}$. Dc om. $75^{ab}$ (cf. v.l. 74). — $^a$) $B_2$ $D_4$ पाणिख्याते; $B_3$ $T_1$ $G_4$ M °पाते; $G_1$ °पादे; $M_2$ °पाने. $K_2$ तर्प्य (for स्नात्वा). — $M_2$ om. (hapl.) $75^b$–$78^c$. — After $75^{ab}$, $K_2$ Dn $D_5$ *repeat* $73^{cd}$. — $^c$) B $D_{4.6}$ $T_2$ $G_{3.4}$ अवाप्नुते ($B_4$ अवाप्नोति) राजसूयं; $D_3$ अवाप्नुयाद्राजसत्रं. — $^d$) $T_2$ $G_{3.4}$ स (for च). $K_2$ Dn $D_5$ विंदति (for गच्छति).

**76** $M_2$ om. 76 (cf. v.l. 75). — $^a$) B $D_{3.4.6}$ धर्मज्ञ (for राजेन्द्र). — $^b$) B $Dc_2$ $D_{3.4.6}$ लोकविश्रुतं (for तीर्थमु°). — $^c$) T $G_{1-3}$ यत्र (for तत्र). $D_{1.2}$ T $G_{1-3}$ सर्वाणि (for राजेन्द्र). $M_1$ तत्र सर्वाणि तीर्थानि.

**77** $M_2$ om. 77 (cf. v.l. 75). — $^a$) $K_4$ $D_{1.2}$ $T_2$ $G_{1-3}$ नरशार्दूल; $M_1$ वेदविदुषा. — $^b$) $G_{1.2.4}$ द्विजार्थे (for द्विजार्थम्). — After 77, $K_1$ ins.:

393* स वै स्नात्वार्चयित्वा च मिश्रके पितृदेवताः ।

**78** $M_2$ om. $78^{abc}$ (cf. v.l. 75). — $^a$) T G गत्वा (for गच्छेन्).

**79** T G om. 79. — $^a$) Ś$_1$ मधुवटं; $K_2$ $B_2$ $D_5$ °मतीं; $M_1$ °पदीं; $M_2$ °द्रुतीं. $K_2$ $B_{1.2}$ Dn M चैव (for चापि). — $^b$) $K_2$ $Dc_1$ Dn M तीर्थे; B $D_6$ स्थानं; $D_4$ स्नानं (for तीर्थं). $D_3$ अनुत्तमं (for नरः शुचिः). — $^c$) K ($K_3$ missing) $Dc_2$ Dn $D_{1-3.5}$ स्नात्वार्चयित्वा च. — $^d$) Ś$_1$ $K_{2..4}$ Dc Dn $D_{1-3.5}$ $M_2$ पितॄन् ($Dn_3$ $D_3$ पितृ-) देवांश्च पूरुषः; $K_1$ देवान्पितॄंश्च पूरुषः; $M_1$ पितॄंश्च प्रयतस्तु यः.

**80** $^b$) B दृशद्वत्या°. — $^c$) Ś$_1$ $K_1$ स्नायात् (for स्नाति). Ś$_1$ सु-; $K_1$ तु; $K_4$ Dc $D_{1-3}$ यो (for वै).

**81** $^d$) $K_{2.4}$ Dc Dn $D_3$ देहत्यागे कृता मतिः; B $D_{4.6}$ $G_1$ M देहत्यागाय ($M_2$ °गश्च) निश्चयः.

**82** $^a$) $K_{2.4}$ Dc Dn $D_{3.5}$ ततो (for कृतो). Ś$_1$ $K_2$ Dn $D_5$ तु (for च). S (except $M_1$) कृतो वै देवराजेन.

अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत् ॥ ८२
किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ।
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ॥ ८३
अहश्च सुदिनं चैव द्वे तीर्थे च सुदुर्लभे ।
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ ८४
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र गङ्गाह्रदे स्नात्वा समभ्यर्च्य च मानवः ।
शूलपाणिं महादेवमश्वमेधफलं लभेत् ॥ ८५
देवतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।
अथ वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ ८६
तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम् ।
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ८७
कुलंपुने नरः स्नात्वा पुनाति स्वकुलं नरः ।
पवनस्य ह्रदं गत्वा मरुतां तीर्थमुत्तमम् ।
तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ॥ ८८
अमराणां ह्रदे स्नात्वा अमरेषु नराधिप ।
अमराणां प्रभावेन स्वर्गलोके महीयते ॥ ८९
शालिहोत्रस्य राजेन्द्र शालिशूर्पे यथाविधि ।
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ ९०
श्रीकुञ्जं च सरस्वत्यां तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ९१
ततो नैमिषकुञ्जं च समासाद्य कुरूद्वह ।
ऋषयः किल राजेन्द्र नैमिषेयास्तपोधनाः ।
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ॥ ९२

C. 3. 6080
B. 3. 83. 110
K. 3. 81. 110

— $^c$) $K_2$ $B_1$ Dn $D_5$ $M_1$ अभिगत्वा. $K_2$ $T_2$ $G_3$ $M_1$ तत्र; $T_1$ चैव (for तस्य).

**83** $G_4$ om. 83–84. — $K_4$ om. (hapl.) $83^b$–$84^c$. — $^c$) S (except $M_1$; $G_4$ om.) गच्छेत्परमिकां सिद्धिं. — $^d$) $B_{1.4}$ $D_3$ $M_1$ युधिष्ठिर; $B_{2.3}$ $D_{4.6}$ नरेश्वर (for कुरू°). — After 83, $K_2$ B Dc Dn $D_{4.6}$ $M_1$ ins.:

394* वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।

**84** $G_4$ om. 84; $K_4$ om. $84^{abc}$ (cf. v.l. 83). — $^a$) $Ś_1$ $K_1$ वंहुं च; $K_2$ $D_5$ आह्नं च; $D_{1.2}$ अहँ च; $D_3$ अह्नं च; $T_2$ $G_3$ हयश्च; $M_2$ अहं च. $D_4$ $T_2$ $G_{1.3}$ सुदिनश्; $M_1$ [अ]नुदिनं (for सुदिनं). — $^b$) B $D_{4.6}$ M तु (for च). $K_2$ Dc Dn $D_{1.2.5}$ द्वे तीर्थे लोकविश्रुते; $D_3$ तीर्थे चैव सुदुर्लभे; $T_1$ द्वे तीर्थेषु सुदुर्लभे. — $^c$) T $G_{2.3}$ तत्र (for तयोः).

**85** $T_1$ om. 85–90. — $^a$) $D_{4.6}$ नृगधूमं; S ($T_1$ om.) ब्यंग°. — $^c$) B $D_{4.6}$ रुद्रपदे (for गङ्गा°). $Ś_1$ K ($K_3$ missing) Dc Dn $D_{1-3.5}$ तत्राभिषेकं कुर्वीत. — After $85^c$, $G_1$ reads $89^b$–$90^b$, om. $85^d$–$86^b$. — $^d$) $Ś_1$ K ($K_3$ missing) D (except $D_{4.6}$) गंगायां नृप($Ś_1$ $K_1$ कुरु)सत्तम; T G ($T_1$ $G_1$ om.) ह्यर्चयित्वा च भारत. — $^e$) $Ś_1$ K ($K_3$ missing) D (except $D_{4.6}$) अर्चयित्वा (for शूल°). B $D_{4.6}$ $M_1$ महात्मानम् (for महा°).

**86** $T_1$ om. 86; $B_3$ $G_1$ om. $86^{ab}$ (for $T_1$ $G_1$ cf. v.l. 85). — $^{ab}$) $Ś_1$ K ($K_3$ missing) Dn $D_{1.2.5}$ देव्यास्तीर्थे; B Dc $D_{4.6}$ कोटि° (for देव°). — $^c$) $Ś_1$ K ($K_3$ missing) D (except $D_{4.6}$) ततो (for अथ). B $D_{4.6}$ $M_1$ गत्वा (for गच्छेत्).

**87** $K_4$ $T_1$ om. 87 (for $T_1$ cf. v.l. 85). — $^a$) $T_2$ $G_{2.3}$ विष्णुह्रदे. — $^b$) B $D_{4.6}$ S ($T_1$ om.) समभ्यर्च्य; $D_3$ पूजयित्वा (for अर्च°). — $^d$) $Ś_1$ $K_1$ Dc च गच्छति; $K_2$ Dn $D_{1.2.5}$ स गच्छति (for अवा°).

**88** $D_1$ $T_1$ om. 88 (for $T_1$ cf. v.l. 85). — $^b$) $Ś_1$ $K_1$ च कुलं; $D_2$ स्वजनं (for स्वकुलं). $Ś_1$ $K_1$ महत्; $K_2$ Dn $D_5$ ततः; $D_3$ नृप (for नरः). — $^e$) $K_2$ Dn $D_5$ ह्रदे स्नात्वा. — $^f$) $K_2$ $B_4$ Dn $D_5$ विष्णु° (for वायु°).

**89** $D_5$ $T_1$ om. 89 (for $T_1$ cf. v.l. 85); $T_2$ $G_3$ om. 89–90; $G_1$ om. $89^a$. — $^b$) $Ś_1$ ह्यमरेषु; $G_2$ अमरे च (for अमरेषु). $K_{1.2}$ $B_{2-4}$ Dn $D_{3-6}$ समभ्यर्च्यामं($D_3$ °र्च्यं न)राधिपं. — $^c$) $G_{2.3}$ $M_2$ प्रसादेन (for प्रभा°). — After 89, $Ś_1$ $K_1$ $B_{1.3}$ Dc $D_3$ ins.:

395* अमरैः सह संयाति विमानवरमास्थितः ।

**90** T $G_3$ om. 90 (cf. v.l. 85, 89). — $^a$) $K_2$ $B_4$ Dn $D_5$ तीर्थं ($B_4$ $Dn_2$ तीर्थे) च (for राजेन्द्र). — $^b$) $Ś_1$ शालिशीर्षे; $K_1$ °शीर्ये; $K_2$ B Dc Dn $D_{1.2.4.6}$ °सूर्ये; $K_4$ $D_{3.5}$ °होत्रे.

**91** $D_2$ om. 91. — $^a$) $T_2$ $G_{2-4}$ श्रीकुब्जे च. $K_2$ $Dn_{2.n3}$ $D_5$ $T_1$ $G_1$ $M_1$ सरस्वत्याः; $B_1$ समासाद्य. $Ś_1$ श्रीकुंजरं सरस्वत्याः. — Dc om. (hapl.) $91^b$–$93^a$. — $^b$) $T_2$ $G_{2.3}$ तीर्थे. — $Ś_1$ $M_1$ om. (hapl.) $91^c$–$93^b$. — $^c$) $K_2$ Dn $D_5$ नरश्रेष्ठ (for नरो राजन्). — $^d$) S ($M_1$ om.) °ष्टोममवाप्नुयात्.

**92** $Ś_1$ Dc $M_1$ om. 92 (cf. v.l. 91). — $^a$) $T_1$ $G_1$ $M_2$ नैमिसकुंजं; $T_2$ $G_{2-4}$ नैमिसकुब्जं. — $^b$) B $D_{4.6}$

रूपस्य भागी भवति सुभगश्चैव जायते ॥ २८
ततो वेण्णां समासाद्य तर्पयेत्पितृदेवताः ।
मयूरहंससंयुक्तं विमानं लभते नरः ॥ २९
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम् ।
गवामयमवाप्नोति वासुकेर्लोकमाप्नुयात् ॥ ३०
वेण्णायाः संगमे स्नात्वा वाजपेयफलं लभेत् ।
वरदासंगमे स्नात्वा गोसहस्रफलं लभेत् ॥ ३१
ब्रह्मस्थानं समासाद्य त्रिरात्रमुषितो नरः ।
गोसहस्रफलं विन्देत्स्वर्गलोकं च गच्छति ॥ ३२
कुशप्लवनमासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः स्नात्वा अश्वमेधफलं लभेत् ॥ ३३
ततो देवह्रदे रम्ये कृष्णवेण्णाजलोद्भवे ।
जातिमात्रह्रदे चैव तथा कन्याश्रमे नृप ॥ ३४
यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः ।
अग्निष्टोमशतं विन्देद्गमनादेव भारत ॥ ३५
सर्वदेवह्रदे स्नात्वा गोसहस्रफलं लभेत् ।
जातिमात्रह्रदे स्नात्वा भवेज्जातिस्मरो नरः ॥ ३६
ततोऽवाप्य महापुण्यां पयोष्णीं सरितां वराम् ।
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥ ३७
दण्डकारण्यमासाद्य महाराज उपस्पृशेत् ।
गोसहस्रफलं तत्र स्नातमात्रस्य भारत ॥ ३८
शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः ।
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः ॥ ३९
ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम् ।

C. 3. 8185
B. 3. 85. 43
K. 3. 83. 43

---

Dn D5 त्रिरात्रोपोषितो नरः. — d) K3 Dc नृप (for नरः). S विमानमधिरोहति.

**30** b) K3 पुण्यां; S नदीं (for नित्यं). — c) K3 Dc गवां मेधम् (for गवामयम्). Ś1 K1. 2 D1. 2 अवाप्यैव (for अवाप्नोति). D3 गोमेधस्य फलं प्राप्य; S अवाप्य गोमेध-फलं. — d) Dn D5 उत्तमं (for आप्नुयात्). B Dc D4. 6 वायुलोकं च गच्छति; D3 G2 वायु(G2 वसोर्)लोकमवाप्नुयात्.

**31** a) Ś1 K1. 2 सिंधुगा-; K3. 4 D (except D2) वेणायाः; T2 G3 M2 वेण्णायां. — b) K3. 4 Dn D2. 5 S (except M2) वाजिमेधफलं; B3 Dc गोसहस्र°. Ś1 K1. 2 वाजपेयमवाप्नुयात्. — After $31^{ab}$, D1. 2 ins.:

440* बाहुदासंगमे स्नात्वा वाजिमेधफलं लभेत् ।

— B2. 3 G1. 4 om. (hapl.) $31^{cd}$; B1. 4 read it in marg.

**32** D1. 2 M1 om. (hapl.) 32–33. — a) K1 D3 °स्थलं; K4 B1. 2. 4 Dc D4 °स्थूणां (for °स्थानं). — b) Ś1 K1. 2 B3 Dn D5. 6 G4 M2 त्रिरात्रोपोषितो. — c) Ś1 K1. 2 लब्ध्वा; K3. 4 B D (D1. 2 om.) विंद्यात् (for विन्देत्). — d) B2. 3 विंदति (for गच्छति). Ś1 K1. 2 °लोके महीयते.

**33** D1. 2 G4 M1 om. 33 (for D1. 2 M1 cf. v.l. 32). — a) K1 शश-; B1 शक्र- (for कुश-). Dc G2 कुशं (G2 कुश-) प्लवं समासाद्य. — b) Dc पुण्यं राजन्नुपस्पृशेत्. — Dc om. $33^{cd}$. — c) K3. 4 B D4. 6 त्रिरात्रोपोषितः. — d) Ś1 त्वश्वमेध°; K4 G1 वाजिमेध°; B D4 गोसहस्र°; D3 T2 G2. 3 हयमेध°. T1 विंदेद्धहु सुवर्णकं.

**34** a) K4 T1 G2. 4 M2 पुण्ये; Dc चैव (for रम्ये). — b) Ś1 K1. 2 Dc Dn D3–6 °वेणा°; K3. 4 D1. 2 °वेण्या° (for °वेण्णा°). — After $34^{ab}$, T2 G3. 4 *repeat* $31^{ab}$ (v.l. गोसहस्र° for वाजपेय°). — c) K4 D1. 2 पितामह°; B1. 3 Dc D4. 6 ज्योतिमात्र°; B2. 4 ज्योतिर्मात्र°; Dn D5 जातिस्मर°. Ś1 K1. 2 Dn D5 G4 स्नात्वा (for चैव). — d) K4 [अ]पि च (for नृप). Ś1 K1–3 Dn D5 G4 भवेज्जातिस्मरो नरः (G4 नृप) (= $36^{d}$).

**35** T2 G3. 4 om. 35–36. — c) K2. 4 Dn D3. 5. 6 G2 M2 °फलं (for °शतं). Ś1 K B Dc2 Dn D4. 5 M2 विंद्याद्; Dc1 D3. 6 M1 विद्याद् (for विन्देद्). — d) B4 तत्र तु (for भारत).

**36** T2 G3. 4 om. 36 (cf. v.l. 35). — a) Dn D5 ततः सर्वं° (for सर्वदेव°). — b) K4 भवेज्जातिस्मरो नरः (= $36^{d}$). — Ś1 K1. 3. 4 Dn D2. 5 om. $36^{cd}$.

**37** Ś1 K1 om. 37. T G read 37–39 after 42. — a) K4 D1. 2 तत्र (for ततो). K3 वाप्यां; K4 D1. 2 प्राप्य; B Dc Dn D4. 6 वापीं (Dn2 तापीं); M2 व्यास (for ऽवाप्य). K3 B3 D4 समासाद्य; T2 G3 महत्पुण्यं (for महा°). — c) D3. 5 T1 G1 M °परो.

**38** For sequence in T G, cf. v.l. 37. — b) Ś1 K D (except D4. 6) पुण्यं राजन् (for महा°). — c) Ś1 K1–3 Dn D5. 6 T1 G2 तस्य (for तत्र).

**39** For sequence in T G, cf. v.l. 37. — a) D1. 2 प्राप्य (for गत्वा). — b) Ś1 K1. 2 शुक्र° (for शुक°). T G विंदेद्धहु सुवर्णकं (cf. $40^{d}$). — T G om. $39^{cd}$.

**40** a) T2 G3. 4 M2 तत्र (for ततः). K1 S (except

C. 3. 8186
B. 3. 85. 43
K. 3. 83. 43

रामतीर्थे नरः स्नात्वा विन्द्याद्बहु सुवर्णकम् ॥ ४०
सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत्पुण्यमवाप्नोति देवलोकं च गच्छति ॥ ४१
ततो देवपथं गच्छेन्नियतो नियताशनः ।
देवसत्रस्य यत्पुण्यं तदवाप्नोति मानवः ॥ ४२
तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा ॥ ४३
तत्र वेदान्प्रनष्टांस्तु मुनेरङ्गिरसः सुतः ।
उपविष्टो महर्षीणामुत्तरीयेषु भारत ॥ ४४
ॐकारेण यथान्यायं सम्यगुच्चारितेन च ।
येन यत्पूर्वमभ्यस्तं तत्तस्य समुपस्थितम् ॥ ४५
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणो देवो महादेवस्तथैव च ॥ ४६
पितामहश्च भगवान्देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥ ४७
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ॥ ४८
आज्यभागेन वै तत्र तर्पितास्तु यथाविधि ।
देवास्त्रिभुवनं याता ऋषयश्च यथासुखम् ॥ ४९
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ।
पापं प्रणश्यते सर्वं स्त्रियो वा पुरुषस्य वा ॥ ५०
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन्पुनीते च कुलं नरः ॥ ५१
मेधाविकं समासाद्य पितॄन्देवांश्च तर्पयेत् ।
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ५२
ततः कालंजरं गत्वा पर्वतं लोकविश्रुतम् ।

---

$G_2$) शूर्पाकरं; $K_{2-4}$ $B_{1.2.4}$ D (except Dn) सूर्पारकं. — $^d$) $D_3$ $M_1$ विद्याद्; T G $M_2$ विंदेद् (for विन्द्याद्).

**42** $D_1$ om. (hapl.) $42^a$ (together with $41^{bcd}$); $D_2$ $M_1$ om. (hapl.) $42^{ab}$ (together with $41^{cd}$); $G_4$ om. 42. — $^a$) $K_3$ सुर°; T $G_{2.3}$ देवपदं; $M_2$ °गतिं. Dn $D_5$ गत्वा (for गच्छेत्). — $^d$) Ś1 K $B_2$ Dn $D_{1.3.5}$ T $G_3$ तदेवाप्नोति. $D_{1-3}$ भारत (for मानवः). — $D_{4.6}$ *repeat* $39^{cd}$ for $42^{cd}$. — After 42, T G read 37–39.

**43** $^b$) $K_4$ $D_{1-3}$ समाहितः (for जिते°). — $^c$) Dc $T_1$ $G_1$ M °पयद्यत्र; $T_2$ $G_3$ °पयामास (for °पयत्तत्र). — $^d$) Ś1 $K_{1.2}$ B $D_{4.6}$ $M_1$ मुनीन्; Dc $D_{1-3}$ ऋषीन् (for ऋषिः). Ś1 $K_2$ सारस्वतान् (for °स्वतः). Ś1 $K_{1.2}$ तथा (for पुरा).

**44** $^a$) $K_{3.4}$ $D_{1-3}$ ततो (for तत्र). Ś1 $K_{1.2}$ Dn $D_5$ वेदेषु नष्टेषु; $M_2$ वेदान्पुनर्नष्टान्. $D_{1.2}$ च (for तु). — $^b$) Ś1 $K_2$ $G_1$ मुनिर्; $K_{3.4}$ Dc $D_3$ $M_2$ ऋषिर्; $D_{1.2.5}$ ऋषेर् (for मुनेर्). — $^{cd}$) $K_{3.4}$ D (except $D_{1.4.6}$) $M_2$ ऋषीणामुत्तरीयेषु ($M_2$ °मंतरीये तु). The same MSS. except $M_2$ उप(Dn $D_5$ सूप)विष्टेषु भारत.

**45** $^a$) Ś1 °न्याय्यं (for °न्यायं). — $^b$) $T_2$ $G_{2-4}$ सकृद् (for सम्यग्). $K_2$ Dc $D_{1-3}$ $G_1$ उच्चरि° (for उच्चारि°). $K_4$ $B_{1.4}$ Dn $D_{2-4.6}$ ह; $D_1$ हि (for च). — $^d$) $K_{3.4}$ Dc Dn $D_{1-5}$ तत्सर्वं; B $D_6$ $T_1$ M (by transp.) तस्य तत्. Ś1 $K_{1.2}$ तच्च तस्योपतिष्ठते.

**46** $^c$) $T_1$ $G_1$ $M_1$ तथा; $T_2$ $G_{2-4}$ यथा (for हरिर्). $K_{2-4}$ D (except $D_6$) तत्र (for देवो).

**47** Ś1 $K_{1.2}$ om. (hapl.) $47^b$–$48^a$. — $^b$) Dc सह शतक्रतुः. — $^c$) $Dn_{2}$. $n_3$ $D_5$ $T_2$ $G_{1-3}$ °मासुः. — $^d$) $K_4$ $D_{1-3}$ $G_4$ यजनार्थं (*or* °र्थे); $Dn_1$ T $G_{1-3}$ $M_2$ याजनार्थं. Some MSS. °द्युतिः.

**48** Ś1 $K_{1.2}$ om. $48^a$ (cf. v.l. 47). — $^d$) $K_{3.4}$ $B_3$ देवदृष्टेन; $B_{1.2.4}$ Dc $D_{1-4.6}$ $M_2$ वेद°.

**49** $^a$) Ś1 तत्रैव; $K_{3.4}$ Dc $D_{1-3}$ $M_2$ वै देवान्; Dn $D_5$ तत्राग्निं (for वै तत्र). $T_1$ आज्येन रूप्यभागेन. — $^b$) $K_{3.4}$ D (except $D_{4.6}$) तर्पयित्वा (for तर्पितास्तु). $K_1$ तं; $T_2$ $G_{2-4}$ च (for तु). — $^c$) $K_{1.2}$ त्रिविष्टपं; Dn $D_{3.5}$ स्वभ-($D_3$ °भु)वनं (for त्रिभु°). — $^d$) Dn $D_5$ °क्रमं (for° सुखम्).

**50** $^c$) Ś1 K Dc Dn $D_{1-3.5}$ प्रणश्यत्यखिलं; B $D_{4.6}$ विनश्यते सद्यः. — $^d$) $K_{1.2}$ D (except $D_{1-3}$) $T_2$ $G_{2-4}$ स्त्रिया वा.

**51** $^c$) Ś1 K °लोके वसेद्राजन्. — $^d$) Ś1 $K_{1.2}$ $M_1$ पुनीयाच्च. $D_{4.6}$ पुनः (for नरः). $K_{3.4}$ Dc Dn $D_{1-3.5}$ T G $M_2$ कुलं चैव समुद्धरेत्.

**52** $G_4$ om. 52. — After $52^a$, $D_{1.2}$ ins.:

441* नदीं पापप्रमोचनीम् ।
तत्राभिषेकं कुर्वीत.

[Cf. $55^d$–$56^a$.]

On the other hand, $T_1$ ins. after $52^a$:

442* -ब्रह्मचारी जितेन्द्रियः ।

तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ५३
आत्मानं साधयेत्तत्र गिरौ कालंजरे नृप ।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ॥ ५४
ततो गिरिवरश्रेष्ठे चित्रकूटे विशां पते ।
मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ॥ ५५
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ ५६
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ।
यत्र देवो महासेनो नित्यं संनिहितो नृप ॥ ५७
पुमांस्तत्र नरश्रेष्ठ गमनादेव सिध्यति ।
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ५८
प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः ।
अभिगम्य महादेवं विराजति यथा शशी ॥ ५९
तत्र कूपो महाराज विश्रुतो भरतर्षभ ।
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर ॥ ६०
तत्रोपस्पृश्य राजेन्द्र कृत्वा चापि प्रदक्षिणम् ।
नियतात्मा नरः पूतो गच्छेत परमां गतिम् ॥ ६१
ततो गच्छेत्कुरुश्रेष्ठ शृङ्गवेरपुरं महत् ।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा ॥ ६२
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी समाहितः ।
विधूतपाप्मा भवति वाजपेयं च विन्दति ॥ ६३
अभिगम्य महादेवमभ्यर्च्य च नराधिप ।

C. 3. 8210
B. 3. 85. 68
K. 3. 83. 68

ब्राह्मणान्भोजयित्वा तु.
— [b]) T2 G1–3 पितृ- (for पितॄन्).

**53** [a]) B4 T2 G2–4 तत्र; Dn1. n3 D5 अत्र (for ततः). K3 पुण्यजलं; T1 काळांजनं; T2 G कारंजरं. Dn1. n3 D5 नाम (for गत्वा).

**54** [a]) K1. 2 यस्मौनं; Dn1. n2 D5 योस्नातः (D5 °तं); G1 योस्नाकं; M योत्मानं (for आत्मानं). Dn D5 स्नाप°; T2 G2–4 तार° (for साध°). — [b]) T1 काळांजने; T2 G कारंजरे. — [c]) Ś1 K1. 2 महीयेत्स; S स पूज्येत (for महीयेत). K4 D1–3 महीयते स्वर्गलोके.

**55** [b]) K1. 2 नरोत्तमः (for विशां पते). — [d]) Ś1 K1. 2 B4 Dn D1. 5 सर्व- (for नदीं). K1. 2 G2 °प्रमोचिनीं; Dn D5 °प्रणाशिनीं.

**56** [a]) D1 T2 G2–4 कुर्वीत (for कुर्वाणः). — [d]) T1 लभेत् (for व्रजेत्). Ś1 K1. 2 परां सिद्धिं च गच्छति; T2 G2–4 तथा स्नानाद(G2 स्नानम)नुत्तमम्.

**57** [a]) K3. 4 D (except D4. 6) G4 धर्मज्ञ (for राजेन्द्र). — [c]) T2 G2–4 तत्र (for यत्र). K3. 4 Dc Dn D1. 2. 5 M2 नित्यं; M1 सेनो (for देवो). Ś1 K1. 2 B2 G1 °देवो (for °सेनो). D3 (*sec. m.* on pasted slip) यत्र वै चागता राजन्. — [d]) K3. 4 Dc Dn D1. 2. 5 G4 गुहः (for नित्यं). Ś1 K1. 2 विभुः; K3 Dc [ऽ]नघ; B2 स्थितः; T1 गुहः (for नृप).

**58** [a]) K3. 4 Dc Dn D1. 2 M2 तत्र गत्वा; D3 तत्र स्नात्वा; D5 तत्र तीर्थे (for पुमांस्तत्र). Dn D5 M2 नृपश्रेष्ठ. — [c]) Ś1 K1. 2 °तीर्थं समासाद्य. — D1. 2 om. from 58[d] up to अभिगम्य (in 59[c]). — [d]) G1 ब्रह्मचारी समाहितः (= 63[b]). — After 58, T1 ins.:

443* ततो गच्छेत राजेन्द्र तीर्थयात्रापरो नृप ।;
while G1 ins.:

444* गोसहस्रमवाप्नोति फलं चैव सुपुष्कलम् ।

**59** D1. 2 om. up to अभिगम्य (cf. v.l. 58). — [a]) K4 D3 M2 °वृत्तो (for °वृत्य). D3 (*sec. m.* on a pasted slip) तत्र चैव वसित्वा तु. — [b]) K3 D4. 6 श्रेष्ठ° (for ज्येष्ठ°). — B3 om. 59[cd].

**60** [a]) T2 G2–4 यत्र (for तत्र). Dc ह्रदो; Dn D5 कूपे (for कूपो). — [b]) B3 Dn1. n2 D5 विश्रुता. — [c]) B Dc D4. 6 M यत्र; T1 तस्य (for तत्र).

**61** G4 om. 61. — [b]) K4 D2 G1 M2 चाभि-; D1. 2 M1 चैव; D4 वापि (for चापि). Ś1 K1. 2 Dn D5 पितृदेवार्चने रतः; K3 Dc ब्रह्मचारी समाहितः (= 63[b]). — [c]) Ś1 K1. 2 प्रीतो; D3 कृत्वा (for पूतो). — [d]) Ś1 K1. 2 गच्छेच्च (for °त).

**62** [a]) Ś1 K1. 2 गच्छेच्च धर्मज्ञ; K4 B2 D1–3 °नरश्रेष्ठ; Dn D5 T2 G2–4 °त राजद्र. — [b]) Ś1 K1 शृंगवीरपुरं; T G शृंगिबेर°; M शृंगिवेर°. Ś1 K1–3 Dc D4. 6 प्रति (for महत्). — [c]) Ś1 K1. 2 तीर्थे (for तीर्णो). B1 M1 °प्राज्ञ; B3 °प्राज्ञो (for °राज). — After 62, Dn D5 ins.:

445* तस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते ।

**63** [b]) K1 B Dc D4. 6 जितेंद्रियः (for समा°). — After 63, B Dc Dn D4. 6 ins.:

446* ततो मुञ्जवटं गच्छेत्स्थानं देवस्य धीमतः ।
[Cf. 3. 82. 79[ab].]

**64** [b]) K3. 4 D1–4. 6 समभ्यर्च्य (for अभ्यर्च्य च). K4 T2 G2–4 यथाविधि (for नरा°). Ś1 K1. 2 Dn D5 अभिवाद्य च भारत. — [c]) K4 D1–3 S (except T1) °कृत्वा (for

C. 3. 8211
B. 3. 85. 68
K. 3. 83. 68

प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥ ६४
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ।
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ६५
लोकपालाश्च साध्याश्च नैर्ऋताः पितरस्तथा ।
सनत्कुमारप्रमुखास्तथैव परमर्षयः ॥ ६६
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ॥ ६७
सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ६८
तत्र त्रीण्यग्निकुण्डानि येषां मध्ये च जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥ ६९
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्धं संगता लोकपावनी ॥ ७०
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः ॥ ७१
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ७२
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ।
प्रजापतिमुपासन्ते ऋषयश्च महाव्रताः ।
यजन्ते क्रतुभिर्देवास्तथा चक्रचरा नृप ॥ ७३
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ।
प्रयागः सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ॥ ७४

---

°वृत्य). — After 64, Ś1 K B2. 4 Dc Dn D3. 5 ins.:

447* तस्मिंस्तीर्थे तु जाह्नव्यां स्नात्वा पापैः प्रमुच्यते ।

[Ś1 K1. 2 च (for तु). B2 नरः कुप्यां; Dc नर कूर्च्यं (Dc2 °र्ज्यं) (for तु जाह्नव्यां).]

**65** $^{b}$) K3 ऋषिसंश्रुतं; D1. 2 °भिष्टुतं; S (except M1) °भिः स्तुतं.

**66** $^{a}$) K3 B Dc D4. 6 M2 सिद्धाश्च. — $^{b}$) B D4. 6 नियताः; M1 निरताः (for नैर्ऋताः). K3. 4 Dc Dn D1–3. 5 T G M2 पितरो लोकसंमताः (T2 G °सत्तमाः). — $^{d}$) K1–3 S तत्रैव. B D4. 6 च महर्षयः; T2 भरतर्षभ and परमर्षयः also (as in text).

**67** G4 om. 67. — $^{b}$) Ś1 K1–3 Dn D5 [ऽ]मलाः; Dc गणाः (for ऽपरे). — $^{c}$) T2 G2. 3 सुपर्णनागा° (for नागाः सुपर्णा°). B1 सरितः सागराश्चैव (=68$^{a}$). — $^{d}$) K B2–4 Dc D4. 6 चक्रध(K4 °व)रा°; D1. 2 च प्रवरा°; M1 च खचरा° (for चक्रचरा°). B1 तथा ब्रह्मर्षयोपरे (=67$^{b}$); T G1–3 M2 सिद्धाश्च परमर्षयः.

**68** $^{a}$) Ś1 K3. 4 Dc D1–3 M1 शैला (for चैव). — $^{b}$) Dn D5 [अ]पि च (for तथा). — D3 om. 68$^{c}$–69$^{d}$.

**69** D3 om. 69 (cf. v.l. 68). — $^{a}$) K4 D1. 2 S (except M1) त्रीणि चाप्यग्नि(K4 D1. 2 °त्र)कुंडानि. — $^{b}$) Dn3 T2 G2–4 तेषां (for येषां). K4 B1. 2. 4m Dn1. n2 D1. 2. 5 T1 G1 M मध्येन; Dc मध्ये तु (for मध्ये च). — $^{c}$) K1 T G2–4 अपि (for अभि-). K4 B1. 3. 4 Dc Dn D1. 2. 5 वेगेन (Dc प्रयागं) समतिक्रांता. — D1. 2 om. 69$^{d}$–70$^{a}$.

**70** D1. 2 om. 70$^{a}$ (cf. v.l. 69); K3 om. 70. — $^{a}$) Ś1 K1. 2 यत्र; K4 Dn D3. 5 S देवी (for तत्र). — $^{b}$) D1. 2 सर्व- (for त्रिषु). — D1. 2 om. 70$^{cd}$. — $^{c}$) M2 समागता महाभागा. — D5 om. 70$^{d}$–71$^{a}$. — $^{d}$) Ś1 संमिता; K1. 2 सस्मिता; S सततं (M2 यमुना). B3. 4 Dc लोकभाविनी; D3 °भावनी.

**71** D5 om. 71$^{a}$ (cf. v.l. 70). — $^{a}$) Ś1 K1. 3. 4 Dc2 D3. 6 मध्ये; T1 सार्धं (for मध्यं). — $^{b}$) Dc पृथिवी- (for पृथिव्या). — $^{c}$) K1 B2 Dn1. n3 D4–6 °स्थानम् (for °स्यान्तम्). — $^{d}$) K3. 4 Dc D1–3 मुनयो (for ऋषयो).

**72** $^{a}$) K4 D1. 2 प्रयागे; D3 प्रयोगे. K2 अप्रति°; K3 D1–3 T1 M2 संप्रति°; G4 सुप्रति°. — $^{b}$) B Dc1 D6 M1 उभौ (for तथा). — $^{c}$) Ś1 K1. 2 चैषा (for चैव). K3. 4 Dc D1–3 भोग(K3 तोय-; D3 भग)वत्यपि या चैषा. — $^{d}$) K3 वेदिरेका; K4 D (except D4. 6) वेदिरेषा; S नदी प्रोक्ता (for वेदी प्रोक्ता). B1. 2. 4 M2 °पते (for °पतेः).

**73** $^{a}$) Ś1 K1. 2 ततो; T2 G2–4 यत्र (for तत्र). D1. 2 T2 G2–4 M2 देवा° (for वेदा°). K4 transp. वेदा° and यज्ञा°. — $^{c}$) K2 °संति; B Dc D4. 6 T G3 M2 °संत (for °सन्ते). — $^{d}$) Ś1 K1. 2 M1 मुनयश्च. Dn D5 तपोधनाः. — $^{f}$) K1–3 B D (except D3. 5) °धरा; M °परा (for °चरा). Dn D5 G1 नृपाः (for नृप). T1 तथा चक्रुर्नराधिपः.

**74** $^{a}$) B2 Dn D5 T1 नाम (for नास्ति). — $^{c}$) N (except D1–3) प्रयागं; M2 °गे. — $^{d}$) K2 B D (except D1–3. 6) प्रवदंत्यधिकं. Ś1 बभौ; K1. 2 T2 G2–4 प्रभो; K4 भवेत्; D1. 2 भुवि (for विभो).

**75** $^{a}$) Dn D5 G2 गमनात्तस्य. K4 श्रवणाच्च प्रयागस्य. — $^{c}$) Ś1 K1 B2–4 Dc Dn1 मृत्तिकालभनात्; B1 Dn2. n3

श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि ।
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ॥ ७५
तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः ।
पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः ॥ ७६
एषा यजनभूमिर्हि देवानामपि सत्कृता ।
तत्र दत्तं सूक्ष्ममपि महद्भवति भारत ॥ ७७
न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ७८
दश तीर्थसहस्राणि षष्टिकोट्यस्तथापराः ।
येषां सांनिध्यमत्रैव कीर्तितं कुरुनन्दन ॥ ७९
चातुर्वेद्ये च यत्पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसंगमे ॥ ८०
तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ।
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधमवाप्नुयात् ॥ ८१
तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ।
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ८२
यत्र गङ्गा महाराज स देशस्तत्तपोवनम् ।
सिद्धक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ ८३
इदं सत्यं द्विजातीनां साधूनामात्मजस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च ॥ ८४
इदं धर्म्यमिदं पुण्यमिदं मेध्यमिदं सुखम् ।
इदं स्वर्ग्यमिदं रम्यमिदं पावनमुत्तमम् ॥ ८५

C. 3. 8242
B. 3. 85. 99
K. 3. 83. 99

---

D1. 2. 4. 6 मृत्युकालभयात्. B1 Dn D5 चापि (for वापि). — $^{d}$) B D4. 6 सर्वपापैः; D3 सर्वपापात्; M1 नरः पापैः.

**76** Dn1 om. 76. — $^{b}$) Ś1 K1. 2 Dn (Dn1 om.) D5 लोकविश्रुते; D1-3 शंसितव्रतः; G4 सागरस्य च; M1 स श्रितव्रतः. — $^{c}$) Ś1 K Dc D1-3 तुल्यं (for पुण्यं). K3. 4 Dc D1. 2 T G1. 3. 4 M फलमवाप्नोति; B D4. 6 सु(B2 स)-महदा°; D3 रूपमवा° (for स फलमा°).

**77** $^{b}$) Ś1 K1. 2 Dn D3. 5 M2 अभि- (K1 अपि also as in text); M2 इति. Ś1 K4 Dn D5 संस्कृता; D3 संमता (for सत्कृता). — $^{c}$) K3. 4 D1-3 यत्र दत्तं; B1-3 Dn3 D4. 6 दत्तं तत्र (by transp.); B4 Dc S (except G4) अत्र दत्तं. B Dn3 D4. 6 स्वल्पमपि; S (except M1) हि (T1 G1 M2 सु-) सूक्ष्मं च.

**78** Stanza recurs (sometimes with v.l.) in many of the Purāṇas *e.g.* Agni, Padma, Matsya, Kūrma, etc. — $^{a}$) B1. 3 T2 G3 देव° (for वेद°). — $^{d}$) B D1-4 प्रयागे (for प्रयाग-). K2 -शरणं; B4 (m as in text) S -गमनं (for -मरणं). D3 प्रयागेष्वेव वै प्रति. Cf. Kshetreśachandra Chaṭṭopādhyāya, *Jour. of the U.P. Hist. Society*, vol. 10, pp. 65 ff.

**79** $^{b}$) Ś1 K2. 3 B Dn D5 षष्टिः (B3 शत-); M1 दश- (for षष्टि-). — $^{c}$) Ś1 K1. 2 येषां तत्रैव सांनिध्यं.

**80** D3 om. (hapl.) 80-82. — $^{a}$) Ś1 T चातुर्वैद्ये च; K3 D1. 2 चतुर्वेदेषु; K4 B2-4 Dc Dn D4-6 चा(D5. 6 च)-तुर्विद्ये च (K4 °द्येषु); B1 सर्ववेदेषु; G1. 3 M1 चातुर्वैद्ये च; G2 चातुर्वेद्या च; G4 M2 चातुर्वेद्य च. — $^{c}$) T2 G2-4 तत्र (for एव).

**81** D3 om. 81 (cf. v.l. 80). — $^{a}$) B D4. 6 ततो (for तत्र). — $^{d}$) Ś1 K1. 2 om. सः. K3 D (except D4. 6; D3 om.) S (except M1) °फलं लभेत् (for °मवाप्नुयात्).

**82** D3 om. 82 (cf. v.l. 80). — $^{a}$) Ś1 K1. 2 ततो; G1 यत्र (for तत्र). T2 G2-4 गंगा°; G1 °प्रभवनं. — $^{d}$) K2. 3 B2 T1 गंगायाः. — After 82, K1. 2 B Dc Dn D4. 6 ins. a passage given in App. I (No. 13).

**83** $^{c}$) K4 Dn1 D1. 2. 6 S सिद्धि- (G2 °द्धिं) (for सिद्ध-). K3. 4 B D T1 G1 M च (for तु). B1. 2. 4 D4. 6 विज्ञेयं; T2 G2-4 तत्रैव (for तज्ज्ञेयं). — $^{d}$) Ś1 K1. 2 °तीर्थ-; K3 G4 °तीरं (for °तीर-). — After 83, T2 G2-4 M2 read 86$^{cd}$, all MSS. except M2 *repeating* it in its proper place.

**84** $^{a}$) T2 G3 सर्वं (for सत्यं). — $^{b}$) T2 G2-4 आत्मनोपि (for आत्मजस्य). Ś1 K D3 वा; T2 G2-4 यत् (for च). — $^{c}$) B Dc D4. 6 सूक्तं चैव (for सुहृदां च). D1. 2 M1 वा (for च). T G समेतानां (for जपेत्कर्णे). D3 सुहृदां सत्यशीलानां. — $^{d}$) D1-3 वा (for च). Ś1 K1. 2 शिष्यायानुगताय च.

**85** $^{a}$) K3. 4 B D धन्यम्; T2 G3. 4 धर्मम्; M सत्यम् (for धर्म्यम्). Ś1 K B2-4 D M2 मेध्यम् (K1 वापि); B1 M1 स्वर्ग्यम् (for पुण्यम्). — $^{b}$) Ś1 K B4 Dc Dn D2-6 M2 स्वर्ग्यम्; B2. 3 स्वर्गम्; T1 सत्यम् (for मेध्यम्). Dn D5 अनुत्तमं (for इदं सुखम्). D1. 2 इदं स्वर्गस्य वै सुखं. — G4 om. 85$^{cd}$. — $^{c}$) N इदं पुण्यमिदं (B1. 2. 4 °रम्यं; D4. 6 °तरं). B2 M2 धर्म्यम्; T2 G1-3 राजन् (for रम्यम्).

C. 3. 8242
B. 3. 85. 100
K. 3. 83. 100

महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ।
अधीत्य द्विजमध्ये च निर्मलत्वमवाप्नुयात् ॥ ८६
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं सदा शुचिः ।
जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ ८७
गम्यान्यपि च तीर्थानि कीर्तितान्यगमानि च ।
मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥ ८८
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च श्रितानि सुकृतैषिभिः ॥ ८९
एवं त्वमपि कौरव्य विधिनानेन सुव्रत ।
व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धते ॥ ९०
भावितैः कारणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात् ।
प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः ॥ ९१
नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ९२
त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना ।
पितरस्तारितास्तात सर्वे च प्रपितामहाः ॥ ९३
पितामहपुरोगाश्च देवाः सर्षिगणा नृप ।
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ॥ ९४
अवाप्स्यसि च लोकान्वै वसूनां वासवोपम ।
कीर्तिं च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीम् ॥ ९५

नारद उवाच ।

एवमुक्त्वाभ्यनुज्ञाप्य पुलस्त्यो भगवानृषिः ।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ९६
भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान् ।

---

— d) N M2 पावनं धर्म्यं( K1. 3. 4 Dc D4 धर्म-; B2 रम्य )-मुत्तमं.

**86** a) B1. 4 ( *sup. lin.* as in text ) ग्राह्यं; S (except T1 M1) पुण्यं (for गुह्यं). — b) T2 G2–4 °प्रणाशनं. — M2 reads $86^{cd}$ after 83; T2 G2–4 read it (for the first time) after 83, *repeating* it here. — c) Ś1 D1. 2 तु (for च). — d) K3. 4 D (except D4) निर्मलः स्वर्ग( Dc सुख )माप्नुयात्. — After 86, B Dc (om. line 4) Dn D4. 6 ins.:

448* श्रीमत्स्वर्ग्यं तथा पुण्यं सपत्नशमनं शिवम् ।
मेधाजननमग्र्यं वै तीर्थवंशानुकीर्तनम् ।
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
महीं विजयते राजा वैश्यो धनमवाप्नुयात् ।
शूद्रो यथेप्सितान्कामान्ब्राह्मणः पारगः पठन् ।

**87** $87^{a}$=(var.) 1. 56. $14^{b}$. — b) Ś1 K1. 2. 4 D2. 3 तीर्थवंशं; S तीर्थं पुण्यं. Ś1 K1. 2. 4 B2 Dn D1–3. 5 नरः (for सदा). — c) B2. 4 Dc Dn D2. 6 M1 सं-; B3 D3 T G M2 च (for स). Dn3 स्मरते नित्यं; S (except M1) बह्वीः स्मरते (M2 °ति) (by transp.). — d) Ś1 K1. 2. 4 D1–3 पूज्य° (for मोद°).

**88** a) S अन्या° (for गम्या°). — b) K3 उत्तमानि; T1 G2–4 M2 आगमानि (for अग°). — c) Dn3 तात (for तानि). K3 Dc गम्यानि (for गच्छेत).

**89** G4 om. $89^{cd}$. — d) K3 भूतानि; Dn D5 M2 स्नातानि; D1. 2 G1 कृतानि; G2. 4 श्रुतानि. D3 तथा चैव कृतैषिभिः.

**90** a) Ś1 K4 D1. 2 कौंतेय (for कौरव्य). — d) Ś1 K1. 2 Dn D5 वर्धयन्; K4 °ति; D3 °येत्.

**91** a) T G1–3 भाषितैः. K4 D (except D1–3) M1 करणैः. K3 पूर्वैर्. G4 कारणैः पूर्वमासीत. — d) K3. 4 Dc Dn D3. 5 शास्त्रानु°; D4. 6 शिष्टार्थ°; D1. 2 शास्त्रानुवर्तिभिः; S शास्त्रार्थदर्शिभिः. — After 91, T2 G2–4 ins.:

449* सद्भिः शास्त्रार्थतत्त्वज्ञैर्ब्राह्मणैः सह गम्यताम् ।

**92** a) K3. 4 D (except D4. 6) T1 नाव्रती. T2 G2–4 नाकृताचारो. — K4 D1–3 transp. $92^{b}$ and $92^{d}$. — Ś1 om. $92^{cd}$. — d) T2 G3 क्रूर° (for वक्र°).

**93** a) G1 त्वया यत्सत्य°; M1 त्वया सम्यक्प्र°. — b) K4 B1 Dc D1–3 धर्मानुदर्शिना; B2 D4. 6 °नुवर्तिना. — c) B Dc D4. 6 तर्पितास् (for तारितास्). Ś1 तेन; K3 सर्वे; G1 ते च (for तात). Dn D5 पिता पितामहश्चैव (D5 °महा ये च); T2 G2–4 पितरस्तात सर्वे च. — d) T2 G2–4 तारिताः (for सर्वे च).

**94** c) D4. 6 transp. धर्मेण and धर्मज्ञ. — d) T2 G3. 4 °रक्षिताः.

**95** a) Dn1. n3 D3. 5 त्वं (for च). S त्वं (for वै). — b) Ś1 K1–3 Dc वासवो यथा; B D4. 6 शा( B1 श )श्वता नथ. — c) T2 G3 कीर्तिश्च महती. — d) D4. 6 भुवि प्राप्स्यसि शा°; T2 G1. 3. 4 प्राप्यते भुवि शाश्वती.

**96** K3 om. 96. — a) Ś1 K1. 2 [अ]पि; T1 M2 हि (for [अ]भि-). Ś1 K1. 2 Dc Dn D5 -[अ]नुज्ञाय; S (except M2) -[अ]नुज्ञातः (for -[अ]नुज्ञाप्य). — c) T2 G2–4 पश्यतामेव सर्वेषां.

पुलस्त्यवचनाच्चैव पृथिवीमनुचक्रमे ॥ ९७
अनेन विधिना यस्तु पृथिवीं संचरिष्यति ।
अश्वमेधशतस्याग्र्यं फलं प्रेत्य स भोक्ष्यते ॥ ९८
अतश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम् ।
नेता च त्वमृषीन्यस्मात्तेन तेऽष्टगुणं फलम् ॥ ९९
रक्षोगणावकीर्णानि तीर्थान्येतानि भारत ।
न गतिर्विद्यतेऽन्यस्य त्वामृते कुरुनन्दन ॥ १००
इदं देवर्षिचरितं सर्वतीर्थार्थसंश्रितम् ।
यः पठेत्कल्यमुत्थाय सर्वपापैः प्रमुच्यते ॥ १०१
ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ काश्यपः ।
आत्रेयस्त्वथ कौण्डिन्यो विश्वामित्रोऽथ गौतमः ॥
असितो देवलश्चैव मार्कण्डेयोऽथ गालवः ।
भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा ॥ १०३
शौनकः सह पुत्रेण व्यासश्च जपतां वरः ।
दुर्वासाश्च मुनिश्रेष्ठो गालवश्च महातपाः ॥ १०४
एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः ।
एभिः सह महाराज तीर्थान्येतान्यनुव्रज ॥ १०५
एष वै लोमशो नाम देवर्षिरमितद्युतिः ।

C. 3. 8266
B. 3. 85. 123
K. 3. 83. 123

---

**97** $^{b}$) K3 °दर्शनः; K4 B1 (m as in text). 3. 4 D1–4. 6 T1 M1 °दर्शनात्. — $^{c}$) Ś1 K1. 2 °दर्शनादेव. — $^{d}$) Ś1 K D1–3 उपचक्रमे (K3 संचरिष्यति); Dn D5 परिचक्रमे. — After 97, B Dc Dn D4. 6 ins.:

450* एवमेषा महाभागा प्रतिष्ठाने प्रतिष्ठिता ।
तीर्थयात्रा महापुण्या सर्वपापप्रमोचनी ।

[(L. 1) B1. 3 Dc °राज; B2. 4 Dn3 D6 °भाग (for °भागा).]

**98** K3 om. (hapl.) 98$^{ab}$. — $^{b}$) Ś1 K1. 2 पृथिव्यां. K1 B Dc D6 पर्यटिष्यति. — $^{c}$) Ś1 K1. 2 °सहस्राग्र्यं; K3 B2 Dn D5 T1 G1 °शतं साग्रं; K4 B1 °शतस्याग्रं; Dc °शतं चान्यत्; T2 G2–4 °फलं ग्रामं (G3 साग्रं; G4 सांद्रं); M2 °फलस्याग्र्यं. — $^{d}$) Ś1 K1 पुण्यं (for फलं). K3 G4 प्रेत्य च; D5 (by transp.) स प्रेत्य; T1 च प्रेत्य; T2 G3 प्रेत्येह; G1 M1 संप्रेत्य; G2 प्राप्य च. B2 Dn D5 M1 भोक्ष्यति.

**99** $^{a}$) K2. 3 अथ; B D (except D1–3) T G2–4 ततश्च (for अतश्च). — After 99$^{ab}$, K1. 2 B2–4 Dc Dn D4. 6 ins.:

451* भीष्मः कुरूणां प्रवरो यथा पूर्वमवासवान् ।

— $^{c}$) Ś1 K1. 4 नेता तु; D1. 2 तेन चेत्; M2 नेतासि (for नेता च). D5 एतान् (for यस्मात्). T G ऋषीन्नं (T2 G3 ऋषिनें)तासि यस्मात्त्वं. — $^{d}$) Ś1 K1. 2 त्वष्ट°. K1 लभेत्; D1. 2. 4 स्मृतं (for फलम्).

**100** $^{a}$) N (except D1–3) M1 °गणविकी°. — $^{c}$) K3. 4 Dn D1–4 न गतानि मनुष्येन्द्रैः; S (except M1) अगम्यानि मनुष्यैस्तु.

**101** $^{b}$) Ś1 K1 °र्थसंभृतं; K2 °भिसंभृतं; K3 Dc D3. 5 °भिसंश्रितं; K4 °भिसंस्रुतं; B2. 3 °नुसंश्रितं; Dn D1. 2 °भिसंवृतं; T1 °नुचिंतनं; T2 G °नुसंचितं; M1 °र्थसंश्रयं; M2 सर्वतीर्थसमन्वितं. — $^{c}$) Ś1 B1 D1 T1 प्रातरु; K1 Dn3 कल्य; K3. 4 D2. 6 G1 M काल्यम् (for कल्यम्). T2 G2–4 श्रृणुयाद्वा (G4 °च्चा)पि (for कल्यमुत्थाय). — $^{d}$) T2 G3. 4 सोपि (for सर्व-).

**102** $^{a}$) T2 G2. 3 ऋषिर्व्यासः (for ऋषिमुख्याः). Ś1 K1. 2 M कोहंड (M1 कहोळो; M2 कोहळो) देवशर्मा च. — $^{b}$) G4 om. तु. Ś1 K1. 2 कपणस्तथा; K4 Dn D1–3. 5. 6 त्वथ कश्यपः; B1 त्वथ कौशिकः; M1 काश्यपस्तथा. — K3 om. 102$^{c}$–103$^{d}$. — $^{c}$) Ś1 K (K3 om.) Dc Dn D2. 3. 5 M1 आत्रेयः कुंड (M1 कण्व) जठरो (= 1. 48. 8$^{c}$); D1 आत्रेयकुंडजठरौ. — $^{d}$) M च (for [अ]थ). Ś1 K (K3 om.) D1–3 रुरुः काश्यप एव च (Ś1 K1. 2 उच्यते).

**103** K3 om. 103 (cf. v.l. 102). — $^{b}$) Ś1 K1 मार्कंडेयोथ. Ś1 K1. 2 D1. 2 गौतमः. — D3 om. 103$^{c}$–104$^{b}$. K4 D1. 2 transp. 103$^{cd}$ and 104$^{ab}$. — $^{c}$) K4 D1. 2 भार° (for भर°). Ś1 K1. 2 च धर्मात्मा (for वसि°). S (except M1) वसिष्ठश्च महातेजाः. — $^{d}$) S औद्दालकिस (T2 G3 °लिकस; G4 °लकस) (for उद्दालकस).

**104** D3 T2 G2–4 om. 104$^{ab}$ (for D3 cf. v.l. 103). K4 D1. 2 transp. 103$^{cd}$ and 104$^{ab}$; K3 transp. 104$^{ab}$ and 104$^{cd}$. — $^{b}$) B Dn D4–6 तप°; Dc वद° (for जप°). — $^{c}$) K3 T1 G1 M2 भ (M2 भा) रद्वाजो; T2 G2–4 शौनकोथ (G4 °कश्च) (for दुर्वा°). — $^{d}$) K3 B Dc Dn D4–6 जाबालिश्च; K4 D3 गौतम°; T1 G1. 3. 4 M2 दुर्वासा°; T2 G2 संवर्त°. — After 104, K3 ins.:

452* वशिष्ठश्च मुनिश्रेष्ठो दुर्वासाश्च महातपाः ।

**105** $^{a}$) M1 [ऽ]प्यृषि° (for ऋषि°). — $^{c}$) Ś1 K1. 2 एतैः सह. B Dc D4. 6 महाभाग.

**106** $^{a}$) Ś1 चो; K3 B D (except D1–3) ते (for वै). T2 G3 लोकदेवानां; G2. 4 देवलोकानां (for लोमशो नाम). — $^{b}$) Ś1 K1. 2 B Dn D5 महर्षिर्. — $^{c}$) K3. 4 B2 Dc

C. 3. 8267
B. 3. 85. 123
K. 3. 83. 123

समेष्यति त्वया चैव तेन सार्धमनुव्रज ॥ १०६

मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज ।
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः ॥ १०७

यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ १०८

यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव ॥ १०९

यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महातेजास्तथा त्वमपि विश्रुतः ॥ ११०

यथा च वृत्रहा सर्वान्सपत्नान्निर्दहत्पुरा ।
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि ॥ १११

स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ११२

वैशंपायन उवाच ।

एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महात्मानं तत्रैवान्तरधीयत ॥ ११३

युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रयं पुण्यमृषीणां प्रत्यवेदयत् ॥ ११४

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

D1–3 M2 त्वया राजन्; Dn D4. 5 T G महाराज; M1 त्वया सार्धं (for त्वया चैव). — d) M1 चैवम् (for सार्धम्). T2 G2–4 लोमशः सुमहातपाः.

**107** B2 om. $107^{ab}$. — a) Dn D5 मयापि; T2 G2–4 एतेन (for मया च). — b) Ś1 K2 °क्रमं; K3. 4 D3 °क्रम; Dn D5 °क्रमात् (for °व्रज). — T2 G3 om. $107^{cd}$. — c) Ś1 K1. 2 परमां (for महतीं). T1 G1 सिद्धिं (for कीर्तिं). — d) S (T2 G3 om.) महाभिषक्.

**108** a) T2 G3 तीर्थज्ञो; G2. 4 धर्मज्ञो (for धर्मात्मा). — K3 om. (hapl.) $108^{b}$–$109^{a}$. — c) Ś1 K1. 2 भरत°; B1. 2 Dn D5 त्वं राज° (for त्वं कुरु°).

**109** K3 om. $109^{a}$ (cf. v.l. 102); T2 G2–4 om. $109^{cd}$. — c) K2 सर्वराजन्यो; K3 सर्वं राजन्ये; D5 च स राजन्यो; T1 G1 M2 अपि राजेंद्र (for सर्वराजभ्यो). — d) K1. 2 B Dc2 D1. 2. 4. 6 राजसे. T1 M2 रश्मिमानिव.

**110** K1. 2 om. 110. — b) B Dn3 D4 °रथः (for °यशाः). — c) K3. 4 B Dc Dn1 D3. 6 यथा वैण्यो. Ś1 Dn D1. 2. 5 महाराज.

**111** a) K4 स; B D4. 6 वै (for च). — b) Ś1 K1. 2 व्यदहत्; K4 D1–3 S अदहत्; B Dc Dn D5. 6 निर्दहन् (for निर्दहत्). — After $111^{ab}$, N (except D1. 2) ins.:

453* त्रैलोक्यं पालयामास देवराड्विगतज्वरः ।

— d) K3. 4 B D M त्वं प्रजाः (by transp.); T2 G2–4 प्रजाः सं°.

**112** a) Ś1 K1. 2 स्वधर्मेण विजित्योर्वीं; B1 °र्मावजितामुर्वीं; B4 °र्मेणार्जितामुर्वीं; T2 G3 °र्मविजितं सर्वं. — c) Dc कीर्तिं. Ś1 यास्यति; G1 प्राप्स्यसि. B D4. 6 वीर्येण; Dn1 T2 G3 धर्मज्ञ. M1 कर्मणा यास्यसि ख्यातिं. — d) K1. 3. 4 B1. 2 D2. 3 M °वीर्योऽर्जुनो.

**113** Ś1 K1. 2 T2 G2–4 om. the ref. — b) Ś1 K1. 2 मुनिसत्तमः (for भग°). — c) K3. 4 B Dn D3–6 M1 °राज; Dc D1. 2 G4 M2 °राजं; G1 °ज्ञानं (for °त्मानं).

**114** Ś1 om. $114^{cd}$. — c) K1. 2. 4 °मयं; K3 °श्रियं; Dn D5 T G M2 °श्रितं (G4 °श्रुतं) (for °श्रयं).

Colophon. — *Major parvan :* Ś1 K1. 2 Dn1. n2 T G2–4 M1 आरण्य. — *Sub-parvan :* T1 तीर्थयात्रा. All MSS. except T1 (om. sub-parvan name) mention only पुलस्त्यतीर्थयात्रा, followed by समाप्ता (K1 B2 D4 G1 om. समाप्ता). — *Adhy. no.* (figures, words or both): Dn1 85; Dn3 M2 (before corr.) 86; D1 89; S (M2 after corr.) 84. — *Śloka no.:* Dn1 131; Dn2 130; Dn3 133; D1 112.

## 84

**1** d) B D4 M1 इदमाह (for प्राह राजा).

**2** Before 2, B1. 3. 4 Dc D4. 6 ins. युधिष्ठिर उ°. — a) B D4. 6 तु स नर° (for स पुरुष°). — d) S (except M1) प्र° (for वि°).

**3** b) K1. 3. 4 B1. 2 Dn3 D3. 4 T2 G1. 3. 4 तपोधनः. — c) K4 भृशशास्त्रेषु; D1. 2 °मर्थेषु; D3 °मस्त्रेषु. — d) K4 D2. 3 इव प्रभो; B D4. 6 -समः प्रभुः (B2 -समप्रभः); M1 इवाजितः.

**4** a) D4 त्वेता° (for द्वेता°). — b) Ś1 K1 Dn1. n2 D5 °विघातिनौ; G4 M1 °निषू(M1 °निसू)दनौ. — d) K3

# ८४

वैशंपायन उवाच ।

भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ १
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ॥ २
स हि वीरोऽनुरक्तश्च समर्थश्च तपोधन ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ३
अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिनिघातिनौ ।
अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान् ।
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ॥ ४
नारदोऽपि तथा वेद सोऽप्यशंसत्सदा मम ।
तथाहमपि जानामि नरनारायणावृषी ॥ ५
शक्तोऽयमित्यतो मत्वा मया संप्रेषितोऽर्जुनः ।
इन्द्रादनवरः शक्तः सुरसूनुः सुराधिपम् ।
द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ॥ ६
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण वृता युधि महाबलाः ।
सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ॥ ७
योद्धुकामश्च पार्थेन सततं यो महाबलः ।
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ॥ ८
सोऽश्ववेगानिलबलः शरार्चिस्तलनिस्वनः ।
रजोधूमोऽस्त्रसंतापो धार्तराष्ट्रानिलोद्धतः ॥ ९
निसृष्ट इव कालेन युगान्तज्वलनो यथा ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः ॥ १०
तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान् ।
श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोज्ज्वलः ॥ ११

C. 3. 8288
B. 3. 86. 12
K. 3. 84. 12

---

S यथा (for तथा). $K_{3.4}$ $D_3$ T G परंतपौ ($T_2$ $G_3$ °पः). — $^e$) $T_1$ $G_{2.4}$ M त्रियुगं.

**5** $^a$) $D_1$ $T_2$ $G_{3.4}$ यथा (for तथा). $Ś_1$ वेदात् (for वेद). — $^b$) $K_3$ $Dn_1$. $n_2$ $D_6$ यो° (for सो°). $T_2$ $G_{2-4}$ तथा (for सदा). — $^c$) $T_1$ $G_1$ $M_2$ यथा (for तथा). $Ś_1$ $K_{1.2}$ ताव् (for [अ]हम्). $K_4$ $D_{1.2}$ $T_1$ अभि- (for अपि).

**6** $^a$) B Dc $D_{4.6}$ श(B स)र्वमाराधयस्वेति. — $^b$) $K_{1.2.4}$ $B_{3.4}$ Dc $Dn_1$. $n_2$ $D_{1.4.5}$ $G_4$ स; $T_1$ तु (for सं-). — $^c$) $Ś_1$ इंद्रारुणवरः; $K_4$ $D_2$ S °दनवमः. $Ś_1$ $K_3$ Dc शक्रः; $K_2$ $Dn_1$. $n_2$ $D_{1-3}$ शक्रं. — $^d$) $B_{1-3}$ $D_{4.6}$ °पुत्रः (for °सूनुः).

**7** $^b$) B सु- ($B_4$ स); $M_1$ तु (for च). $Ś_1$ $K_{1.2}$ $G_1$ दुर्जयौ; $M_2$ °याः. — $^d$) $B_3$ $G_1$ धृता युधि; $T_2$ (before corr.) सुवृताः सु-; $T_2$ (after corr.) $G_3$ सुकृताः सु-; $G_2$ सुधृताः सु-; $G_4$ सुव्रताः सु-. $Ś_1$ K D (except $D_{4.6}$) महारथाः. — $^f$) $K_3$ $D_{1-3.5}$ $M_1$ सर्वास्त्रकुशलाः; B $D_4$ सर्वेस्त्रविदुषः; Dn $D_6$ सर्वास्त्रविदुषः; $T_2$ $G_3$ सर्वे सुकुशलाः. $K_{3.4}$ Dc $D_{1-3}$ रणे; $G_2$ तदा (for तथा). — After 7, S (except $G_{1.3}$) ins.:

454* सर्वे महारथाः ख्याताः सर्वे जितपरिश्रमाः ।

[$T_2$ मुख्याः (for ख्याताः). $G_4$ सर्वे रथिमहामुख्याः (for the prior half). $G_2$ सर्वेमितपराक्रमाः (for the posterior half).]

**8** $^a$) $Ś_1$ $K_{1-3}$ B Dc Dn $D_{5.6}$ T $G_{1.3.4}$ °कामाश्च; $K_4$ $D_{1.2}$ °कामस्तु; $D_3$ °कामः स. — $^b$) $K_2$ B Dc Dn $D_{4-6}$ $T_2$ $G_{1.3}$ ये (B Dc $D_{4-6}$ $T_2$ [by corr.] ते; $G_1$ वै) महाबलाः. — Dc om. $8^c$–$10^d$; $D_2$ om. (hapl.) $8^c$–$9^a$. — $^c$) $D_3$ $M_1$ सर्व- (for स च). — $^d$) $Ś_1$ $K_{1.2}$ °मनाः; $K_3$ $B_3$ °बलः (for °रथः).

**9** Dc om. 9; $D_2$ om. $9^a$ (cf. v.l. 8). — $^a$) K B $Dn_2$ $D_{1.3-6}$ $T_2$ $G_3$ सोस्त्र°; $Dn_1$. $n_3$ योस्त्र°. — $^c$) $Ś_1$ B $D_{4.6}$ $G_1$ °धूमास्त्र-; $K_3$ °धूम्रोस्त्र-. B Dn $D_{4-6}$ $M_2$ -संपातो; $K_2$ -संत्रासो.

**10** Dc om. 10 (cf. v.l. 8). — $^b$) $K_4$ B D (Dc om.) S (except $G_{2.4}$) युगांते ज्व°. $Ś_1$ K $B_{1.2}$ D (Dc om.) $M_2$ महान् (for यथा). — $D_{1.2}$ om. (hapl.) $10^c$–$11^b$. — $^d$) S (except $M_1$) महाबलः (for न संशयः).

**11** $D_{1.2}$ om. $11^{ab}$ (cf. v.l. 10). — $^a$) $Ś_1$ $K_{1.2}$ स च (for तं स). — $^b$) Dn °ज्वलनो (for °जलदो)! — $^c$) $Ś_1$ $K_1$ बलाकाभिर्; $K_2$ °भ्यो; $K_3$ °भो; Dc °वान्; $D_{1.2}$ $M_1$ °धृग्; $D_3$ °सृग्; $D_5$ °श्र. — $^d$) $Ś_1$ °ज्वलं; $B_{1.2}$ $Dn_1$ $D_4$ °ल्वणः; $B_3$ °र्जुनः; $D_3$ °ज्वरः.

**12** $^a$) $Ś_1$ $K_{2-4}$ Dn $D_{1-3}$ $M_1$ संरब्धः; $K_1$ B Dc $D_{4.6}$

C. 3. 8288
B. 3. 86. 13
K. 3. 84. 13

सततं शरधाराभिः प्रदीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ १२
स साक्षादेव सर्वाणि शक्रात्परपुरंजयः ।
दिव्यान्यस्त्राणि बीभत्सुस्तत्त्वतः प्रतिपत्स्यते ॥ १३
अलं स तेषां सर्वेषामिति मे धीयते मतिः ।
नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया ॥ १४
तं वयं पाण्डवं सर्वे गृहीतास्त्रं धनंजयम् ।
द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति ॥ १५
वयं तु तमृते वीरं वनेऽस्मिन्द्विपदां वर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ १६
भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः ॥ १७
यत्र कंचिद्वयं कालं वसन्तः सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वीरं वर्षकामा इवाम्बुदम् ॥ १८
विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः परिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ १९
आचक्ष्व न हि नो ब्रह्मन्रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥

इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

# ८५

वैशंपायन उवाच ।
तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ १
ब्राह्मणानुमतान्पुण्यानाश्रमान्भरतर्षभ ।

---

सं(D6 स)वर्षन्; D5 संनद्धः; M2 सततः. — b) Dn D5 सुदीप्तं. — c) N अर्जुनोदीरितो मेघः. — d) Ś1 K1. 2 [अ]संशयं (for संयुगे).

**13** a) Ś1 K1. 2 T1 M2 इव (for एव). Dc कार्याणि (for सर्वाणि). K4 साक्षादेव स स°; D3 साक्षादेवस्य स°. — Ś1 om. (hapl.) from शक्रात् up to अस्त्राणि. — d) Dn D5 ततश्च; S यथावत् (M1 संयतः) (for तत्त्वतः).

**14** c) D1. 2 नास्मिन् (for नास्ति). Ś1 त्वतिकृते; K1 तत्वकृता; K2. 4 B D त्वति(D1. 2 अति°; D3 त्ववि)कृता; K3 त्वनिकृतौ; T1 त्वयि क्रिया; M1 त्वत्र क्रिया (for त्वतिक्रिया). Ś1 K B1. 3 D2. 3. 5 नाम (K1 तात); B2. 4 Dn D1. 4. 6 [अ]र्थानां; Dc [अ]स्त्राणां (for तस्य).

**15** a) B3 Dn1. n2 D1–3 ते वयं (B3m तत्त्वयं) (for तं वयं). T1 द्रष्टुमिच्छामः (for पाण्डवं सर्वे). — b) K3. 4 D (except D4. 6) अरिंदमं (for धनं°).

**16** b) MSS. वरः, वरं also (for वर). — c) T G2. 3 अवसानं (for °धानं). T1 पश्यामः (for गच्छा°).

**17** a) G2. 4 यद्यद् (for अन्यद्). M1 तस्माद् (for साधु). — b) S ब्रह्माढ्यं (T1 ब्रह्मण्यं) (for बह्वन्नं). S (except M1) जल° (G1 बल°) (for फल°). K3 B3. 4 D1 T1 G3 M2 शुचिः. — c) Ś1 K1. 2 तु; K4 ते; D3 मे; D6 वा; M1 नः (for च).

**18** a) Ś1 क्वचिद्; K3 कं च; B2. 3 Dn2 D3 G1. 2 किंचिद् (for कंचिद्). — c) K4 M1 °क्षेमा°; G2. 4 °क्षामा° (for °क्षामो°). — d) Ś1 K4 वस्तुकामाः; K1 वनि°; K3 वन्नु°; Dc वर्षाकाले; Dn D1 वृष्टिकामा; D2. 3 M वसु°; D5 वसु°.

**19** b) Ś1 B1 Dn D3. 5 M2 प्रति° (for परि°). T1 द्विजातिजनविश्रुतान्; M1 सर्वदिग्भ्यः परि°.

**20** a) K4 B1. 4 D (except D4–6) मे (for नो).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T G M1 आरण्य. — *Sub-parvan:* K4 B1. 2 Dc Dn2 D4 G1 M2 तीर्थयात्रा; Ś1 K1–3 B3. 4 Dn1. n3 D1–3. 5 (marg. *sec. m.*) (all om. sub-parvan name) mention only धौम्यतीर्थयात्रा. — *Adhy. name:* Dc युधिष्ठिरवाक्यं. — *Adhy. no.* (figures, words or both): Dn1(*sup. lin.*). n2 86; Dn3 M2 (before corr.) 87; D1 90; S (M2 after corr.) 85. — *Śloka no.:* Dn 21.

## 85

**1** c) Dn तथा (!); T1 M ततो (for तदा).

**2** a) Ś1 K1. 2 °भिमतान्; B Dc D4. 6 °नुगतान् (for

स राजन्नाश्रमः ख्यातो भृगुतुङ्गो महागिरिः ॥ २०
यच्च भूतं भविष्यच्च भवच्च पुरुषर्षभ ।
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥ २१
तस्यातियशसः पुण्यां विशालां बदरीमनु ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ॥ २२
उष्णतोयवहा गङ्गा शीततोयवहापरा ।
सुवर्णसिकता राजन्विशालां बदरीमनु ॥ २३
ऋषयो यत्र देवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं विभुम् ॥ २४
यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च ॥ २५
तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् ।
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ॥ २६
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।
पुण्यानामपि तत्पुण्यं तत्र ते संशयोऽस्तु मा ॥ २७
एतानि राजन्पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च ॥ २८
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्ब्रह्मकल्पैश्च सेवितानि महात्मभिः ॥ २९
चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां विजहिष्यसि ॥ ३०

C. 3. 8406
B. 3. 90. 34
K. 3. 88. 33

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

B Dc D2. 4 तत्र (for यत्र). — b) Ś1 K1–3 °संवृतः; B Dn D4. 5 °सेविते; Dc °संवृते; G4 °पूजितः. — c) Dn D5 राजन्स (by transp.). Ś1 K1–3 नामतः (for आश्रमः). — d) B Dc D4. 6 °तुंगे °गिरौ; T1 G1 M °तुंदो °गिरिः.

**21** a) K3 B Dn D1. 3–6 M यः स; Dc D2 T1 यः सं- (for यच्च). K3 B Dc D3. 4. 6 भविष्यं च. — b) K3 भविष्यत् (for भवच्च). B Dn D4–6 T1 G1 M भरत° (for पुरुष°). — K1 om. 21cd. — c) B D4. 6 विभुर्; Dc भृगुर्; T1 परं (for प्रभुर्). T2 G2. 3 जिष्णुः (for विष्णुः).

**22** K4 D3 G1 om. (hapl.) 22c–23d. — d) S (G1 om.) भारत (for विश्रुतः).

**23** K4 D3 G1 om. 23 (cf. v.l. 22). — ab) D1 transp. उष्ण- and शीत-. T2 G2–4 M2 कृष्ण° (for उष्ण°). T2 (before corr.) G2. 4 श्वेत° (for शीत°). Ś1 K1. 2 B Dn D1. 4. 6 T2 G2. 3 पुरा; G4 वरा; M2 च या (for [अ]परा).

**24** D3 reads 24–27ab after 3. 89. 11c. — a) Ś1 K1. 2 [ऽ]त्र हि (for यत्र). — b) Ś1 K1. 2 [अ]मितौ° (for महौ°). — c) G2. 4 प्राप्ता (for प्राप्य). D1. 2 तं च (for नित्यं). B2 D4. 6 नमंति स्म; T1 G1 नमस्यंते; T2 G2–4 उपासंते. — d) B D4. 6 M1 नारायणमजं (for देवं नारा°). Ś1 K1. 2. 4 B1–3 Dc Dn D5 प्रभुं; D1 विभो; T2 G3 भुवि (for विभुम्).

**25** c) B4 Dn D1 सर्वं (for पार्थ). — 25d = 28d.

**26** a) D3 तीर्थं (for पुण्यं). Ś1 K B2. 4 D परमं (D4. 6 तत्पुनर्) (for तत्परं). — b) K3 तीर्थं च; T2 G2–4 पवित्रं (for तत्तीर्थं). — After 26ab, B Dc Dn D4. 6 ins.:

467* तत्परं परमं देवं भूतानामीश्वरेश्वरम् ।
शाश्वतं परमं चैव धातारं परमं पदम् ।
यं विदित्वा न शोचन्ति विद्वांसः शास्त्रदृष्टयः ।

— d) Ś1 K1. 2 देव (for चैव).

**27** c) K3 M2 यत् (for तत्). — d) Ś1 K Dn D1–3. 5. 6 अत्र (for तत्र). Ś1 K1. 2 मे; B2 वा (for मा). S मा भूत्ते संशयोत्र वै.

**28** c) Ś1 K1. 2 कुरु° (for नर°). — K3 om. 28d–29c. — d) = 25d. B1 D1. 2. 4. 6 पुण्या° (for तीर्था°). Dc सेवितानि महर्षिभिः (cf. 29d and v.l.).

**29** K3 om. 29abc (cf. v.l. 28). — c) Ś1 K1. 2 देवताकल्पैः; Dn D1–3. 5 G1 M1 देवकल्पैश्च. — d) K3 Dc महर्षिभिः (for महा°); cf. v.l. 28.

**30** b) B1. 2. 4 Dc D4. 6 सहितैः (Dc2 सेवितैः). B D4. 6 ब्रह्मवादिभिः; Dc ब्राह्मणर्षिभिः. — c) Ś1 K1. 2 °वेगैर् (for °भागैर्). — d) Ś1 K1–3 सोत्कंठो (for उत्कण्ठां). Ś1 K Dn D3. 5 M विहरिष्यसि (K1. 2. 4 °सि); T G विजयिष्यसे (G2 °सि).

Colophon. — *Major parvan :* Ś1 K2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan :* T G1. 3 तीर्थयात्रा. N (om. sub-parvan name) mentions only धौम्यतीर्थयात्रा, followed by समाप्ता (B2 Dn2 D4. 6 om. समाप्ता). — *Adhy. name :* T2 G3 धौम्यतीर्थानुक्रमणं; G2 धौम्यतीर्थकथनं.

# ८९

C. 3. 8407
B. 3. 91. 1
K 3. 89. 1

वैशंपायन उवाच ।
एवं संभाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशः सुमहातेजा ऋषिस्तत्राजगाम ह ॥ १
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उदतिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ २
तमभ्यर्च्य यथान्यायं धर्मराजो युधिष्ठिरः ।
पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ३
स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥ ४
संचरन्नस्मि कौन्तेय सर्वलोकान्यदृच्छया ।
गतः शक्रस्य सदनं तत्रापश्यं सुरेश्वरम् ॥ ५
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ।
आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ॥ ६
आह मां तत्र देवेशो गच्छ पाण्डुसुतानिति ।
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ॥ ७
वचनात्पुरुहूतस्य पार्थस्य च महात्मनः ।
आख्यास्ये ते प्रियं तात महत्पाण्डवनन्दन ॥ ८
भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु ।
यत्त्वयोक्तो महाबाहुरस्त्रार्थं पाण्डवर्षभ ॥ ९
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं महत् ।
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागतम् ॥ १०
अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ।
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ॥ ११
वज्रं चान्यानि चास्त्राणि दण्डादीनि युधिष्ठिर ।
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः ॥ १२
विश्वावसोश्च तनयाद्गीतं नृत्तं च साम च ।

— *Adhy. no.* (figures, words or both): Dn1. n2 M2 90; Dn3 91; D1 94; T G M1 89. — *Śloka no.*: Dn1. n2 34; Dn3 35; D1 29.

## 89

**1** b) K4 Dc1 D2. 6 कौरवनंदनं; T1 कौरव्यनंदन. — c) Ś1 Dn T2 G3. 4 स; K3 तु (for सु-).
**2** b) K4 D1. 2 M2 ये (for ते). — D3 om. 2c–4b. — c) Dn D5 उपातिष्ठन्. B1. 3. 4 D4. 6 M2 महाभागाः; B2 T2 G2–4 °राज; Dc D1 T1 °भाग; G1 M1 °त्मानं.
**3** D3 om. 3 (cf. v.l. 2). — a) Ś1 Dn D1. 4 सम° (for तम°). — b) Dn D5. 6 धर्मपुत्रो. — d) T1 गमने (for अटने). M2 महर्षिं लोकविश्रुतं.
**4** D3 om. 4ab (cf. v.l. 2). — b) B2 °मतिः; B3 Dc S (except G1. 2) °त्मना; D4. 6 °मते; D5 °तपाः (for °मनाः).
**5** a) Ś1 K1. 2 इव (for अस्मि). — b) Ś1 K Dn D1–3. 5 T2 G3 सर्वान् (for सर्व-). — c) Ś1 K Dn D3. 5 T2 G2–4 भवनं (for सदनं).
**7** a) Ś1 K Dc D1. 2 transp. आह and तत्र. B2 D4. 6 प्राह (for आह). Ś1 K B2 Dc D2 देवेंद्रो (for देवेशो). — b) K4 Dc Dn D3. 5 प्रति (for इति). — d) K4 D1 महाभुजं; Dc सभागतं; M2 महाभुज (for सहा°).
**8** c) Ś1 K1. 2 राजन्; B4 तावद् (for तात). — d) B4 अहं (for महत्). K3 महांतं कुरुनंदन; K4 B1–3 Dc D1. 2. 4. 6 सुमहत्पांडुनंदन.
**9** a) Dn2. n3 D5 ऋषि° (for भ्रातृ°). — b) T2 G2–4 सह (for चैव). — c) K3 B1. 2 D4. 6 S (except M2) यस; B4 तत् (for यत्). Ś1 K1. 2 T1 त्वयोक्तं; B4 च प्रोक्तं (for त्वयोक्तो). Ś1 K1. 2 स्वयं भ्रातुर् (for महा°). — d) Ś1 K1. 2 Dn D5 भरतर्षभ; B2 पांडवो गतः; Dc D1. 2 G2 पांडुनंदनः; T2 G3. 4 M1 पांडवर्षभः.
**10** a) Ś1 तदस्त्रं प्राप्तं; K1. 2 D1. 2 प्राप्तं तदस्त्रं; T2 G1. 3 तदस्त्रमात्तं. — b) Ś1 K1–3 D (except D3. 4. 6) विभो (for महत्). — d) Dn D3. 5 आगमत् (for आगतम्).
**11** c) Ś1 K1. 2 तं (for तत्). Cf. v.l. 3. 88. 24.
**12** a) T2 G2. 3 शस्त्राणि (for चास्त्राणि). Ś1 K1–3 D1. 2 वज्रं चास्त्राणि च तथा; B4 Dn D3 वज्रम (B4 वज्रं चा)- स्त्राणि चान्यानि. — b) Ś1 K1. 2 दंडनीतिर्; K3 इंद्रादीनि; T1 दंडानीति; G2 दंड्यादीनि. — e) B2. 3 Dn1 D4. 6 [अ]वाप्त° (for [अ]धीत°). — f) B D4. 6 कुरुनंदन (for

वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि ॥ १३
एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमाप्तवान् ।
सुखं वसति बीभत्सुरनुजस्यानुजस्तव ॥ १४
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ १५
भवान्मनुष्यलोकाय गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम ॥ १६
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः ॥ १७
तपसा तु त्वमात्मानं भ्रातृभिः सह योजय ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ १८
अहं च कर्णं जानामि यथावद्भरतर्षभ ।
न स पार्थस्य संग्रामे कलामर्हति षोडशीम् ॥ १९
यच्चापि ते भयं तस्मान्मनसिस्थमरिंदम ।
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते ॥ २०
यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
तच्च ते लोमशः सर्वं कथयिष्यत्यसंशयम् ॥ २१
यच्च किंचित्तपोयुक्तं फलं तीर्थेषु भारत ।
महर्षिरेष यद्ब्रूयात्तच्छ्रद्धेयमनन्यथा ॥ २२

C. 3. 8431
B. 3. 91. 25
K. 3. 89. 26

इति श्रीमहाभारते आरण्यकपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

[अ]मितविक्रमः).

**13** a) Dn D5. 6 तु (for च). — b) T1 G1 गीत-; M2 दिव्यं (for गीतं). N (except Ś1 K2) नृत्यं (for नृत्तं). — d) Ś1 K1. 2 °गृह्णाद् (for °विन्दद्).

**14** d) G2 [अ]वरस् (for [अ]नुजस्). T1 अनुजस्तव सुव्रतः.

**15** a) K3 B1–3 Dc D4. 6 यच्च (Dc यश्च) मां स (for यदर्थं मां). K3 नर° (for सुर°). — c) K3 तत्वतः; Dc यच्च ते. K1 B1 M1 कीर्तयिष्यामि. — d) T G तत् (for मे).

**16** a) Ś1 K1. 2 °लोकं हि; Dn1. n3 D5 °लोकेपि; Dn2 T2 G °लोकेषु (G1 °लोकात्त्वं). K4 भगवान्मानुषे लोके (m as in text).

**17** b) T2 G2–4 कृतार्थः (for °स्त्रः). — d) Ś1 K D2 दिवालयैः; D1 सुरालयैः; S दिवौकसां.

**18** a) B Dc D4. 6 तत् (B4 च); Dn D5 [अ]पि (for तु). T2 G2–4 तस्म् (for तु त्वम्). G1 तपसा त्वं च तीर्थेन. — b) Ś1 K D (except D4. 6) M1 योजय भ्रातृभिः सह.

**19** T1 om. 19–20. — After 19ab, K1. 2 B Dc Dn D4. 6 ins.:

468* सत्यसंधं महोत्साहं महावीर्यं महाबलम् ।
महाहवेष्वप्रतिमं महायुद्धविशारदम् ।
महाधनुर्धरं वीरं महास्त्रं वरवर्णिनम् ।
महेश्वरसुतप्रख्यमादित्यतनयं प्रभुम् ।
तथा ज्ञानगतिं स्कन्धं सहजोल्बणपौरुषम् ।

[(L. 1) B1. 3 Dc महात्मानं (for महो°). — (L. 3) Dc कृतास्त्रं (for महास्त्रं), and °वर्मिणं (for °वर्णिनम्). — (L. 5) Dc ह्येनं (for स्कन्धं). K1. 2 Dn तथार्जुनमतिस्कंधं (K1. 2 °दं); Cnp तथा ज्ञान° etc. (as above). B1. 3 Dc सहसो (Dc °जो)ज्ज्वलकुंडलं; B4 सहस्रनयनोपमं (for the posterior half).]

— c) Ś1 K1. 3. 4 D1. 2 च (for स).

**20** T1 om. 20 (cf. v.l. 19). — a) Ś1 K Dn D1–3. 5 कर्णान् (for तस्मात्). — b) K3 अनिंदित (for अरिंदम). M1 मनसि स्थितमच्युत. — c) B D4. 6 M2 °ष्येहं (for °ष्यामि). — d) N G1 °साचिनि (for °साचाव्). Ś1 K4 B Dc D2–4. 6 [अ]तो गते; K1–3 Dn D1. 5 [उ]पागते; T2 G3 [इ]तो गते (for [इ]हागते).

**21** Ś1 K1. 2 om. 21. — a) T2 G2–4 दुःखं (for वीर). — c) K3. 4 B Dc Dn2 D1. 3–6 महर्षिर्लोमशस्ते वै (K3. 4 D1. 3. 5 °शस्तत्ते); Dn1. n3 D2 स महर्षिर्लोमशस्ते.

**22** c) Ś1 K D (except D3. 5. 6) G1. 4 महार्षिर् (for महर्षिर्). Ś1 K2 Dc Dn2 एव (for एष). B (B4 marg.) Dn3 D4. 6 लोमशो ब्रूयात् (for एष यद्ब्रूयात्). B4 वै; G2. 4 तद् (for यद्). K3. 4 Dc Dn1. n2 D2. 3. 5 ब्रूयात्वां (Dn1. n2 D3. 5 °त्ते) (for यद्ब्रूयात्). — d) B3 तच्छ्रुत्वेयम्; B4 तज्ज्ञेयम्; T1 तच्छ्रेयोयं; G4 तच्छ्रद्धव्यं (for तच्छ्रद्धेयम्). K3 T G न चान्यथा (for अनन्यथा). Dn1. n2 D3. 5 न तच्छ्रद्धेयमन्यथा.

Colophon om. in K3. — *Major parvan:* Ś1 K1. 2 Dn1. n2 T G2–4 M1 आरण्य. — *Sub-parvan:* D2 T2 G1. 3 तीर्थयात्रा. K4 B2. 4 Dn1. n3 D1. 2. 5 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* Ś1 K1. 2 लोमशवाक्यं; B4 इन्द्रवाक्यं; T1 लोमशगमनं; T2 G3 लोमशाभिगमनं; G1 लोमशागमनं. — *Adhy. no.* (figures, words or both): Dn1. n3 91;

# ९०

C. 3. 8432
B. 3. 92. 1
K. 3. 90. 1

लोमश उवाच ।

धनंजयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर ।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया ॥ १
त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि राज्ञां धर्मं सनातनम् ॥ २
स भवान्यत्परं वेद पावनं पुरुषान्प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवम् ॥ ३
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः ।
तथा सर्वात्मना कार्यमिति मां विजयोऽब्रवीत् ॥ ४
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ५
दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयं राक्षसेभ्यो द्विजोत्तम ॥ ६
यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।
त्वयाभिगुप्तान्कौन्तेयान्नातिवर्तेयुरन्तिकात् ॥ ७
सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ८
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ९
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ १०
नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ११
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसंगरः ।
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि ॥ १२
यथा भगीरथो राजा राजानश्च गयादयः ।

---

Dn3 M2 92; D1 95; T G M1 90. — *Śloka no.:* Dn 25; D1 23.

## 90

**1** a) K1 D1. 5 [अ]स्मि; K3 [अ]स्ति (for [अ]पि). Ś1 K D1. 3. 5 [उ]क्तः (for [उ]क्तं). — b) Ś1 K1. 2 B3 D1. 2 M2 तच्छृणुष्व (for यत्तच्छृणु). T1 M1 नराधिप (for युधि°). D6 फलं तीर्थेषु भारत. — c) T2 G भ्रातरं मेनुजैः सार्धं. — d) Ś1 K1. 3. 4 D6 G2 M2 योजयेद् (for °येर्). Ś1 K2 वंद्यया (for धर्म्यया). K1 B3 Dc Dn3 D4. 6 T G3 M गिरा; B1. 2. 4 G1. 2. 4 धिया (for श्रिया). D1. 2 योजयेथास्तपश्रिया.

**2** a) K1 S (except M1) धर्मं परं. B Dc D4. 6 वेत्सि (for वेत्थ). — c) T2 G2–4 चाभि-; M1 च वि- (for चापि). — d) Dn D5 M1 धर्मं राज्ञां (by transp.); D3 धर्मं राज्यं.

**3** a) B D (except D1–3) परमं (for यत्परं). — b) K3 Dn D3. 5 T2 G2–4 पुरुषं (for °षान्). — d) K3. 4 B D (except D1. 2) पांडवान्; M1 पार्थिवं.

**4** a) Ś1 तीर्थेन (for तीर्थानि). — b) T2 G2–4 गत्वा (for गाश्च). — c) T2 G2–4 सर्वं त्वया (for सर्वा°). — d) Ś1 K Dn D1–3. 5 अर्जुनो (K3 विजने) (for विजयो).

**6** c) K3. 4 B Dn D4–6 G1 M कौंतेयान् (for °यं). D1 तथा रक्ष्यश्च कौंतेयो.

**7** a) T1 G2. 4 च (for हि). — c) Ś1 [अ]भियुक्तं; K2 Dn D3. 5 [अ]भिगुप्तं; Dc1 हि गुप्तान्; Dc2 गुप्तान्हि (for [अ]भिगुप्तान्). Ś1 K2 Dn D2. 3. 5 कौंतेयं. — d) K3 B3 Dn2 T1 M1 नाभिवर्तेयुर्; Dc नाभिवर्धेयुर्; Dn1. n3 D5 न विवर्तेयुर्. Ś1 Dn D3. 5 अंतिकं.

**8** After 8ab, D1. 2 ins.:

469* आगतस्त्वां महाबाहो कुरु पुण्यं युधिष्ठिर ।

**9** a) Ś1 K2 द्विस्तीर्णानि; K1 द्विवारंथा (?); M2 विस्तीर्णानि. K1 महाबाहो; K3 (corrupt) मयाबाहो. — b) M2 तीर्थानि (for दृष्टानि). — c) Ś1 K1. 2. 4 D3 इमं (for इदं). K3. 4m यास्यामि; K4 B3 Dc वक्ष्यामि (for द्रक्ष्यामि).

**10** d) T G M1 शुभावहा (G4 युधिष्ठिर) (for भया°).

**11** a) T2 G2–4 नानृती (for नानृजुर्). M2 नानृतात्मा च. — b) K1 तृतीयं; B Dn D1. 2. 4. 6 नाविद्यो.

**12** T1 om. (hapl.) 12ab. — a) S (T1 om.) °रतिर् (for °मतिर्). — c) B1. 2. 4 Dn D4. 6 M2 सर्वसंगेभ्यो.

**13** d) T2 G2–4 पार्थिव (for पाण्डव).

C. 3. 11000
B. 3. 114. 6
K. 3. 115. 6

समेन देवयानेन पथा स्वर्गमुपेयुषः ।
अत्र वै ऋषयोऽन्येऽपि पुरा क्रतुभिरीजिरे ॥ ६
अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान्मखे ।
रुद्रः पशुं मानवेन्द्र भागोऽयमिति चाब्रवीत् ॥ ७
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ ।
मा परस्वमभिद्रोग्धा मा धर्मान्सकलान्नशीः ॥ ८
ततः कल्याणरूपाभिर्वाग्भिस्ते रुद्रमस्तुवन् ।
इष्ट्या चैनं तर्पयित्वा मानयांचक्रिरे तदा ॥ ९
ततः स पशुमुत्सृज्य देवयानेन जग्मिवान् ।
अत्रानुवंशो रुद्रस्य तं निबोध युधिष्ठिर ॥ १०
अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम् ।
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतम् ॥ ११
इमां गाथामत्र गायन्नपः स्पृशति यो नरः ।
देवयानस्तस्य पन्थाश्चक्षुश्चैव प्रकाशते ॥ १२

वैशंपायन उवाच ।

ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा ।
अवतीर्य महाभागा तर्पयांचक्रिरे पितॄन् ॥ १३

युधिष्ठिर उवाच ।

उपस्पृश्यैव भगवन्नस्यां नद्यां तपोधन ।
मानुषादस्मि विषयादपेतः पश्य लोमश ॥ १४
सर्वाँल्लोकान्प्रपश्यामि प्रसादात्तव सुव्रत ।
वैखानसानां जपतामेष शब्दो महात्मनाम् ॥ १५

लोमश उवाच ।

त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर ।

---

S याज्ञि($G_4$ M °ज्ञी)यं (for यज्ञियं). $K_{3.4}$ $D_{1.2}$ गिरिशोभनम्; $B_2$ °मुत्तमम्. — $^{c}$) $Ś_1$ $K_{1.2}$ $D_3$ $T_2$ $G_{2.3}$ तीर्थम् (for तीरम्). $T_1$ $G_1$ आसाद्य (for एतद्धि). — $^{d}$) $Ś_1$ $K_{1.2}$ देव° (for द्विज°).

**6** $^{a}$) $K_1$ $B_2$ Dn $D_{4.6}$ समानं; $K_3$ अनेन; $K_4$ समेत (*sup. lin.* as in text); $B_{3.4}$ Dc शुभेन; $D_{1.2}$ संमितं; $D_3$ सोमेन (for समेन). — $^{b}$) $K_{1.3.4}$ $Dn_2$ $D_{1.4.6}$ $T_1$ यथा (for पथा). — $^{c}$) Dc $D_5$ यत्र. $Ś_1$ K $B_1$ $D_{3.5}$ देवर्षयो; $T_1$ $G_1$ M चैवर्षयो; $G_{2.4}$ एवर्षयो (for वै ऋ°).

**7** $^{c}$) $Ś_1$ $K_{1-3}$ $D_{1-3}$ आखुं; $K_4$ $M_1$ हत्वा; $B_1$ अदात्; $B_2$m. $_{3.4}$ Dc आर्द्रं; $D_5$ अश्वं; $M_2$ रौद्रं (for रुद्रः). $G_2$ पशुर् (for पशुं). $B_{2.4}$m Dn $D_{4.6}$ पशुमादाय राजेंद्र. — $^{d}$) $B_{2.3}$ Dc ममेति (for ऽयमिति).

**8** $^{a}$) $Ś_1$ $K_{1.2}$ कृते; $K_3$ Dc $D_3$ हते (for हृते). $K_3$ $B_2$ T $G_3$ ततो (for तदा). — $^{d}$) $Ś_1$ वदीः; $K_3$ न सः; B Dn $D_{1.4.6}$ $T_2$ $G_3$ वशीः ($B_3$ °धीः); $T_1$ $G_{1.2.4}$ $M_1$ मा धर्म्यांश्छी($G_4$ °द्रि)नशः पथः.

**9** $Ś_1$ om. from अस्तुवन् up to °यानेन (in 10$^{b}$). — $^{cd}$) $K_{1.3}$ Dc $Dn_2$. $n_3$ $D_{1.2}$ $T_1$ $G_4$ इष्ट्वा; $K_2$ दृष्टा; $D_{3.5}$ इष्ट्वा (for इष्ट्या). $B_2$ मानयित्वा तर्पयांचक्रिरे. $D_{1.2}$ सुराः (for तदा). — After 9, $D_3$ ins.:

559* एष ते रुद्र भागो वै मा नो यज्ञमिमं जहि ।
अयं ते पशुरित्येवमूचुर्देवाः समागताः ।

**10** $^{ab}$) $Ś_1$ om. up to °यानेन (cf. v.l. 9). $Ś_1$ संभवान् (for जग्मिवान्). — $^{c}$) $K_4$ $B_{2-4}$ Dn $D_{4-6}$ $T_2$ $G_{3.4}$ तत्र (for अत्र). $T_2$ $G_{3.4}$ $M_2$ [अ]नुवंशं.

**12** $D_3$ om. from 12 up to 3. 118. 15$^{c}$; the MS. is generally ignored hereafter up to the end of the lacuna. — $^{ab}$) $B_4$ अनु- (for अत्र). $B_{2.3}$ Dc S (except $T_2$ $G_3$) उप- (for अपः). $B_4$ स्पर्शति (for स्पृ°). $Ś_1$ K $B_1$ $D_5$ इमां सुश्रुत्य ($K_1$ सुस्तुत्य; $K_3$ संस्तुत्य; $K_4$ $B_1$ गायन्स) यो ($K_3$ वै) गाथां तत्रो($K_{3.4}$ $D_5$ अत्रो; $B_1$ यत्रो)-पस्पृशते नरः; $D_{1.2}$ इमां गायति यो गाथामपः संस्पृशते तु यः. — $^{c}$) $D_2$ सिद्धश् (for पन्थाश्). $Ś_1$ $D_5$ देवयानस्य पंथाः स्यात्; $K_3$ देवयाने पथं प्यास्यात् (sic); $B_{2.3}$ Dn $D_{4.6}$ $T_2$ $G_3$ देवयानोस्य पंथाश्च. — $^{d}$) $B_{1.2}$ Dc Dn $D_{4.6}$ $T_2$ $G_3$ चक्षुषाभि-; $B_{3.4}$ °श्चाति-; $T_1$ °षो वै (for °श्चैव). $Ś_1$ K प्रवर्तते; $D_1$ प्रवर्धते; $G_{2.4}$ प्रजायते.

**14** $G_1$ (hapl.) om. 14$^{a}$–16$^{b}$. — $^{a}$) $K_1$ $B_{2-4}$ Dn $D_{4.6}$ $T_2$ $G_3$ [इ]ह (for [ए]व). B Dn $D_{4.6}$ $T_2$ $G_3$ विधिवद् ($B_1$ सलिलं) (for भगवन्). — $^{b}$) $K_{3.4}$ $D_{1.5}$ नद्यामस्यां (by transp.); Dc तस्यां नद्यां. N $T_2$ $G_3$ °बलात् (for °धन). — $^{c}$) $D_{1.2}$ $T_1$ $M_1$ अद्य (for अस्मि). $M_2$ विषयादस्मात् (for अस्मि विषयाद्). — $^{d}$) $M_1$ अपेतान्; $M_2$ अपेतं (for अपेतः).

**15** $G_1$ om. 15 (cf. v.l. 14). — $^{a}$) =3. 129. 19$^{a}$. $T_1$ $G_{2.4}$ $M_1$ प्रपश्यामः. — $^{b}$) $Ś_1$ K $B_1$ Dc $D_5$ भगवंस्तव (for तव सुव्रत).

**16** $G_1$ om. 16$^{ab}$ (cf. v.l. 14). — $^{a}$) $Ś_1$ K $B_{1.4}$ Dc $D_5$ त्रिंशद्भूमेः ($K_3$ °मि-); $D_2$ त्रिंशतिं वै. — $^{c}$) $T_1$ $G_{1.2}$ $M_1$ श्रृणोमि. $Ś_1$ $K_2$ $B_1$ $D_1$ एतं; $K_3$ एवं; $G_1$ एष; M एतत् (for एनं). — $^{d}$) $Ś_1$ यस्व; $K_4$ यास्व; $B_{1.4}$ आस्थ;

यत्र ध्वनिं शृणोष्येनं तूष्णीमास्स्व विशां पते ॥ १६
एतत्स्वयंभुवो राजन्वनं रम्यं प्रकाशते ।
यत्रायजत कौन्तेय विश्वकर्मा प्रतापवान् ॥ १७
यस्मिन्यज्ञे हि भूर्दत्ता कश्यपाय महात्मने ।
सपर्वतवनोद्देशा दक्षिणा वै स्वयंभुवा ॥ १८
अवासीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् ॥ १९
न मां मर्त्याय भगवन्कस्मैचिद्दातुमर्हसि ।
प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् ॥ २०
विषीदन्तीं तु तां दृष्ट्वा कश्यपो भगवानृषिः ।
प्रसादयांबभूवाथ ततो भूमिं विशां पते ॥ २१
ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव ।
पुनरुन्मज्ज्य सलिलाद्वेदीरूपा स्थिता बभौ ॥ २२
सैषा प्रकाशते राजन्वेदी संस्थानलक्षणा ।
आरुह्यात्र महाराज वीर्यवान्वै भविष्यसि ॥ २३
अहं च ते स्वस्त्ययनं प्रयोक्ष्ये
यथा त्वमेनामधिरोक्ष्यसेऽद्य ।
स्पृष्टा हि मर्त्येन ततः समुद्र-
मेषा वेदी प्रविशत्याजमीढ ॥ २४
अग्निर्मित्रो योनिरापोऽथ देव्यो
विष्णो रेतस्त्वममृतस्य नाभिः ।
एवं ब्रुवन्पाण्डव सत्यवाक्यं

C. 3. 11021
B. 3. 114. 27
K. 3. 115. 28

---

Dc आसीद् (for आस्स्व). D1. 2 तूष्णीं स्थास्यंति संप्रति.

**17** b) K1. 4 B1. 2. 4 Dn D2. 4. 6 M दिव्यं; D1 G2 सर्वं (for रम्यं). — c) B2-4 Dn D1. 2. 4. 6 राजेंद्र; T G धर्मात्मा (for कौन्तेय).

**18** a) K1. 2 अस्मिन्; K3 B1 D5 तस्मिन् (for यस्मिन्). Ś1 K3. 4 D1. 2. 5 तदा (for हि भूर्). G1 भद्रात्मा (for भूर्दत्ता). — b) Ś1 B1 D1 S काश्यपाय. — d) Ś1 K4 D5 दक्षिणा भूः; K1. 2 B2 Dn D4-6 °णार्थे; K3 °णाभूत्; B3 °णार्थं (for °णा वै).

**19** a) Ś1 D1. 2. 5 अथा°; K1 अत्रा° (for अवा°). — b) D5 वसुंधरा; T1 G1 स्वयंभुवा (for मही तदा). — c) D1 कुपिता राजन् (for चापि कुपिता). T2 G2-4 M वाचा (for चापि). T1 G1 मही तदा तु कुपिता. — d) D1. 2 M वचः (for प्रभुम्). T1 G1 वाचोवाच स्वयंभुवं.

**20** a) Ś1 K1. 3 M मा (for मां). D1. 2 न च मामद्य भगवन्. — After 20, M ins.:

560* इत्येवमुक्त्वा पृथिवी जगाम च रसातलम् ।
निममज्ज कुरुश्रेष्ठ याच्यमानापि भारत ।

**21** a) Ś1 अवसीदं तु तां दृष्ट्वा; K3 तां दृष्ट्वा चावसीदंतीं; Dc सीदंतीं तां तु गां दृष्ट्वा. — b) Dc Dn2. n3 D4 S (except G4) काश्यपो.

**22** b) K4 तप्यमानस्य (for तपसा तस्य). K1. 2 B2 पार्थिव (for पाण्डव). — c) B Dn D4. 5 उद्धृत्य (for उन्मज्ज्य). S उत्सृष्टसलिला (for उन्मज्ज्य सलिलाद्). Dc यतिता (for सलिलाद्). — d) Ś1 K3 T2 G2-4 M °भूता (for °रूपा). K1. 2 तदा (for स्थिता). Dc D5 [अ]भवत् (for बभौ). T1 G1 सैषातीव (T1 सैषा राजन्) प्रकाशते (cf. 23a).

**23** ab) G1 प्रकाशतेद्य ते राजन् (for °). Ś1 K3. 4 D5 ततो बभूव सा वेदी सैषा (Ś1 ह्येषा) राजन्प्रकाशते. — c) Dc आरोहेमां; D1. 2 प्रारोहस्व; S (except G1) आरोहात्र (for आरुह्यात्र). — d) S (except M3) त्वं (for वै). — After 23, N (except D5; D3 missing) ins.:

561* सैषा सागरमासाद्य राजन्वेदी समाश्रिता ।
एतामारुह्य भद्रं ते त्वमेकस्तर सागरम् ।

[(L. 1) K3 प्रकाशते; D1. 2 समास्थिता (for °श्रिता). — (L. 2) Ś1 K3. 4 D1. 2 आरोह; B आरुह्य; Dc आहर (for आरुह्य). Dc त्वमेकं भरतर्षभ (for the posterior half).]

**24** b) Ś1 K यदा (for यथा). Ś1 K4 B1 Dc T1 M1 एताम् (for एनाम्). K3 °रोप्यसि; Dn D5. 6 °रोहसे (for रोक्ष्यसे). K3 [इ]ह; K4 न; T G3. 4 [ऽ]त्र (for ऽद्य). — c) M सर्वेण (for मर्त्येन). S (except M3) पुनः (for ततः). — d) K1. 2 Dc देवी; some S MSS. वेदिः (for वेदी). — After 24, Dn D1. 2. 6 (marg.) ins.:

562* ॐ नमो विश्वगुप्ताय नमो विश्वपराय ते ।
सांनिध्यं कुरु देवेश सागरे लवणाम्भसि ।

[(L. 1) D1. 2 सर्व- (for the second नमो).]

In D1. 2, 562* is followed by 563*, which in its turn is followed in D2 by 25cd.

**25** D1 om. 25; D2 om. 25ab. — b) T G1. 2. 4 -रेतस्य (for रेतस्). Ś1 K1. 3. 4 Dc त्वममृतस्यास्य; T G1. 2. 4 अस्य भूमिश्च (G1 °मिं च); G3 त्वममृतस्यैव; M3 त्वममृतस्यास्य (for त्वममृतस्य). — D2 reads 25cd after 563*. — c) K4 सत्यवाक्यं नरेंद्र; G1 पांडवेत्येव वक्ष्यन् (for पाण्डव सत्य°). — d) Ś1 B1 ततो वेदीं (for वेदीमिमां). — K1. 2 B Dc Dn D4. 6 T2 (marg. *sec. m.*) G3 ins. after 25 : D1. 2.

C. 3. 11021
B. 3. 114. 27
K. 3. 115. 28

वेदीमिमां त्वं तरसाधिरोह ॥ २५
वैशंपायन उवाच ।
ततः कृतस्वस्त्ययनो महात्मा
युधिष्ठिरः सागरगामगच्छत् ।
कृत्वा च तच्छासनमस्य सर्वं
महेन्द्रमासाद्य निशामुवास ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

# ११५

वैशंपायन उवाच ।
स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः ।
तापसानां परं चक्रे सत्कारं भ्रातृभिः सह ॥ १
लोमशश्चास्य तान्सर्वानाचख्यौ तत्र तापसान् ।
भृगूनङ्गिरसश्चैव वासिष्ठानथ काश्यपान् ॥ २
तान्समेत्य स राजर्षिरभिवाद्य कृताञ्जलिः ।
रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ॥ ३
कदा नु रामो भगवांस्तापसान्दर्शयिष्यति ।
तेनैवाहं प्रसङ्गेन द्रष्टुमिच्छामि भार्गवम् ॥ ४
अकृतव्रण उवाच ।
आयानेवासि विदितो रामस्य विदितात्मनः ।
प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ॥ ५

---

after 562*:

563* अग्निश्च ते योनिरिडा च देहो
रेतोधा विष्णोरमृतस्य नाभिः ।
एवं जपन्पाण्डव सत्यवाक्यं
ततोऽवगाहेत पतिं नदीनाम् ।
अन्यथा हि कुरुश्रेष्ठ देवयोनिरपां पतिः । [5]
कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिः ।

[ (L. 1) Dc इष्टां च देहे (for इडा च देहो). B1 corrupt; D1. 2 अग्निश्च तेजस्तव देव देहे. — (L. 2) D1. 2 T2 G3 विष्णुर् (for विष्णोर्). — D1. 2 ins. after line 2:

564* घृतबर्हिर्घृतयोनिस्त्वगर्हो
स तेषां वै पयसां संनिधानम् ।

— (L. 3) D1. 2 एतद् ब्रुवन् (for एवं जपन्). B4 एवं ब्रुवन्सत्यवाक्यं च राजन्. — (L. 4) B1. 2 Dc °गाहस्व (for °गाहेत). — After line 4, D2 ins.:

565* आ जन्मशतसाहस्राद्यत्पापं कुरुते नरः ।
मुच्यते सर्वपापेभ्यः स्नात्वा तु लवणाम्भसि ।

— (L. 6) K1. 2 कौरव्य (for कौन्तेय).]

— After 563*, D2 reads 25cd.

**26** b) K3 प्रीतमनान्वगच्छत्; B1 सागरमाजगाम; Dc D4 °मभ्यगच्छत्; Dn D6 °मध्यगच्छत्; D1. 2 °मागमत्तं (for °गामगच्छत्). — c) B4 T1 G1 M1 तु (for च).

Colophon. — *Major parvan:* Ś1 K2 T2 G M1 आरण्य. — *Sub-parvan:* B1. 3. 4 G1 तीर्थयात्रा. K B2 Dc Dn1. n3 D1–6 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. no.* (figures, words or both): Dn1 113; Dn2 114 (as in text); Dn3 S 115 (M2 117); D1 119. — *Śloka no.:* Dn 30; D1 31.

## 115

☞ This adhy. is missing in D3 (cf. v.l. 3. 114. 12); the MS. is generally ignored here.

**1** a) T G M1 [ए]वम् (G1. 4 [ए]कम्) (for ताम्). Ś1 स उषित्वा च तत्रैकां; D1. 2 स च तत्रोषितो वीरो.

**2** a) Ś1 K4 B1 D2 T1 चापि; K3 स्वस्य; B2. 3 Dc Dn D1. 4. 6 तस्य (for चास्य). — T1 om. 2cd. — d) B Dn1. n3 D5. 6 G1 वसिष्ठान्. G2 वासिष्ठान्काश्यपांस्तथा.

**3** c) D1. 2 तत्र; T1 G1 धीरम्; T2 G2–4 विप्रम् (for वीरम्). — d) D1. 2 स पप्रच्छ (for अपृच्छद्).

**4** a) K4 B4 Dn D1. 2. 4. 6 T1 G1. 2 तु (for नु). K1–3 Dc D5 तापसानां कदा (K1. 2 यदा) रामो. — b) K1. 2 Dc2 भगवन्; K3 Dc1 D5 भगवान् (for तापसान्). — T2 om. (hapl.) 4c–5d. — c) D1. 2 M तमहं तपसा युक्तं.

**5** T2 om. 5 (cf. v.l. 4). — a) Ś1 आयानेवापि; K1. 2 अयानेवासि; K3 अयन्निवास; D1. 2. 5 S (except G3; T1 om.) आ(D1 अ)यन्नेवासि. — c) K1. 2 च त्वयि (by transp.); B4 त्वयि हि. — d) Ś1 K2 त्वा (for त्वां).

चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः ।
अस्यां रात्र्यां व्यतीतायां भवित्री च चतुर्दशी ॥ ६

युधिष्ठिर उवाच ।

भवाननुगतो वीरं जामदग्न्यं महाबलम् ।
प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ७
स भवान्कथयत्वेतद्यथा रामेण निर्जिताः ।
आहवे क्षत्रियाः सर्वे कथं केन च हेतुना ॥ ८

अकृतव्रण उवाच ।

कन्यकुब्जे महानासीत्पार्थिवः सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम सः ॥ ९
वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा ।
ऋचीको भार्गवस्तां च वरयामास भारत ॥ १०
तमुवाच ततो राजा ब्राह्मणं संशितव्रतम् ।
उचितं नः कुले किंचित्पूर्वैर्यत्संप्रवर्तितम् ॥ ११
एकतःश्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम ॥ १२
न चापि भगवान्वाच्यो दीयतामिति भार्गव ।
देया मे दुहिता चेयं त्वद्विधाय महात्मने ॥ १३

ऋचीक उवाच ।

एकतःश्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
दास्याम्यश्वसहस्रं ते मम भार्या सुतास्तु ते ॥ १४

अकृतव्रण उवाच ।

स तथेति प्रतिज्ञाय राजन्वरुणमब्रवीत् ।
एकतःश्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनामेकं शुल्कार्थं मे प्रदीयताम् ॥ १५
तस्मै प्रादात्सहस्रं वै वाजिनां वरुणस्तदा ।
तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः ॥ १६
गङ्गायां कन्यकुब्जे वै ददौ सत्यवतीं तदा ।

C. 3. 10153
B. 3. 115. 28
K. 3. 116. 28

---

**6** K3 D5 om. $6^{ab}$. — $^{a}$) Ś1 K4 चतुर्दश्यामष्टम्यां वा (K4 °श्यां तथाष्टम्यां). — $^{c}$) Ś1 K4 इतो रजन्यां पंचम्यां. — $^{d}$) B Dc Dn D4-6 श्वः (for च). — After 6, Ś1 K Dc D1. 2. 4-6 ins.:

566* तत्र द्रक्ष्यसि रामं त्वं कृष्णाजिनजटाधरम् ।

**7** $^{a}$) Ś1 K B1 नित्यं; B2. 3 Dc Dn D4-6 T2 (after corr.) G3 रामं (for वीरं).

**8** $^{a}$) Ś1 K4 T1 G1 भगवान् (for स भवान्). B4 Dn D6 G2 [अ]द्य (for [ए]तद्). — $^{b}$) K1-3 D5 घातिताः (for निर्जिताः). — $^{c}$) Ś1 K4 शूराः (for सर्वे). — After 8, K1. 2 B Dc Dn D4. 6 G3 ins. a passage given in App. I (No. 15).

**9** $^{a}$) K2 B1. 4 Dc कान्यकुब्जे; D5 S कन्या°. — After $9^{ab}$, B1 Dc ins.:

567* कुशिकस्यात्मजो राजञ्जज्ञे वंशसमुद्भवः ।

— $^{d}$) Ś1 B1. 2 Dn D4. 6 G4 M1 ह (for सः).

**10** $^{a}$) B1 transp. तस्य and वसतः. B2 कन्या (for तस्य). K4 वने च वसतो जज्ञे; D1. 2 G1 वने निवसतस्तस्य. — $^{b}$) Ś1 K B1. 4 Dc D5 (by transp.) जज्ञे कन्या (K4 कन्या तस्य); B2 जज्ञे तस्य; G1 कन्यासीद्; G2. 4 कन्याभूद्. B1. 4 D1. 2 S [अ]प्सरोपमा (for [अ]प्सरःसमा). — After $10^{ab}$, B4 ins.:

568* बभूव शतपत्राक्षी रूपेणासदृशी भुवि ।

— $^{c}$) K4 तु; D2 S वै (for च). — $^{d}$) T2 G3. 4 पार्थिव (for भारत).

**11** $^{a}$) Ś1 K4 B1 स (B1 च) राजर्षिर्; K1-3 B2-4 D (D3 missing) ततो गाधिर्; T2 G3. 4 ततो राजन् (for ततो राजा). — $^{b}$) K1. 2 ब्रह्माणं (for ब्राह्मणं). K1-3 B4 Dc D5 तपसि स्थितं (for संशित°). Ś1 K4 गाधिर्ब्राह्मणसत्तमं. — $^{c}$) K1. 2 विदितं (for उचितं). — $^{d}$) K1. 2 पूर्ववत् (for पूर्वैर्यत्). D1. 2 यत्पूर्वैः संप्रकीर्तितं.

**12** Cf. 5. 104. 26; 114. 5; 117. 5; etc. — $^{b}$) S पांडराणां (for पाण्डु°). K Dc D1. 2. 5 शुभ्राणां (K3 शुभानां; Dc D1. 2 हयानां) चंद्रवर्चसां. — $^{cd}$) D1. 2 सहस्रं शुल्कमित्येतद्विद्धि त्वं हि द्विजोत्तम.

**13** $^{a}$) Ś1 ततश्च; K1 तच्चापि (for न चापि). — $^{c}$) K1 [अ]थेयं; B Dn D4. 6 T2 G3 M1 चैव (for चेयं).

**14** $^{b}$) S पांडराणां. — $^{d}$) D1. 2. 5 T2 G2-4 [अ]स्तु (D1. 2 हि) ते सुता (for सुतास्तु ते).

**15** S om. the ref. — $^{a}$) Ś1 D5 तं तथा; K1-3 तत्तथा (for तथेति). — $^{d}$) S (except G1) पांडराणां. — $^{f}$) Dn प्रतिदी° (!); D1. 2 संप्रदी°; T1 दीयतां मम (for मे प्रदी°).

**16** $^{a}$) K1. 2 सहस्राणि; Dc सहस्रं ते (for सहस्रं वै).

**17** $^{a}$) B Dc D5 G4 कान्य°; T G1. 3 कन्या° (for कन्य°). — $^{c}$) Ś1 K1. 3 D4. 6 गाधिसुतां. B2-4 Dc Dn

C. 3. 10153
B. 3. 115. 29
K. 3. 116. 28

ततो गाधिः सुतां तस्मै जन्याश्चासन्सुरास्तदा ।
लब्ध्वा हयसहस्रं तु तांश्च दृष्ट्वा दिवौकसः ॥ १७
धर्मेण लब्ध्वा तां भार्यामृचीको द्विजसत्तमः ।
यथाकामं यथाजोषं तया रेमे सुमध्यया ॥ १८
तं विवाहे कृते राजन्सभार्यमवलोककः ।
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च ॥ १९
भार्यापती तमासीनं गुरुं सुरगणार्चितम् ।
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा ॥ २०
ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत् ।
वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥ २१
सा वै प्रसादयामास तं गुरुं पुत्रकारणात् ।
आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ २२

भृगुरुवाच ।

ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै ।
आलिङ्गेतां पृथग्वृक्षौ साश्वत्थं त्वमुदुम्बरम् ॥ २३
आलिङ्गने तु ते राजंश्चक्रतुः स्म विपर्ययम् ।
कदाचिद्भृगुरागच्छत्तं च वेद विपर्ययम् ॥ २४
अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम् ।
ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ॥ २५
क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् ।
भविष्यति महावीर्यः साधूनां मार्गमास्थितः ॥ २६
ततः प्रसादयामास श्वशुरं सा पुनः पुनः ।

---

$D_{4.6}$ $G_4$ चास्मै (for तस्मै). — $^{d}$) $K_3$ कन्यां; $T_1$ प्रीताश्; $M_2$ कन्याश् (for जन्याश्). $K_3$ om. from चासन् up to °सहस्रं तु (in 17$^{c}$). $K_{1.2}$ $B_1$ $D_2$ सुरर्षयः; $T_2$ $G_3$ सुतास्तदा (for सुरास्तदा). $K_4$ $D_1$ कन्यां तां च ($D_1$ प्रादात्) सुरर्षये; $G_2$ तदा कन्यां नृपोत्तम. — $^{e}$) $K_{1.2.4}$ $D_1$ दत्वा; $D_2$ दत्ता; $T_{1.2}$ (before corr.) $G_{1.2.4}$ $M_1$ लब्धं (for लब्ध्वा). $K_{1.4}$ $D_{1.2.5}$ $T_1$ $G_1$ M तत्; $B_4$ Dc $T_2$ $G_{2-4}$ च (for तु). — $^{f}$) $K_{1.3}$ $T_2$ $G_{1.3}$ तां (for तान्). $K_{1.2.4}$ $D_{1.2}$ [अ]भ्यर्च्य (for दृष्ट्वा). $D_{1.2}$ मुदं ययौ (for दिवौ°). — After 17, $T_2$ $G_{2-4}$ ins.:

569* विस्मयं परमं जग्मुस्तमेव दिवि संस्तुवन् ।

**19** $^{b}$) $D_{1.2}$ सभार्यो मुनिपुंगवः. — $^{c}$) $D_2$ मुनि° (for भृगु°). — $^{d}$) $B_2$ Dn $D_{4.6}$ ह (for च).

**20** $^{a}$) S (except $G_1$) समासीनं. — $^{b}$) $G_{2.4}$ भृगुं (for गुरुं). $D_5$ सुरासुर°. — $^{c}$) Dc $D_1$ $G_2$ अर्चयित्वा ह्युपा° (Dc -भ्युपा°).

**21** $^{a}$) $K_{1.2.4}$ विप्रर्षिः (for भगवान्). — $^{b}$) $K_2$ प्रहृष्टं; $D_{1.2}$ M दृष्ट्वा वै (for प्रहृष्टो). $K_{1.2}$ वाक्यम्; Dc $T_1$ गुरुर्; $T_2$ $G_3$ मुनिर् (for भृगुर्).

**22** $^{a}$) $K_{1.2}$ $B_1$ Dc T G तु; $K_4$ च (for वै). $K_{1.2.4}$ $D_{1.2}$ प्रचोद° (for प्रसाद°). K $D_5$ सा वरं वरयामास. — $^{b}$) $Ś_1$ $K_{1.4}$ भृगुं तं; $K_3$ Dc $D_5$ गुरुं तं (by transp.). — $^{d}$) T G वै (for च). $Ś_1$ K $B_1$ $D_{1.2.5}$ ददौ तच्च स ($Ś_1$ $K_2$ तच्चास्य; $B_1$ तं च स; $D_{1.2}$ तच्चापि) भारत.

**23** $Ś_1$ K $D_5$ T $G_{3.4}$ om. the ref. ($K_4$ ins. it in marg. *sec. m.*). — $^{c}$) $Ś_1$ $K_1$ आलिंग्यतां; $K_2$ °गेथाः; $K_3$ T $G_{1.2}$ $M_2$ °गेथां; $K_4$ $D_{1.2}$ °गतां; $Dc_1$ $Dn_1$. $n_2$ $D_6$ °ग्येतां. — $^{d}$) $B_{2-4}$ उडुंबरं. — After 23, $K_{1.2}$ B Dc Dn $D_{4.6}$ $T_2$ (marg. *sec. m.*) $G_3$ ins.:

570* चरुद्वयमिदं भद्रे जनन्याश्च तवैव च ।
त्रिश्चमावर्तयित्वा तु मया यत्नेन साधितम् ।
प्राशितव्यं प्रयत्नेन तेत्युक्त्वादर्शनं गतः ।

[(L. 1) $K_2$ $D_6$ तथैव (for तवैव). — (L. 2) Dc त्वया (for मया). — (L. 3) Dc च (for the second प्र-), and इत्यु° (for तेत्यु°).]

**24** $^{a}$) $D_5$ आलिंगनं. $Ś_1$ $D_5$ $G_2$ तु तं राजन्; $K_1$ B Dc Dn $D_{4.6}$ T $G_3$ चरौ चैव ($B_1$ $T_1$ राजन्); $D_{1.2}$ तु राजेंद्र (for तु ते राजन्). — $^{b}$) $Ś_1$ $K_{1.2}$ $B_{2-4}$ Dn $D_{4.6}$ $T_2$ $G_3$ ते; $G_1$ तु; $G_4$ सं- (for स्म). — $^{cd}$) $Ś_1$ तं स्म; $K_3$ तत्वं; $D_5$ $T_2$ $G_{2.3}$ तच्च (for तं च). — $K_2$ B Dc Dn $D_{4.6}$ subst. for 24$^{cd}$ ($B_{1.2}$ ins. after 24):

571* ततः पुनः स भगवान्काले बहुतिथे गते ।
दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः ।

**25** $Ś_1$ om. 25$^{ab}$. — After 25$^{ab}$, $K_{1.2}$ B Dc Dn $D_{4.6}$ $T_2$ (marg. *sec. m.*) $G_3$ ins.:

572* उपयुक्तश्चरुर्भद्रे वृक्षे चालिङ्गनं कृतम् ।
विपरीतेन ते सुभ्रूर्मात्रा चैवासि वञ्चिता ।

[(L. 1) Dc मात्रा (for भद्रे). — (L. 2) $Dn_2$ $D_{4.6}$ $T_2$ $G_3$ सुभ्रु; Dc भद्रे (for सुभ्रूर्).]

— $B_4$ om. 25$^{cd}$. — $^{c}$) $Ś_1$ $K_{1.2}$ क्षत्रवृत्तो वै ($K_1$ °त्तौ); $K_4$ क्षात्रवृत्तिर्वै; $D_{1.2}$ क्षत्रियमतिस्.

**27** $^{b}$) $T_2$ $G_{2-4}$ तु; $M_1$ वा (for सा). — $^{c}$) $Ś_1$ $K_{1.2}$ तादृक् (for ईदृक्). — $^{d}$) $K_{1.2}$ मम (for कामं). $K_{2.3}$ पुत्रो (for पौत्रो). $T_1$ भविष्यति (for भवेदिति).

न मे पुत्रो भवेदीदृक् कामं पौत्रो भवेदिति ॥ २७
एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता ।
जमदग्निं ततः पुत्रं सा जज्ञे काल आगते ।
तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥ २८
स वर्धमानस्तेजस्वी वेदस्याध्ययनेन वै ।
बहूनृषीन्महातेजाः पाण्डवेयात्यवर्तत ॥ २९
तं तु कृत्स्नो धनुर्वेदः प्रत्यभाद्भरतर्षभ ।
चतुर्विधानि चास्त्राणि भास्करोपमवर्चसम् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

# ११६

अकृतव्रण उवाच ।
स वेदाध्ययने युक्तो जमदग्निर्महातपाः ।
तपस्तेपे ततो देवान्नियमाद्वशमानयत् ॥ १
स प्रसेनजितं राजन्नधिगम्य नराधिपम् ।
रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ २
रेणुकां त्वथ संप्राप्य भार्यां भार्गवनन्दनः ।
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ॥ ३
तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ।
सर्वेषामजघन्यस्तु राम आसीज्जघन्यजः ॥ ४
फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत्कदाचिन्नियतव्रता ॥ ५
सा तु चित्ररथं नाम मार्तिकावतकं नृपम् ।

C. 3. 10176
B. 3. 116. 6
K. 3. 117. 6

---

**28** After $28^{ab}$, S ins.:

573* कालं प्रतीक्ष्य तं गर्भं धारयामास यत्नतः ।

— $^{d}$) Dn $D_{4.6}$ जज्ञे सा (by transp.). — $^{e}$) $T_1$ $G_1$ यशसा; $T_2$ $G_{2-4}$ तप° (for वर्च°).

**29** $^{b}$) $T_1$ $G_4$ °ध्ययने रतः (for °ध्ययनेन वै). $B_{2-4}$ Dc Dn $D_{4.6}$ $T_2$ $G_{2.3}$ च (for वै). — $^{d}$) $B_{2-4}$ Dc $G_1$ अभ्यव° (for अत्यव°). $D_{1.2}$ तोषयामास पांडव.

**30** $^{a}$) $B_1$ तस्य; $D_5$ तं च (for तं तु). — $^{b}$) $M_2$ प्रत्यगाद्. — $D_1$ om. $30^{cd}$. — $^{c}$) $Dn_2$ $T_2$ $G_{2.3}$ शास्त्राणि (for चा°). — $^{d}$) $Ś_1$ °वर्चसः; $K_4$ $D_2$ °दर्शनं; $B_{1.2}$ °तेजसः.

Colophon. — *Major parvan:* $Ś_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ M आरण्य. — *Sub-parvan:* $K_3$ $B_{1.3.4}$ Dc Dn $D_{1.2.4-6}$ (all om. sub-parvan name) mention only कार्तवीर्योपाख्यान; $K_4$ $B_2$ $D_3$, likewise, only लोमशतीर्थयात्रा (followed by कार्तवीर्योपाख्यान in $B_2$ $D_3$). — *Adhy. name:* $T_1$ $G_1$ जामदग्न्य($G_1$ °ग्नि)चरितं. — *Adhy. no.* (figures, words or both): $Dn_1$ 114; $Dn_2$ 115 (as in text); $Dn_3$ S 116 ($M_2$ 118); $D_1$ 120. — *Śloka no.:* Dn 46; $D_1$ 32.

## 116

☞ This adhy. is missing in $D_3$ (cf. v.l. 3. 114. 12); the MS. is generally ignored here.

**1** $^{c}$) $B_{2.4}$ Dc $Dn_1$. $n_3$ $D_{4.6}$ ततो वेदान्; $T_1$ महातेजा (for ततो देवान्). — After 1, $K_4$ $D_{1.2}$ ins.:

574* तं तप्यमानं ब्रह्मर्षिमूचुर्देवाः सवासवाः ।
किमर्थं तप्यसे ब्रह्मन्कः कामः प्रार्थितस्तव ।
एवमुक्तः प्रत्युवाच देवान्ब्रह्मर्षिसत्तमः ।
स्वर्गहेतोस्तपस्तप्ये लोकाश्च स्युर्ममाक्षयाः ।
तच्छ्रुत्वा वचनं तस्य तदा देवास्तमूचिरे । [5]
नासंततेर्भवेल्लोकः कृत्वा धर्मशतान्यपि ।
स श्रुत्वा वचनं तेषां त्रिदशानां कुरूद्वह ।

[ (L. 5) $D_2$ ब्रह्मर्षिणैवमुक्ते तु पुनरूचुर्दिवौकसः. — (L. 6) $D_2$ ब्रह्मर्षे नानपत्यस्य लोकाः संतीह चाक्षयाः. ]

**2** $^{b}$) $K_{1.4}$ $B_1$ $D_{1.2}$ S (except $G_1$ $M_1$) अभि° (for अधि°). — $B_1$ om. (hapl.) $2^{cd}$. — $^{d}$) $Ś_1$ $K_{1.2}$ नृप (for नृपः).

**3** $^{a}$) $D_{1.2}$ अथ; $G_1$ चापि (for त्वथ). $K_4$ रेणुकां तु समासाद्य. — $^{c}$) $D_{1.2}$ आश्रमे स (for °मस्थस्).

**4** $^{a}$) S (except $G_4$) तस्यां (for तस्याः). — $^{c}$) T $G_{2-4}$ च (for तु).

**7** $^{b}$) $D_{1.2}$ S (except $T_2$ $G_3$) हेम° (for पद्म°). — $^{c}$) $K_{3.4}$ $G_2$ $M_1$ ऋद्धिमत्तां.

**8** $^{a}$) $B_2$ Dn $D_{4.6}$ च (for तु). $Ś_1$ $K_2$ वै तस्मात्; $K_4$ S सा तस्मिन्; Dn (by transp.) तस्मात्सा. $D_{1.2}$ व्यभि-

C. 3. 10176
B. 3. 116. 6
K. 3. 117. 6

ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ६
क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ७
व्यभिचारात्तु सा तस्मात्क्लिन्नाम्भसि विचेतना ।
प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत ॥ ८
स तां दृष्ट्वा च्युतां धैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम् ।
धिक्शब्देन महातेजा गर्हयामास वीर्यवान् ॥ ९
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा ॥ १०
तानानुपूर्व्याद्भगवान्वधे मातुरचोदयत् ।
न च ते जातसंमोहाः किंचिदूचुर्विचेतसः ॥ ११
ततः शशाप तान्कोपात्ते शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः ॥ १२
ततो रामोऽभ्यगात्पश्चादाश्रमं परवीरहा ।
तमुवाच महामन्युर्जमदग्निर्महातपाः ॥ १३
जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः ।
तत आदाय परशुं रामो मातुः शिरोऽहरत् ॥ १४
ततस्तस्य महाराज जमदग्नेर्महात्मनः ।
कोपो *अगच्छत्सहसा प्रसन्नश्चाब्रवीदिदम् ॥ १५
ममेदं वचनात्तात कृतं ते कर्म दुष्करम् ।
वृणीष्व कामान्धर्मज्ञ यावतो वाञ्छसे हृदा ॥ १६
स वव्रे मातुरुत्थानमस्मृतिं च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ १७
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ।
ददौ च सर्वान्कामांस्ताञ्जमदग्निर्महातपाः ॥ १८
कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो ।
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत ॥ १९
तमाश्रमपदं प्राप्तमृषेर्भार्या समर्चयत् ।

---

चारेण सा चैव. — b) Ś1 K1. 2 क्लिन्नांगा वै; K3 Dc D5 क्लिन्नांगी वै; K4 D1. 2 संक्लिन्नांगी (for क्लिन्नाम्भसि). — After 8ab, T (T1 marg.) G2–4 ins.:

575* अन्तरिक्षान्निपतिता नर्मदायां महाह्रदे ।
उत्तीर्य चापि सा यत्नाजगाम भरतर्षभ ।

— c) T G [अ]थ संत्रस्ता (for [आ]श्रमं त्रस्ता). — d) T G1. 3. 4 तस्यै (for तां वै). T2 G3. 4 त्वबु°; G1 [अ]नुबु° (for [अ]न्वबु°).

9 a) D1. 2 दृष्ट्वा तां प्रच्युतां धैर्याद्. — b) K1. 2 ब्रह्म- (for ब्राह्म्या). — c) D1. 2 °वीर्यो (for °तेजा). — d) D1. 2 जगाद स तु वीर्य°.

10 b) K2 मरुता; K3 समन्वा; D1 सुतपो; T1 जमंडो (for रुमण्वान्). D2 भारत (for नामतः). — d) Dc T2 G2–4 तदा (for तथा).

11 a) K3. 4 B1–3 Dn2. n3 D1. 2. 4–6 °पूर्व्या (for °पूर्व्याद्). — c) K1 जातसंदोहाः; K4 G1 °संमोहात्; B2. 4 Dn D4. 6 °सं(Dn1 D4. 6 °स)स्नेहाः. — d) T2 G3. 4 अचे° (for विचे°).

12 a) B2–4 Dn D4. 6 T1 G4 M क्रोधात् (for कोपात्). — b) Dc सर्वे (for शप्ताश्).

13 a) B2. 4 Dn D4. 6 G4 M1 [ऽ]भ्ययात्. — b) D1. 2 °मं त्वं युधिष्ठिर. — c) B2. 4 Dn D4. 6 °बाहुर् (for °मन्युर्). — d) Ś1 K D5 प्रतापवान्; T2 G2–4 महायशाः (for °तपाः).

14 D4 om. (hapl.) 14a–15b. — After 14ab, G1 ins.:

576* इत्युक्तो गुरुणा राजन्क्रोधात्तु जमदग्निना ।

15 D4 om. 15ab (cf. v.l. 14). — a) Ś1 K1. 2 °बाहोर् (for °राज). — c) Ś1 K3. 4 D5 व्यगच्छत्; K1. 2 D2 G4 M [ऽ]प्यग°; B Dn D1. 4. 6 T2 G1–3 [ऽ]भ्यग°; Dc [ऽ]ध्यगाद्वै; T1 ह्यगच्छत् (for *अगच्छत्). — d) Dc सुतं (for इदम्). Ś1 K B1 D5 स प्रसन्नोब्रवीत्सुतं (B1 °त्तु तं).

16 a) Ś1 K B1 Dc राम (for तात). — b) T1 G1 कृतं कर्म सुदुष्करं. — c) D1. 2 T2 (before corr.) G1. 2. 4 कामं (for कामान्). Ś1 K धर्मात्मन् (for धर्मज्ञ). — d) K3. 4 यावंतो; Dc यांश्च त्वं; D1. 2 यावत्त्वं (for यावतो). Ś1 K1. 4 मत्त इच्छसि; D1. 2 मन्यसे हृदा (for वाञ्छसे हृदा).

17 b) Ś1 K D5 वधं प्रति (for वधस्य वै).

18 c) Ś1 K1. 4 स (for च). Dc D1. 2 सर्वकामांस्तान्; K4 सकलान्कामान्; T2 G2–4 M1 कामान्सर्वांस्तान् (for सर्वान्कामांस्तान्). Dn2 तान्कामान् (by transp.). T2 G3 स (for तान्). T1 ददौ तस्मै स कामांस्तान्.

19 b) G1 सु- (for वि-). — c) D1. 2 ततो°; G2 तदा°; G4 अथो° (for अथा°).

20 b) D5 मुनिभार्या; G3. 4 ऋषिरर्घ्यात् (for ऋषेर्भार्या). Dn D4–6 T2 G3. 4 समार्च° (for समर्च°). Ś1 K2. 4 ऋषिः

स युद्धमदसंमत्तो नाभ्यनन्दत्तथार्चनम् ॥ २०
प्रमथ्य चाश्रमात्तस्माद्धोमधेन्वास्तदा बलात् ।
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ २१
आगताय च रामाय तदाचष्ट पिता स्वयम् ।
गां च रोरूयतीं दृष्ट्वा कोपो रामं समाविशत् ॥ २२
स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत् ।
तस्याथ युधि विक्रम्य भार्गवः परवीरहा ॥ २३
चिच्छेद निशितैर्भल्लैर्बाहून्परिघसंनिभान् ।
सहस्रसंमितान्राजन्प्रगृह्य रुचिरं धनुः ॥ २४
अर्जुनस्याथ दायादा रामेण कृतमन्यवः ।
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् ॥ २५
ते तं जघ्नुर्महावीर्यमयुध्यन्तं तपस्विनम् ।
असकृद्राम रामेति विक्रोशन्तमनाथवत् ॥ २६
कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
घातयित्वा शरैर्जग्मुर्यथागतमरिंदमाः ॥ २७
अपक्रान्तेषु चैतेषु जमदग्नौ तथागते ।
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः ॥ २८
स दृष्ट्वा पितरं वीरस्तथा मृत्युवशं गतम् ।
अनर्हन्तं तथाभूतं विललाप सुदुःखितः ॥ २९

C. 3. 10200
B. 3. 116. 29
K. 3. 117. 30

इति श्रीमहाभारते आरण्यकपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

पत्न्या सहार्चयत्; K3 Dc ऋषिभार्या तमर्च( Dc समार्प )यत्; D1. 2 सभार्यो मुनिरर्चयत्; T2 G3 ऋषिर्भावात्समार्च°. — [c]) K1 बाहुमद°; T2 G3. 4 युद्धमानसो मत्तो. — [d]) K3. 4 Dn3 D1. 2. 4. 6 अथ; T2 G2–4 तद् (for तथा). Ś1 अर्चनात्; K2 T2 G2–4 M अर्चनां (for अर्चनम्). T1 नाभ्यनंदत भारत.

**21** [a]) T1 प्रगृह्य; T2 G2–4 प्रमत्तश् (for प्रमथ्य). Ś1 आश्रमात्; M2 चार्चनां (for चाश्रमात्). G1 तां पूजां कार्तवीर्योथ. — [b]) Ś1 K1. 2 कामधेन्वास्; K3 होमधेनुर्; K4 B Dc Dn D2. 4–6 होमधेनोस्; D1 T1 होमधेनुं. K3 महा-; K4 B4 Dn D2. 4. 6 तथा; Dc S ततो; D1 यथा (for तदा). — [d]) K1. 2 °द्रुमम् (for °द्रुमान्).

**22** [b]) D1. 2 T2 G2–4 M2 तमा° (for तदा°). — [c]) B Dc Dn D4. 6 G4 रोरुदतीं (for रोरू°). D1. 2 तथाविधं तु तं दृष्ट्वा.

**23** [a]) K1. 4 B2. 4 Dn D4. 6 मृत्यु° (for मन्यु°). K3 B2–4 Dn D4. 6 आपन्नं (for आपन्नः). — [c]) Ś1 संगम्य; K2 संक्रम्य (for वि°). G1 स्वयं च कार्तवीर्यस्य. — [d]) G1 भार्गवः (for महात्मा).

**24** K1. 2 B2–4 Dc Dn D4. 6 T2 (marg.) G3 ins. after 24 : B1, after 24[ab] :

577* अभिभूतः स रामेण संयुक्तः कालधर्मणा ।

B4 cont. :

578* आगत्य कर्म तत्पित्रे निवेद्य गतवान्वनम् ।

**25** [a]) D1. 2 च (for [अ]थ). — [c]) Ś1 K1. 2 D1. 2 तदा राजन् (for विना रामं).

**26** [a]) Dc तं ते जग्मुर्महावीर्या.

**27** [c]) Ś1 K3 पात°; K1. 2. 4 B Dc Dn D4–6 M2 पीड°; T2 G3 साद° (for घात°). Ś1 D1. 2 क्षुद्रा (for जग्मुर्). — [d]) M °दम (for °दमाः). Ś1 D1. 2 जग्मुर्येनागता नृप (Ś1 °पाः). — After 27, B4 ins. a colophon.

**28** [a]) Ś1 K1. 2 B1. 3. 4 Dc Dn2. n3 D2. 6 T1 वै तेषु (for चैतेषु). — [b]) D1. 2 मृते (for -गते).

**29** [b]) K4 D1. 2 तदा (for तथा). — [c]) Ś1 K2. 4 अनागसं; K1 D1. 2 S (except M1) अतदर्हं (for अन°). Ś1 K D5 महात्मानं (for तथा°).

Colophon om. in K3 B4 D5. G4 broken. — *Major parvan :* Ś1 K1. 2 D6 T G2. 3 M1 आरण्य. — *Sub-parvan :* Ś1 K (K3 om.) B (B4 om.) Dc Dn1. n3 D2–4. 6 (all om. sub-parvan name) mention only कार्तवीर्यो( B1 °वीर्यवधो )पाख्यान; D1, likewise, only लोमशतीर्थयात्रा, followed by कार्तवीर्योपाख्यान. — *Adhy. name :* T1 जमदग्निवधः; G1 जामदग्न्यचरितं. — *Adhy. no.* (figures, words or both): Dn2 116 (as in text); Dn3 S (G4 broken) 117 (M2 119); D1 121. — *Śloka no. :* Dn 29; D1 33.

## 117

☞ This adhy.. is missing in D3 (cf. v.l. 3. 114. 12); the MS. is generally ignored here.

**4** [b]) K4 महत्सु च; D1. 2 मुमूर्षवः (for सुहृत्सु च). Ś1 K1. 2 वा (for च). — [d]) T G2–4 तातं (for एकं). K4 D1. 2 गतत्रपाः; B2m नराधमाः (for [अ]नपत्रपाः).

# ११७

C. 3. 10201
B. 3. 117. 1
K. 3. 118. 1

राम उवाच ।
ममापराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः ।
कार्तवीर्यस्य दायादैर्वने मृग इवेषुभिः ॥ १
धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे ।
मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः ॥ २
किं नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः ।
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितैः ॥ ३
किं नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च ।
अयुध्यमानं धर्मज्ञमेकं हत्वानपत्रपाः ॥ ४
अकृतव्रण उवाच ।
विलप्यैवं स करुणं बहु नानाविधं नृप ।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ५
ददाह पितरं चाग्नौ रामः परपुरंजयः ।
प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत ॥ ६
संक्रुद्धोऽतिबलः शूरः शस्त्रमादाय वीर्यवान् ।
जघ्निवान्कार्तवीर्यस्य सुतानेकोऽन्तकोपमः ॥ ७
तेषां चानुगता ये च क्षत्रियाः क्षत्रियर्षभ ।
तांश्च सर्वानवामृद्नाद्रामः प्रहरतां वरः ॥ ८
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ९
स तेषु तर्पयामास पितॄन्भृगुकुलोद्वहः ।
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत् ॥ १०
ततो यज्ञेन महता जामदग्न्यः प्रतापवान् ।
तर्पयामास देवेन्द्रमृत्विग्भ्यश्च महीं ददौ ॥ ११
वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने ।
दशव्यामायतां कृत्वा नवोत्सेधां विशां पते ॥ १२
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा ।
व्यभजंस्तेन ते राजन्प्रख्याताः खाण्डवायनाः ॥ १३

---

**5** N T$_1$ om. the ref. — $^a$) Ś$_1$ विलाप्यैवं; K$_{1.3}$ B Dc Dn D$_{4-6}$ T$_2$ G$_3$ लाल°. K$_1$ सु-; D$_5$ तु (for स). — $^b$) T$_2$ (before corr.) G$_4$ बहुना विधिवन्नृप. — $^d$) Ś$_1$ damaged. K D$_{2.5}$ परंतपः (K$_4$ D$_5$ °तप) (for महातपाः).

**6** $^c$) T$_1$ G$_2$ M तेषां (for चापि). — $^d$) S चासकृत् (for भारत).

**7** Ś$_1$ damaged. — $^a$) K$_{3.4}$ B$_{1.3}$ M$_2$ स क्रुद्धो; M$_1$ क्रुद्धोति- (for संक्रुद्धो). T G भार्गवः; M$_1$ बलवान् (for ऽतिबलः). B$_{2.3}$ Dn D$_{4.6}$ संख्ये; B$_4$ यातः (for शूरः). — $^d$) K$_4$ Dc D$_{1.2}$ एवांतको°; M$_1$ एको महाबलः; M$_2$ एकांतको°.

**8** Ś$_1$ damaged. — $^a$) T$_1$ G$_1$ तांश्चैवा° (for तेषां चा°). K D$_{1.2.5}$ M तेषां ये चानुगाः (M$_2$ येनुगताः) केचित्. — $^c$) K$_{1.3}$ अपामृद्नन्; K$_4$ उपामृद्नाद्; Dc अथामृ°; D$_{1.2}$ T$_2$ G$_3$ M अपामृ°; D$_5$ अगृह्णीत (for अवामृ°). — $^d$) Dc रामः परपुरंजयः; M रामः शस्त्रभृतां वरः.

**9** Ś$_1$ damaged. — $^b$) K$_{1.2}$ D$_5$ ततः; K$_3$ Dc विभुः; D$_2$ प्रभो; T$_2$ G$_3$ पुनः (for प्रभुः). — $^d$) B$_{1.3.4}$ Dc रुधिरैर्; B$_2$ D$_{4-6}$ रौधिरान् (for रुधिर-). — Cf. Sukthankar, "Epic Studies (VI)", *Annals of the Bhandarkar Or. Res. Inst.*, vol. 18 (1936), p. 24.

**10** Ś$_1$ damaged. — $^b$) K$_2$ Dn D$_{1.2.4-6}$ भृगून् (for पितॄन्). K$_{2.3}$ Dc D$_5$ भृगुकुलोद्वह; T G कुरुकुलोद्वह. — $^c$) K$_{3.4}$ (marg. *sec. m.*) B$_1$ D$_{1.2}$ T$_2$ G$_{1-3}$ चार्चीकं; K$_4$ चाशंकं; B$_4$ चार्वाकं (for चर्चीकं). — $^d$) B$_3$ Dn D$_{4.6}$ न्यवेद° (for न्यवार°). K Dc D$_6$ स च तं प्रत्य(D$_5$ पर्य)वार°; B$_2$ स रामं संन्यवेद°.

**11** Ś$_1$ damaged. — $^d$) K D$_5$ ऋत्विजे (for ऋत्विग्भ्यश्च). B$_2$ Dn D$_{4.6}$ प्र-; D$_{1.2}$ [अ]थ (for च). B$_2$ Dn D$_{4.6}$ -ददौ महीं (by transp.).

**12** Ś$_1$ damaged up to °व्यामा (in $^c$). — $^a$) K$_{1.4}$ T G$_{2.3}$ M$_2$ चाप्यददात्; D$_{1.2}$ M$_1$ च प्रददौ. — $^b$) Dc Dn$_1$ D$_{4.6}$ S काश्यपाय. — $^c$) B Dc T$_1$ G$_1$ °व्यामां तु तां; T$_2$ (before corr.) G$_2$ °व्यामयुतां; G$_4$ व्यायतनं. ❀ Cn: व्यायामेति प्रमादपाठः । ❀ — $^d$) Ś$_1$ K$_3$ Dc T$_1$ G$_1$ नरो° (for नवो°). D$_{1.2}$ हिरण्मयीं (for विशां पते).

**13** $^a$) B$_{1.4}$ Dc G$_{1.2}$ M काश्यपस्य. — $^b$) Ś$_1$ K$_{2.4}$ तु ये (K$_4$ ते); K$_1$ D$_{1.2}$ G$_2$ तथा (for तदा). — $^c$) K$_4$ तेन वै; B$_{2.4}$ Dn D$_{4-6}$ G$_1$ ते तदा (for तेन ते). D$_{1.2}$ व्यभंजंत ततो राजन्. — $^d$) Ś$_1$ K$_{1.2}$ खं(Ś$_1$ खां)डवाहनाः.

स प्रदाय महीं तस्मै कश्यपाय महात्मने ।
अस्मिन्महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः ॥ १४
एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः ।
पृथिवी चापि विजिता रामेणामिततेजसा ॥ १५
वैशंपायन उवाच ।
ततश्चतुर्दशीं रामः समयेन महामनाः ।
दर्शयामास तान्विप्रान्धर्मराजं च सानुजम् ॥ १६
स तमानर्च राजेन्द्रो भ्रातृभिः सहितः प्रभुः ।
द्विजानां च परां पूजां चक्रे नृपतिसत्तमः ॥ १७
अर्चयित्वा जामदग्न्यं पूजितस्तेन चाभिभूः ।
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः ॥ १८

इति श्रीमहाभारते आरण्यकपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## ११८

वैशंपायन उवाच ।
गच्छन्स तीर्थानि महानुभावः
पुण्यानि रम्याणि ददर्श राजा ।
सर्वाणि विप्रैरुपशोभितानि
क्वचित्क्वचिद्भारत सागरस्य ॥ १
स वृत्तवांस्तेषु कृताभिषेकः

C. 3. 10215
B. 3. 118. 2
K. 3. 119. 2

**14** $^{a}$) B1. 2 Dc D5 T2 (after corr.) G3. 4 M1 सं- (for स). D2 महीं च तस्मै प्रादाय. — $^{b}$) B1 Dc2 D4. 6 T G2. 3 M काश्यपाय. D1. 2 जामदग्न्यो महातपाः. — Ś1 K B1. 2. 4 D5 T1 ins. after 14$^{ab}$: Dc G1, after 14:

579* तपः सुमहदास्थाय महाबलपराक्रमः ।

— $^{c}$) K1. 4 Dc2 D1 T2 G3 M1 महेंद्र. — T1 transp. महेन्द्रे and वसति (in $^{d}$).

**15** Before 15, K1. 2. 4 D1. 2 ins. अकृतव्रण उ°. — $^{b}$) Ś1 K1. 2. 4 D5 भरतर्षभ; D1. 2 लोकविश्रुतैः. — $^{c}$) Ś1 पृथुना (for पृथिवी). Ś1 K D1. 2. 5 च (K4 D2 वि-) जिता कृत्स्ना (for चापि विजिता).

**16** $^{a}$) Ś1 K1. 2 चतुर्दश्यां (for °र्दशीं). D1. 2 चतुर्दश्यां ततो रामः. — $^{b}$) Ś1 K1 D5 °त्मना; K3. 4 D1. 2 S °तपाः (for °मनाः). — $^{d}$) B4 °नुगं (for °नुजम्). Ś1 K Dc D1. 2. 5 पांडवं च (K1 °वांश्च) सहानुगं (K4 महाभुजं; D1. 2 युधिष्ठिरं; D5 सहानुजं).

**17** $^{a}$) K4 Dc D1. 2. 5 अभ्यर्च्य (for आनर्च). K2. 3 B Dn D4. 6 G4 राजेंद्र. — $^{b}$) B1 प्रभुं (for प्रभुः). — $^{c}$) K3. 4 S स च (T2 G2–4 हि) तस्मै; D1. 2 ब्राह्मणानां (for द्विजानां च).

**18** $^{a}$) K3 B Dn D2. 4. 6 अर्चित्वा जामदग्न्यं स. — $^{b}$) Dc चापि (for तेन). Ś1 K1. 2 च प्रभो; K3 वाभिभुः; B Dn D4. 6 चोदितः; Dc तेन सः; D5 वै विभुः (for चाभिभूः). — $^{c}$) Ś1 उषित्वा; K1. 2 उषितां (for उष्य तां). D1. 2 तामेव च निशामुष्य. — After 18$^{c}$, D1. 2 ins.:

580* महेन्द्रे पर्वतोत्तमे ।
राममामन्त्र्य धर्मात्मा.

Colophon. — *Major parvan*: Ś1 K1. 2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan*: B4 तीर्थयात्रा. Ś1 K1–3 B1. 2 Dc Dn1. n3 D2–6 (all om. sub-parvan name) mention only कार्तवीर्यो(B1 °वीर्यवधो)पाख्यान; K4 D1, likewise, only लोमशतीर्थयात्रा, followed by कार्तवीर्यवधो(K4 °र्यस्यो)पाख्यान; and Dn2 only कार्तवीर्यवध. To कार्तवीर्योपाख्यान, Ś1 D1–3. 5 add समाप्त. — *Adhy. name*: B4 जामदग्न्योपाख्यानं; T2 G3 जामदग्न्यविजयकथनं; G1 जामदग्न्यचरितसमाप्तिः. — *Adhy. no.* (figures, words or both): Dn2 117 (as in text); Dn3 S 118 (M2 120); D1 122. — *Śloka no.*: Dn 18.

## 118

☞ D3 is missing up to 15$^{c}$ (cf. v.l. 3. 114. 12); the MS. is generally ignored up to 15$^{ab}$.

**1** $^{b}$) K3 [अ]रण्यानि (for रम्याणि). — $^{c}$) Ś1 K2–4 समानि (for सर्वाणि).

**2** $^{a}$) Ś1 K1. 2. 4 D5 स धर्मराजः सु(K1 °राजाभि-; D5 °राजश्च)कृ°; D1. 2 समुद्रतीर्थेषु कृ°. — $^{b}$) Ś1 K1. 2 T2 G3. 4 °पौत्रैः; K3 °पौत्रवान् (for °पौत्रः). — $^{c}$) D1. 2 समुद्रगाः °तमाः °त्वाः. — Dc om. 2$^{cd}$. — $^{d}$) T2 G2. 3 M

C. 3. 10215
B. 3. 118. 2
K. 3. 119. 2

सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां
जगाम पारिक्षित पाण्डुपुत्रः ॥ २
तत्रापि चाप्लुत्य महानुभावः
संतर्पयामास पितृन्सुरांश्च ।
द्विजातिमुख्येषु धनं विसृज्य
गोदावरीं सागरगामगच्छत् ॥ ३
ततो विपाप्मा द्रविडेषु राज-
न्समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च पवित्रपुण्यं
नारीतीर्थान्यथ वीरो ददर्श ॥ ४
तत्रार्जुनस्याग्र्यधनुर्धरस्य
निशम्य तत्कर्म परैरसह्यम् ।
संपूज्यमानः परमर्षिसंघैः
परां मुदं पाण्डुसुतः स लेभे ॥ ५
स तेषु तीर्थेष्वभिषिक्तगात्रः
कृष्णासहायः सहितोऽनुजैश्च ।
संपूजयन्विक्रममर्जुनस्य
रेमे महीपालपतिः पृथिव्याम् ॥ ६
ततः सहस्राणि गवां प्रदाय
तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टः सह भ्रातृभिरर्जुनस्य
संकीर्तयामास गवां प्रदानम् ॥ ७
स तानि तीर्थानि च सागरस्य
पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन्परिपूर्णकामः
शूर्पारकं पुण्यतमं ददर्श ॥ ८
तत्रोदधेः कंचिदतीत्य देशं
ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैर्यत्र तपः पुरस्ता-
दिष्टं तथा पुण्यतमैर्नरेन्द्रैः ॥ ९
स तत्र तामग्र्यधनुर्धरस्य

---

पारीक्षित. K4 पुत्रपौत्रः (for पाण्डु°).

**3** a) Ś1 K1. 2 °भावान् (for °भावः). — b) K3 T1 G2 M2 सुरान्पितॄंश्च (by transp.); B2 पितॄंश्च देवान्.

**4** a) Ś1 K3 T1 G2 M1 द्रमिडेषु; K1 विडमेषु; G1. 4 M2 द्रमिळेषु. K3 Dc T G3 M राजा (for राजन्). D2 ततो वितीर्थानि ददर्श पंच. — D2 om. 4bcd. — c) K3. 4 D1 परमं पवित्रं; B Dc Dn D4. 6 च महापवित्रं; D5 च अतीव पुण्यं; M1 च जगाम पुण्यं (for च पवित्र°). — d) T2 G3. 4 अन्यानि (for नारी-). K3 अथ वाप्यभ्यपश्यत्; D5 अथ समेत्य पश्यन्; T1 G1 अथ चैवाभ्यगच्छत्; T2 G2–4 अथ सोभ्यगच्छत्; M अत्र (M2 तत्र) चैवाभ्यगच्छत् (for अथ वीरो ददर्श). D1 नाराचतीर्थानि ददर्श पंच.

**5** a) Ś1 ततो; D5 तथा; T G1. 3. 4 तेषु; M1 तस्य (for तत्र). Ś1 K1. 3. 4m Dc2 Dn2 D1. 5 G1 अग्र-; T2 G2–4 अथ (for अग्र्य-). — b) K3. 4 निशाम्य. Ś1 K B Dc Dn D4–6 T2 G3 नरैर् (K1 करैर्) (for परैर्). B Dn D4. 6 अशक्यं (for असह्यम्). — c) Ś1 K1. 2 D5 संपूजयामास महर्षिसंघान्. — d) K3 तनु सदा (sic); K4 M तत्र तदा (for पाण्डुसुतः). B2 च; M2 [उ]प- (for स). Ś1 K1. 2 D5 अन्वागतश्चापि महर्षिसंघैः; D1. 2 मुदं परां तत्र स चैव लेभे.

**6** K3 om. (hapl.) 6d–8a. — d) B Dn D1. 2. 4–6 M1 पृथिव्याः (for °व्याम्).

**7** K3 om. 7 (cf. v.l. 6). — a) T1 G1 द्विजातिमुख्येषु महीपतिः स (= [var.] 3c). — b) Ś1 K2 °त्तरस्य (for °त्तमस्य). — After 7, M ins.:

581* ततस्तु कावेरिमनन्ततोयां
दिव्याश्रमैर्नित्यमुपात्ततोयाम् ।
सहानुजः संप्रविगाह्य पुण्यां
ननन्द नष्टक्लमशोकपापः ।

**8** K3 om. 8a (cf. v.l. 6). — b) D6 धन्यानि (for चा°). K1 निषेव्य (for बहूनि). Dc D1. 2 राजा; T1 G1 गच्छन् (for राजन्). K3 बहूनि चान्यानि निषेव्य राजन्. — c) K4 T1 G1 राजन् (for गच्छन्). — d) S (except G1. 2) शूर्पाक(T1 °का)रं (for °रकं).

**9** a) B2 ततोदधिं; Dc ततोदधेः. K1. 2 B1 D1 T1 G2 M1 किं° (for कं°). — c) T2 (before corr.) G4 ततः (for तप्तं). K1. 2 transp. सुरैः and तपः. Dn D5. 6 अत्र (for यत्र). — d) K1 °तमं; B Dn D4–6 °परैर् (for °तमैर्).

**10** a) Cf. 5a. K1. 2. 4 D5 तामग्र्यतपोधनस्य. — b)

वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसंघैः
समावृतां पुण्यकृदर्चनीयाम् ॥ १०
ततो वसूनां वसुधाधिपः स
मरुद्गणानां च तथाश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणा-
मिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ११
भगस्य चन्द्रस्य दिवाकरस्य
पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा
रुद्रस्य राजन्सगणस्य चैव ॥ १२
सरस्वत्याः सिद्धगणस्य चैव
पूष्णश्च ये चाप्यमरास्तथान्ये ।
पुण्यानि चाप्यायतनानि तेषां
ददर्श राजा सुमनोहराणि ॥ १३
तेषूपवासान्विविधानुपोष्य
दत्त्वा च रत्नानि महाधनानि ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः
पुनः स शूर्पारकमाजगाम ॥ १४
स तेन तीर्थेन तु सागरस्य
पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भि-
स्तीर्थं प्रभासं समुपाजगाम ॥ १५
तत्राभिषिक्तः पृथुलोहिताक्षः
सहानुजैर्देवगणान्पितॄंश्च ।
संतर्पयामास तथैव कृष्णा
ते चापि विप्राः सह लोमशेन ॥ १६
स द्वादशाहं जलवायुभक्षः
कुर्वन्क्षपाहःसु तदाभिषेकम् ।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतां वरिष्ठः ॥ १७
तमुग्रमास्थाय तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ १८
ते वृष्णयः पाण्डुसुतान्समीक्ष्य
भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा

C. 3. 10232
B. 3. 118. 19
K. 3. 119. 19

K4 D5 °बाहुरम्यां (for °पीनबाहुः). — c) K3 B2 S आर्चीक° (for ऋचीक°). — d) K1. 4 °चितां; K3 °श्रितां (for °वृतां).

**12** G4 om. $12^{ab}$. — a) K3 B Dc Dn D4. 6 भव° (for भग°). — b) K4 पत्युस्त्वपां (for पतेरपां). — c) T2 G पार्थः (for धातुः). — d) Ś1 K चापि (for चैव). D1. 2 सगणाधिपस्य (for सगणस्य चैव).

**13** G4 om. $13^{ab}$. — b) B4 Dn पुण्याश्च; Dc पूज्या° (for पूष्ण°). G1 [अ]परास् (for [अ]मरास्). — c) Ś1 K D1. 2. 5 तीर्था° (for चाप्या°).

**14** b) D1. 2 दानानि (for रत्नानि). K4 S महानुभावः; B Dc Dn D4. 6 महांति राजा; D1. 2 तथा द्विजेभ्यः (for महा°). — c) Ś1 K1–3 D1. 2. 5 पुण्ये°; K4 M रम्ये° (for सर्वे°). — d) Ś1 K1. 2 G1 च (for स). K2–4 Dc D1. 4. 5 सूर्पारकम्; S (except G2) शूर्पाकरम्. T2 G1. 3 आससाद (for आज°).

**15** a) K S (except G4 M2) तीरेण (for तीर्थेन). T2 G2–4 च (for तु). — G4 om $15^{cd}$. — c) S (G4 om.) कथितं (for प्र°). T2 G3 ध्रुवद्भिस् (for महद्भिस्). — D3 resumes! — d) K4 D1–3 च ततो ज° (for समुपाज°).

**16** D5 (om. hapl.) $16^{b}$–$17^{a}$. — b) B2 ऋषींश्च (for पितॄं°). — d) G1 तैश्चापि (for ते चापि).

**17** D5 om. $17^{a}$ (cf. v.l. 16). — b) Ś1 K2 सदाहःसु; K3 D1 G4 क्षपाहः स; T G2. 3 क्षपाहं स (for क्षपाहःसु). D5 T2 G2–4 तथा°; T1 M ततो° (for तदा°). — c) Ś1 °दंस°; K1. 2 °जीव° (for °दीप°).

**18** a) S स(M त)मागतं तत्र (for तमुग्र°). Ś1 K2. 3 D3. 5 तपो वसंतं (for तप°). D1. 2 तमुग्ररूपे तपसि प्रपन्नं. — c) D1. 2 वृष्णिलोक°; T2 G3. 4 वृष्णिवीर° (for सर्ववृष्णि°). D1. 2 प्रवीरौ (for ससैन्यौ).

**19** a) Ś1 K2 सुतीक्ष्णान्; K4 निरीक्ष्य (for समीक्ष्य). — b) Ś1 K Dc D3. 5 °पंकदिग्धान् (for °दिग्धगात्रान्). — c) T2 G3. 4 सुदुःखितां (for अनर्हतीं). — d) G1. 4

C. 3. 10232
B. 3. 118. 19
K. 3. 119. 19

सुदुःखिताश्रुक्रुशुरार्तनादम् ॥ १९
ततः स रामं च जनार्दनं च
काष्र्णिं च साम्बं च शिनेश्च पौत्रम् ।
अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममदीनसत्त्वः ॥ २०
ते चापि सर्वान्प्रतिपूज्य पार्थां-
स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं संपरिवार्य राज-
न्नुपाविशन्देवगणा यथेन्द्रम् ॥ २१
तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
कृष्णे शशंसामरराजपुत्रम् ॥ २२
श्रुत्वा तु ते तस्य वचः प्रतीता-
स्तांश्चापि दृष्ट्वा सुकृशानतीव ।
नेत्रोद्भवं संमुमुचुर्दशार्हा
दुःखार्तिजं वारि महानुभावाः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

# ११९

जनमेजय उवाच ।
प्रभासतीर्थं संप्राप्य वृष्णयः पाण्डवास्तथा ।
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन ॥ १
ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः ।

---

सुदुःखितान्. K3 M चक्रुरतीव नादान् (M2 °नादं) (for चुक्रु° etc.). B1 D3. 5 T2 G2–4 आर्तनादान्; Dc T1 G1 °नादाः (for °नादम्).

**20** a) M2 राजा ह (for ततः स). — b) D1. 2 वृष्णींश्च (for कार्ष्णिं च). K4 D5 शांबं च; D1. 2 सर्वांश्च (for साम्बं च). K1. 2 T2 G3 पुत्रं (for पौत्रम्). — c) Ś1 K B4 D1–3. 5 राजा (for पूजां). — d) Ś1 अधीन°; Dn2. n3 D6 G4 अहीन° (for अदीन°). D1. 2 चक्रे यथासंविदं धर्मसूनुः.

**21** a) Dc D1. 3 सर्वे (for सर्वान्). D1 सर्वास् (for पार्थान्). Ś1 K D5 तैश्चापि सर्वैः प्रतिपूजि(K1 °पादि)तश्च (K3. 4 °तः सः). — b) Ś1 K D3. 5 ते; Dc सु- (for तैः). Ś1 K1. 2 D1 T1 G1. 2. 4 M1 °सुतास् (for °सुतैस्).

**22** a) Ś1 K D3. 5 M तु; Dc Dn2 D2 च (for स). — c) G1 M इंद्रं च (for इन्द्रस्य). — d) T2 G3. 4 कृष्णः (for कृष्णे). B Dc Dn D4. 6 निवेशनं हृष्टमनाः शशंस.

**23** a) Ś1 K1. 2. 4 D1–3. 5 च (for तु). Ś1 K2 पुनः (for वचः). — b) T2 G2–4 सुकृतीन्; G1 [अ]तिकृशान् (for सुकृ°). — c) Ś1 °द्भवाश्रुं; K2 °द्भवासुं (for °द्भवं सं-). B Dn D4. 6 G2 महार्हा (for दशार्हा). — d) D1. 2 सर्वे तदा (for दुःखा°). Ś1 K D1–3. 5 दुःखकरा (K3 D2 °करं; D1 °तरं) रिपूणां (for वारि महा°).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan:* B1. 3. 4 Dc Dn D4. 6 तीर्थयात्रा. K4 B2 D1. 2 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* Ś1 K1. 2 वृष्णिसमागमः; K3 वृष्ण्यागमनं; B4 कृष्णागमनं; D3. 5 वृष्णिपांडवयोः (D5 °डव-) समागमः; M2 वासुदेवदर्शनं. — *Adhy. no.* (figures, words or both): Dn1 117; Dn2 118 (as in text); Dn3 S 119 (M2 121); D1 123. — *Śloka no.:* Dn D1 23.

## 119

**1** a) Ś1 K1. 2 B2 Dn D1. 2. 4. 6 आसाद्य (for संप्राप्य); cf. v.l. 3. — b) Dn D4. 6 पांडवा वृष्णयस् (by transp.). Ś1 K1. 2 T1 तदा (for तथा). — c) K3 D5 चैव; D1–3 T2 (before corr.) G4 तेषां (for चैषां). — d) Ś1 K1. 2 के; G1 ते (for कास्). Dn2 D4. 6 तथा (for तत्र). Ś1 K1. 2 °वने (for °धन).

**2** a) Dc [ऽ]पि; T2 G2–4 च (for हि). — b) T2 G3. 4 सर्वे शस्त्र° (for सर्वशास्त्र°).

**3** a) B2 D1–3 T2 G3. 4 आसाद्य (for संप्राप्य); cf.

वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ २

वैशंपायन उवाच ।

प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान्वीरान्परिवार्योपतस्थिरे ॥ ३
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ४

न कृष्ण धर्मश्चरितो भवाय
जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्र जटी महात्मा
वनाश्रयः क्लिश्यति चीरवासाः ॥ ५
दुर्योधनश्चापि महीं प्रशास्ति
न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो गरीया-
नितीव मन्येत नरोऽल्पबुद्धिः ॥ ६
दुर्योधने चापि विवर्धमाने
युधिष्ठिरे चासुख आत्तराज्ये ।
किं न्वद्य कर्तव्यमिति प्रजाभिः
शङ्का मिथः संजनिता नराणाम् ॥ ७
अयं हि धर्मप्रभवो नरेन्द्रो
धर्मे रतः सत्यधृतिः प्रदाता ।
चलेद्धि राज्याच्च सुखाच्च पार्थो
धर्मादपेतश्च कथं विवर्धेत् ॥ ८
कथं नु भीष्मश्च कृपश्च विप्रो
द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान्सुखमाप्नुवन्ति
धिक्पापबुद्धीन्भरतप्रधानान् ॥ ९
किं नाम वक्ष्यत्यवनिप्रधानः
पितॄन्समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति
पुत्रानपापानवरोप्य राज्यात् ॥ १०
नासौ धिया संप्रतिपश्यति स्म
किं नाम कृत्वाहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु
प्रव्राज्य कौन्तेयमथापि राज्यात् ॥ ११

C. 3. 10247
B. 3. 119. 11
K. 3. 120. 11

---

v.l. 1). Dc प्रभासं ते समासाद्य. — $^b$) $K_1$ $D_3$ पुण्यं तीरे; $K_3$ पुण्ये तीरे; $K_4$ पुण्यतीरे; $B_{1.3}$ Dc S पुण्यतीर्थं; $D_1$ पुण्यतीर्थे; $D_2$ पुण्ये तीर्थे; $D_5$ पुण्यं तीरं. — $^c$) N (except $K_1$ $B_1$ $Dc_2$ $D_1$) वीराः (for वीरान्).

**6** $^c$) $Dn_2$. $n_3$ $G_1$ वरीयान् (for गरी°). — $^d$) $K_{1.2}$ M [ए]व (for [इ]व). $D_{1.2}$ धर्मं च विंदामि महानुभाव.

**7** Ś$_1$ damaged. — $^a$) K $B_3$ Dc $D_{3.5}$ °धनं वीक्ष्य; $D_{1.2}$ °धनं चापि (for °धने चापि). The same MSS. °मानं (for °माने). — $^b$) K $B_3$ Dc $D_{1-3.5}$ युधिष्ठिरं. K B Dc Dn $D_{3-6}$ चा($B_1$ वा)सुखम्. K $B_3$ Dc $D_6$ आत्तराज्यं; $D_3$ अंतरोष्णं; $D_5$ आसवंतं; $T_1$ आत्तसारे; $T_2$ $G_{2.4}$ आर्ते($T_2$ °र्ति)राज्ये. $D_{1.2}$ वा वनवासक्लिष्टं (for चासुख आत्त°). — After $7^{ab}$, $T_1$ $G_1$ ins.:

582* हृतस्वराज्यायतनार्थभार्ये
दुर्योधनेनाल्पधिया च पार्थे ।

— $^c$) $K_{1.4}$ B Dc $D_{1.2}$ $T_1$ $G_1$ किं त्वद्य; $K_{2.3}$ Dn $D_{4-6}$ $G_2$ किं त्वत्र; $T_2$ $G_{3.4}$ किंचिन्न; $M_2$ किं न्वत्र. $D_3$ वर्तव्यम्; $T_1$ कर्ताहम्; $G_4$ वक्तव्यम् (for कर्तव्यम्). $K_{1.3.4}$ Dc $D_{1.2.6}$ S (except $G_1$) इह; $D_3$ ऊचुः (for इति). — $^d$) $D_{1.2}$ सशंकता (for शङ्का मिथः).

**8** $^a$) B Dc Dn $D_4$ $M_2$ स (for हि). — $^b$) $K_3$ वृतः; $K_4$ $D_{1-3}$ स्थितः; $B_{1.3.4}$ Dc Dn $D_{4-6}$ धृतः; $T_2$ $G_3$ रतिः $G_1$ धृतिः (for रतः). Ś$_1$ $K_{2.4}$ $B_1$ $D_{1-3.5}$ महात्मा (for प्रदाता). — $^c$) Ś$_1$ $K_{1.3}$ $B_3$ $D_{1-3}$ चलेच्च; $K_4$ $D_5$ M °त (for °द्धि). Dc राज्यार्थसुखाच्च. T G चलेत राज्यादिति संशयो मे. — $^d$) Ś$_1$ K $D_{1-3.5.6}$ अपेतं. $K_4$ $B_2$ Dn $D_4$ $T_2$ $G_3$ तु (for च). Ś$_1$ K $D_{1-3.5.6}$ नु कुर्यात् (for विवर्धेत्). $T_2$ $G_{3.4}$ धर्मादधर्मश्चरितो गरीयान् (= $6^c$).

**9** $^a$) Ś$_1$ $K_{1.2}$ Dc $G_1$ च; $Dn_1$. $n_2$ $D_3$ तु (for नु). — $^b$) $K_3$ कुलस्य वृद्धाः; $K_4$ कुलप्रवृद्धः; $D_5$ कुले च वृद्धाः.

**10** $^c$) $T_1$ $G_1$ सत्यं (for सम्यक्). Ś$_1$ $K_{1.2}$ [ए]ष (for [इ]ति). — $^d$) B Dn $D_4$ व्यप° (for अव°). Ś$_1$ $K_{1.2}$ राज्यम् (for राज्यात्).

**11** $K_4$ om. (hapl.) 11. — $^a$) $B_2$ °पश्यते; $G_1$ पृच्छति (for °पश्यति). — $^c$) Ś$_1$ K ($K_4$ om.) $D_{3.5.6}$ इह; $D_{1.2}$ $G_2$ $M_1$ अपि (for इति). — $^d$) $B_{1.4}$ इतः; $B_{2.3}$ Dc Dn $D_4$ इति (for अथ). Ś$_1$ K ($K_4$ om.) $D_{1-3.5.6}$ [अ]धि-; $B_{1.4}$ Dc स्व-; $B_{2.3}$ Dn $D_4$ स्म (for

C. 3. 10248
B. 3. 119. 12
K. 3. 120. 12

नूनं समृद्धान्पितृलोकभूमौ
चामीकराभान्क्षितिजान्प्रफुल्लान् ।
विचित्रवीर्यस्य सुतः सपुत्रः
कृत्वा नृशंसं बत पश्यति स्म ॥ १२
व्यूढोत्तरांसान्पृथुलोहिताक्षा-
न्नेमान्स्म पृच्छन्स शृणोति नूनम् ।
प्रस्थापयद्यत्स वनं ह्यशङ्को
युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ १३
योऽयं परेषां पृतनां समृद्धां
निरायुधो दीर्घभुजो निहन्यात् ।
श्रुत्वैव शब्दं हि वृकोदरस्य
मुञ्चन्ति सैन्यानि शकृत्समूत्रम् ॥ १४
स क्षुत्पिपासाध्वकृशस्तरस्वी
समेत्य नानायुधबाणपाणिः ।
वने स्मरन्वासमिमं सुघोरं
शेषं न कुर्यादिति निश्चितं मे ॥ १५
न ह्यस्य वीर्येण बलेन कश्चि-
त्समः पृथिव्यां भविता नरेषु ।
शीतोष्णवातातपकर्शिताङ्गो
न शेषमाजावसुहृत्सु कुर्यात् ॥ १६
प्राच्यां नृपानेकरथेन जित्वा
वृकोदरः सानुचरान्रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी
सोऽयं वने क्लिश्यति चीरवासाः ॥ १७
यो दन्तकूरे व्यजयन्नृदेवा-
न्समागतान्दाक्षिणात्यान्महीपान् ।
तं पश्यतेमं सहदेवमद्य
तपस्विनं तापसवेषरूपम् ॥ १८
यः पार्थिवानेकरथेन वीरो
दिशं प्रतीचीं प्रति युद्धशौण्डः ।

---

[अ]पि). Ś1 K1. 2 °राज्यं (for राज्यात्).

**12** $^{d}$) S संपश्यतीदं हि (G2 नि-) कृतं नृशंसं.

**13** $^{a}$) K3 सिंहोन्नतांसान्; B2. 3 व्यूढोत्तरांशान्; D3 व्यूढोरसस्तान् (m as in text); T1 G1. 2 M व्यूढांतरांसान्; T2 G3. 4 व्यूढांतरांस्तान्. D1. 2 मूढांतरात्मा निकृतिस्वभावो. — $^{b}$) K4 B Dc Dn D3–6 M om. न. Ś1 स; K1. 2 न; T2 G2. 3 M2 च (for स्म). Ś1 K1. 3. 4 M न; G2 च (for स). Dn3 श्रृणाति (see below). D1. 2 भ्रातुः सुतानां स नृशंसकर्ता. ❀ Cn : श्रृणाति हिनस्ति। श्रृणोतीति लेखकप्रमादः। न श्रृणोतीति गौडपाठे तु...। ❀ — $^{c}$) B1. 2. 4 Dn D1. 4–6 प्रास्था° (for प्रस्था°). B3 प्रस्थापयामास (for °यद्यत्स). S यत्र (for यत्स). K2 निशंको; Dn स°; D5 भृशं यो; T G1–3 विशंको; G4 सशोको (for ह्य°). — $^{d}$) Ś1 K1. 3. 4 D2. 3. 6 °राज्यं (for °शस्त्रम्).

**14** $^{a}$) T2 G3. 4 सोयं. Ś1 K1. 2 D1 पृतनाः समृद्धाः. — $^{b}$) Ś1 K D3. 5 °बाहुर् (for °भुजो). B3 D2 वि-; Dc [ऽ]भि- (for नि-). — $^{c}$) Ś1 K1 [अ]पि; K2 D5 हि (for [ए]व). K2 D1. 2 T1 G1 M च; T2 G2–4 तु (for हि).

**15** $^{a}$) D1. 2 °सार्ति°; T2 G2–4 °साद्धि° (for °साध्व°). B1 D1. 2 T2 G2. 3 तपस्वी (for तर°). — $^{c}$) D1. 2 क्लेशानिमान्संस्मरन्घोरतापो. — $^{d}$) D1. 2 हन्यात्स वीर्याद् (for शेषं न कुर्याद्). Ś1 K1. 2 D3. 5 निश्चयो (for निश्चितं).

**16** $^{a}$) K1 reads 16$^{ab}$ after 17. S (except M1) वीर्ये च बले च. D1. 2 न चास्य कश्चिद्धि बलेन तुल्यो. — $^{b}$) B Dc Dn D4. 6 समः पृथिव्यामपि विद्यतेन्यः; D1. 2 भवेत्पृथिव्यामथ वामरेषु. — K4 om. (hapl.) 16$^{c}$–17$^{b}$. — $^{c}$) B Dc Dn D4. 6 T G स शीत- (for शीतोष्ण-). Ś1 K3 B1. 2 D4–6 °कर्षितांगो. — $^{d}$) D1. 2 निः- (for न). Dn1 [अ]सुहृत्स (for [अ]सुहृत्सु).

**17** K4 om. 17$^{ab}$ (cf. v.l. 16). — $^{a}$) Ś1 K1 Dn2 D1. 4 T2 G3 प्राच्यान् (for प्राच्यां). — After 17, K1 reads 16$^{ab}$.

**18** $^{a}$) K2 B Dc Dn D4. 6 सिंधुकूले; K3. 4 D3. 5 दंत- (D5 [ऽ]नंत)वक्रान्; D1. 2 शूरवर्यो; T1 G1 M1 दत्तकूरे; T2 दंडकूटे; G2 दंतिकूटे; G3. 4 दंतकूटे (for दन्तकूरे). K3. 4 D3. 5 अजयत्; T1 G2. 4 त्वज°; G1 [ऽ]त्यज°; M1 ह्यज° (for व्यज°). K3. 4 D3. 5 G1 समस्तान्; D1. 2 T G2–4 M समेतान् (for नृदेवान्). — $^{c}$) Ś1 K1–3 D5 पश्य चैनं; K4 Dc °तैनं (for °तेमं). Ś1 उद्यतं; K3. 4 D1. 2 वनस्थं (for अद्य). — $^{d}$) B Dc Dn D4. 6 G2. 4 M2 तरस्विनं. Ś1 K1 °वेशरूपं; T2 G2–4 °रूपवेषं.

**19** $^{a}$) Ś1 K2 वीरान्; K1 जिग्याद्; K3. 4 B D (except D3. 5) जिग्ये (for वीरो). — $^{b}$) D1. 2 बद्धतूणः (for युद्ध°). — $^{c}$) Ś1 K D3 माद्रीसुतो (for सोऽयं वने). — K3 फल-

सोऽयं वने मूलफलेन जीव-
झटी चरत्यद्य मलाचिताङ्गः ॥ १९
सत्रे समृद्धेऽतिरथस्य राज्ञो
वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं
कथं सहत्यद्य सती सुखार्हा ॥ २०
त्रिवर्गमुख्यस्य समीरणस्य
देवेश्वरस्याप्यथ वाश्विनोश्च ।
एषां सुराणां तनयाः कथं नु
वने चरन्त्यल्पसुखाः सुखार्हाः ॥ २१
जिते हि धर्मस्य सुते सभार्ये
सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने
कथं न सीदत्यवनिः सशैला ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

# १२०

सात्यकिरुवाच ।
न राम कालः परिदेवनाय
यदुत्तरं तत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं
युधिष्ठिरो यद्यपि नाह किंचित् ॥ १
ये नाथवन्तो हि भवन्ति लोके
ते नात्मना कर्म समारभन्ते ।
तेषां तु कार्येषु भवन्ति नाथाः

C. 3. 10260
B. 3. 120. 2
K. 3. 121. 2

---

मूलेन (for मूलफलेन). D5 S जिग्ये रणे तं नकुलं वनेस्मिन् (D5 नकुलं तं वनेषु). — d) Dn2 चलत्यद्य; D1. 2 चरत्पंक- (for चरत्यद्य). S संपश्यतेमं मलदिग्धगात्रं. — After 19, Ś1 ins.:

583* जिग्ये रणे तं नकुलं वनेषु
संपश्यते मेऽद्य मनः सुदीनम् ।

**20** b) K3 सुतेयं; D1. 2 सुमध्यमा (for सुता या). — c) B2 सुघोरं (for सुदुःखं). — d) K2–4 D3. 5 वसत्यद्य (for सह°). B2 transp. कथं and सती.

**21** Ś1 damaged. K2 D5 om. (hapl.) 21. — a) G1 तथैव वायोर् (for समी°). — b) D1 S तथा (for [अ]थ वा). — c) S (except G4) तेषां (for एषां). G2. 4 वने (for नु). D1. 2 एषां सुता दीर्घभुजा वनेस्मिन्. — d) D1. 2 कथं (for वने). T2 G2–4 चरंत्यमी (for वने चरन्ति). Dn [ऽ]-चरन् (!) (for चरन्ति). B Dc D4. 6 अस्त°; Dn ह्यस्त° (!) (for अल्प°).

Colophon lost in Ś1. — *Major parvan:* K1. 2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan:* Dc तीर्थयात्रा. K3. 4 B1. 2 D1–3 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* K1. 2. 4 रामवाक्यं; B4 D5 बलदेववाक्यं; Dc प्रभासे बलदेववाक्यं; Dn3 प्रभासे यादवसंगमः. — *Adhy. no.* (figures, words or both): Dn1 118; Dn2 119 (as in text); Dn3 S 120 (M2 122); D1 124. — *Śloka no.:* Dn1. n3 21; Dn2 D1 22.

## 120

**1** Ś1 damaged. — a) D1. 2 परिदेवितस्य. — b) K1. 2 B2–4 Dn D4–6 त्वत्र (for तत्र). — After 1ab, D1. 2 ins.:

584* कुर्वीमहे यच्च हितं भवेत्तु
राज्ञे ह्यस्मायाजमीढाय नित्यम् ।

— c) T G1. 3 सम°; G4 M त्वन° (for ह्यन°). D1. 2 मया च रामाद्य वृतः स कालो.

**2** Ś1 damaged. — a) M ते (for ये). K3 Dn D2. 4–6 [ऽ]पि; B2 [ऽ]त्र; B3 तु (for हि). — b) K D1–3. 5 न ते स्वयं (D3m ते नात्मना as in text). M ये (for ते). B1. 3 °चरंति (for °रभन्ते). — c) K1–3 D1–3. 5 M तेषां (D3. 5 येषां) समर्था वि(M हि)चरंति नाथाः. — d) K1 Dn2 D6 शिब्या°; D1. 2. 3 (m as in text) शब्या° (for शैब्या°). ❀ Cn: शिब्यादय इत्येव पाठः। शैब्यादय इति पाठे तु स्वार्थे ष्यञ्। ❀

C. 3. 10260
B. 3. 120. 2
K. 3. 121. 2

शैब्यादयो राम यथा ययातेः ॥ २
येषां तथा राम समारभन्ते
कार्याणि नाथाः स्वमतेन लोके ।
ते नाथवन्तः पुरुषप्रवीरा
नानाथवत्कृच्छ्रमवाप्नुवन्ति ॥ ३
कस्मादयं रामजनार्दनौ च
प्रद्युम्नसाम्बौ च मया समेतौ ।
वसत्यरण्ये सह सोदरीयै-
स्त्रैलोक्यनाथानधिगम्य नाथान् ॥ ४
निर्यातु साध्वद्य दशार्हसेना
प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रः
सबान्धवो वृष्णिबलाभिभूतः ॥ ५
त्वं ह्येव कोपात्पृथिवीमपीमां
संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं
वृत्रं यथा देवपतिर्महेन्द्रः ॥ ६
भ्राता च मे यश्च सखा गुरुश्च
जनार्दनस्यात्मसमश्च पार्थः ।
यदर्थमभ्युद्यतमुत्तमं त-
त्करोति कर्माग्र्यमपारणीयम् ॥ ७
तस्यास्त्रवर्षाण्यहमुत्तमास्त्रै-
र्विहत्य सर्वाणि रणेऽभिभूय ।
कायाच्छिरः सर्पविषाग्निकल्पैः
शरोत्तमैरुन्मथितास्मि राम ॥ ८
खड्गेन चाहं निशितेन संख्ये
कायाच्छिरस्तस्य बलात्प्रमथ्य ।
ततोऽस्य सर्वाननुगान्हनिष्ये
दुर्योधनं चापि कुरूंश्च सर्वान् ॥ ९
आत्तायुधं मामिह रौहिणेय

**3** G4 om. 3. — a) K3. 4 B1 D1-3 M1 तेषां (for येषां). K4 °चरंति; M1 °चरंते (for °रभन्ते). — b) Ś1 समतेन; K2 सुमतेन; B4 स्वयमेव; D1. 2 स्वबलेन (for स्वम°). T2 (before corr.) समयेन लोकाः (for स्वमतेन लोके).

**4** a) G2. 4 तस्माद् (for कस्माद्). K1 असौ; B1-3 Dc अमी; B4 Dn D4. 6 इमौ; D3 इमे (for अयं). — K3 om. 4b-5a. — b) K4 B D4. 5 °शांबौ. — c) K1. 4 B1. 3 M वसत्यरण्ये (as in text); D1. 2 दीनोथ राजा; the rest वसंत्यरण्ये. — d) B1. 2. 4 Dn D1-4. 6 G2 M2 अभि° (for अधि°). K1 B1 Dn D3m. 4. 6 पार्थाः (K1 °र्थेः); B4 पार्थान् (for नाथान्).

**5** K3 om. 5a (cf. v.l. 4). — a) D1. 2 सा ह्यद्य; T G3. 4 सा त्वद्य (for साध्वद्य). — b) Ś1 K4 D3 °नागायुध-; D1. 2 °पादा युधि; D5 °नागा युधि (for °नानायुध-). Ś1 K1. 2 Dn1 D5 -चित्रकर्मा; M -चित्रवर्मिणी (for -चित्रवर्मा).

**6** a) K1. 2 D1. 2 त्वमेव; D5 त्वं देव (for त्वं ह्येव). — b) D1. 2 वासुदेवः (for शार्ङ्ग°). — d) D1. 2 सुरेंद्रः; S (T2 before corr.) नरेंद्र (for महेन्द्रः).

**7** a) Ś1 K1. 2 [अ]पि (for first च). K3 B D (except D1-3. 5) T1 G1 M स (for second च). — b) Dc [अ]द्य (for [आ]त्म-). K4 -सखः स; M1 -सखश्च (for -समश्च). D1. 2 कृष्णस्य चात्मा मम चैव पार्थः. — After 7ab, B1. 2. 4 D (except D1-3. 5) ins.:

585* यदर्थमैच्छन्मनुजाः सुपुत्रं
शिष्यं गुरुश्चाप्रतिकूलवादम् ।
[(b) B1 Dn गुरुं (for गुरुश्).]

— c) D1. 2 T1 G1 M1 तदर्थम्; T2 G3 यदर्थं; G2. 4 M2 तदर्थं (for यदर्थम्). Ś1 K1. 3. 4 अभ्युद्यमम्. Ś1 K D5 च (for तत्). D1. 2 एको हि यदद्य मन्ये; S एको हि (M2 [ऽ]थ) य उद्यमन्वै (M1 एकोभिसमुद्वहन्वै) (for अभ्युद्यतमुत्तमं तत्). — d) G2. 4 करोतु. K3 कर्णस्तम्; D1. 2 कर्णोस्त्रम्; S कर्णोस्त्रम् (for कर्माग्र्यम्). S (except M2) अवारणीयं.

**8** a) Ś1 K2 प्राप्या° (for तस्या°). G1 °शस्त्राणि (for °वर्षाणि). — b) Ś1 K B2. 4 D3 M1 नि° (for वि°). Ś1 K2 शस्त्राणि; D3 शत्रूंश्च (for सर्वाणि). D1. 2 विधूय (for ऽभिभूय). — c) Ś1 K2 तस्य (for सर्प-).

**9** a) T1 M संखे; T2 (before corr.) G2 संघे (for संख्ये). — c) Ś1 K Dc D1-3. 5 निहंस्ये; G1 वधिष्ये (for हनि°).

**10** a) S युधि (for इह). — b) Ś1 K2 भोजा; K1 भूजा; K3 D1. 2 भूपा; K4 चेमे; B Dc Dn D5. 6 भैमा; S सर्वे (for भौमा as in D3. 4 only). — c) Ś1 K1. 2 निहन्मि ह्येकः (for निघ्नन्तमेकं). G1 °वीर°; G2 M1 °यौध° (for °योध°). — d) B1. 4 Dc Dn2 अग्निर्; B2. 3 Dn1. n3

पश्यन्तु भौमा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्या-
न्काले महाकक्षमिवान्तकाग्निः ॥ १०
प्रद्युम्नमुक्तान्निशितान्न शक्ताः
सोढुं कृपद्रोणविकर्णकर्णाः ।
जानामि वीर्यं च तवात्मजस्य
कार्ष्णिर्भवत्येष यथा रणस्थः ॥ ११
साम्बः ससूतं सरथं भुजाभ्यां
दुःशासनं शास्तु बलात्प्रमथ्य ।
न विद्यते जाम्बवतीसुतस्य
रणेऽविषह्यं हि रणोत्कटस्य ॥ १२
एतेन बालेन हि शम्बरस्य
दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
वृत्तोरुरत्यायतपीनबाहु-
रेतेन संख्ये निहतोऽश्वचक्रः ।
को नाम साम्बस्य रणे मनुष्यो
गत्वान्तरं वै भुजयोर्धरेत ॥ १३
यथा प्रविश्यान्तरमन्तकस्य
काले मनुष्यो न विनिष्क्रमेत ।
तथा प्रविश्यान्तरमस्य संख्ये
को नाम जीवन्पुनराव्रजेत ॥ १४
द्रोणं च भीष्मं च महारथौ तौ
सुतैर्वृतं चाप्यथ सोमदत्तम् ।
सर्वाणि सैन्यानि च वासुदेवः
प्रधक्ष्यते सायकवह्निजालैः ॥ १५
किं नाम लोकेष्वविषह्यमस्ति

C. 3. 10275
B. 3. 120. 17
K. 3. 121. 18

D4. 6 अग्निं (for काले). Ś1 K1. 2 महान्कक्षम्; S महत्कक्षम्. K3 S अनलं (T2 G3 °लो) वै; K4 अंतराग्निं; B Dc Dn D4. 6 अंतकाले; D1–3 अंतकाग्निं.

**11** $^{a}$) Ś1 K1. 2. 4 D1–3 M विशिखान् (for निशितान्). — $^{b}$) Ś1 K1. 2 D5 M °द्रौणि° (for °द्रोण°). — $^{c}$) Ś1 G1 जानाति; B2 T G3. 4 °सि (for °मि). B1 तु; S (except M2) हि (for च). K1 B2–4 Dn D4. 6 जयात्म°; K4 यदात्म°; B1 तवात्तु°; D2 T1 तदात्म°; G1. 2 M2 सदात्म° (for तवात्म°). — $^{d}$) K2 Dn1. n2 [ए]व (for [ए]ष). Ś1 K2. 3 D5 T1 G1 यथा (K3 °दा) रथस्थः; T2 G2–4 रथांतरस्थः (for यथा रणस्थः).

**12** $^{a}$) K3 साश्वः; B1. 2. 4 Dc D4. 6 शांबः (for साम्बः). Ś1 K1. 2 D1. 2 रथस्थं; K3. 4 D3. 5 रणस्थं (for भुजाभ्यां). — $^{b}$) Ś1 K2. 4 Dc D3 शस्त्र-; D1. 2 सास्त्र- (for शास्तु). D1. 5 बलं (for बलात्). Ś1 K1. 2. 4 D1–3 निहन्यात् (for प्रमथ्य). — $^{d}$) Ś1 K D3. 5 हि मदो (K4 °हो) त्कटस्य; Dn2 Dc2 D2 हरिणोत्क°.

**13** $^{a}$) D1. 2 एकेन येनाहवशोभिना तदा. — $^{b}$) D1. 2 (? gloss) शाल्वस्य (for दैत्यस्य). D1. 2 तरसा (for सहसा). B3 (corrupt) प्रशन्नं; B4 प्रपन्नं; D5 प्रभग्नं (for प्रणुन्नम्). — After 13$^{ab}$, T G2–4 ins.:

586* हतः स पापो युधि केवलेन
युद्धेऽद्वितीयो हरितुल्यरूपः ।

— $^{c}$) Ś1 K1. 2. 4 B1 Dc D3. 5 M वृत्तोरुरप्यायत°; K3 वृत्तोभयत्यायत°; D1. 2 °रुवक्त्रायत°; T2 G3 °रुरम्यायत°. — $^{d}$) Ś1 K B1 D3. 5 M एकेन (for एतेन). T1. 2 (after corr.) G1. 3. 4 M संखे; T2 (before corr.) G2 संघे (for संख्ये). Ś1 [अ]ध्वचक्रः; B2m T2 (after corr.) G3 [अ]श्ववक्त्रः; T1. 2 (before corr.) G1. 2. 4 M च वक्रः (for [अ]श्वचक्रः). D1. 2 एकेन भग्नस्तरसा नृवीरः. — D2 om. 13$^{ef}$. — $^{e}$) K4 Dc शांबस्य. B Dn D4. 6 महारथस्य (for रणे मनुष्यो). D1 कार्ष्णि समासाद्य हि को विमुच्येद्. — $^{f}$) D1 om. 13$^{f}$. Ś1 K1. 2 Dc D3. 5 ध्रियेत; K3 भ्रूयेत; G2 M प्रमुच्येत् (for धरेत). B Dn D2. 4. 6 रणे (B1 °थे) समक्षं रथमभ्युदीयात्. — After 13, S (except G4 M1) ins.:

587* यथैव यत्तस्य पुरंदरस्य
हरिध्वजं स्यन्दनमास्थितस्य ।

**14** Ś1 K2 om. 14$^{ab}$; G4 om. 14. — $^{b}$) D4 कालो मनुष्येण (for काले मनुष्यो न). T1 नु (for ). Dn1 विनिष्क्रमोस्य; D1. 2 नु विक्रमेत (for विनि°). — After 14$^{ab}$, D1 ins.:

588* संप्राप्य वै तादृशीं योधलक्ष्मीं.

— K3 D2 om. 14$^{cd}$. — $^{c}$) Ś1 कथं; K4 यथा (for तथा). T2 (before corr.) G2 संघे; T2 (after corr.) G1. 3 M संखे. — $^{d}$) B1. 3. 4 Dc Dn D4. 6 T1 °व्रजेच्च (for °व्रजेत).

**15** $^{a}$) Dc भीष्मं च द्रोणं च (by transp.). D1. 2 कृपं च द्रौणिं (for महारथौ तौ). — $^{b}$) G1 वा° (for चा°). D1. 2 M2 हि; T1 स- (for [अ]थ). G2 द्रौणिं च वीरं सहसोमदत्तं. — $^{d}$) T G °वह्निनाशौ (for °वह्निजालैः).

**16** $^{a}$) B4 G4 लोकेषु विषह्यम्; D4 G1 लोके ह्यविष-

कृष्णस्य सर्वेषु सदैवतेषु ।
आत्तायुधस्योत्तमबाणपाणे-
श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ १६
ततोऽनिरुद्धोऽप्यसिचर्मपाणि-
र्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णां कुशैर्वेदिमिवाध्वरेषु ॥ १७
गदोल्मुकौ बाहुकभानुनीथाः
शूरश्च संख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु कर्म ॥ १८
सवृष्णिभोजान्धकयोधमुख्या
समागता क्षत्रियशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा-
ँल्लोके यशः स्फीतमुपाकरोतु ॥ १९
ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतां वरिष्ठः ।
युधिष्ठिरः पारयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ २०
अस्मत्प्रमुक्तैर्विशिखैर्जितारि-
स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा-
मेतद्धि नः कृत्यतमं यशस्यम् ॥ २१

वासुदेव उवाच ।

असंशयं माधव सत्यमेत-
द्गृह्णीम ते वाक्यमदीनसत्त्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं
नेच्छेत्कुरूणामृषभः कथंचित् ॥ २२
न ह्येष कामान्न भयान्न लोभा-
द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ वा
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २३

---

ह्यम्. — $^{b}$) B Dc Dn D4. 6 सदेवकेषु (for सदै°). — G4 om. 16$^{cd}$. — $^{d}$) K D3 संख्ये (for युद्धे).

**17** $^{a}$) K2. 4 D2. 5 तथा° (for ततो°). — $^{c}$) B कृत्तो°; Dc D3 कृंतो° (for हृतो°). — $^{d}$) K1–3 D3m तीर्णां (D3 [orig.] तीक्ष्णां) (for कीर्णां). — After 17, S (except G4) reads 19$^{cd}$.

**18** T2 G3. 4 read 18$^{a}$ after 18$^{d}$. — $^{a}$) K3. 4 B Dc T G2. 3 M2 गदोल्मुकाः; M1 °ल्मुकं. K3 M2 गाबहु-; K4 गाहव-; Dc M1 गावह-; D3 G1 गाविह-; T G2. 3 शावह- (for बाहुक-). K3 -भानुनाशाः; B2 Dc °नाथाः; D5 °नीपाः. D1. 2 गदोल्मुकौ माननीयौ च संख्ये. — $^{b}$) D1. 2 om. 18$^{b}$. Ś1 K1. 2 शूराश्च; T2 G3 कुरूश्च. T G1. 3 M संखे; G2 संघे. Ś1 K1. 2 निहठः (for निशठः). — $^{d}$) B1 Dc D1. 2 M1 वै (for वि-). D1. 2 S (except M2) लोके (for कर्म).

**19** G4 om. 19$^{ab}$. — $^{a}$) K1. 4 सा वृष्णिभोजांधक-; D1. 2 सद्वृष्णिभोज्यंधक-; G1 सवृष्णियौधांधक-. K1 -योधमुख्य-; K3. 4 Dc D1–4 M -योधमुख्याः. — After 19$^{a}$, D1. 2 ins.:

589* समाहितः पृथिवीं साधु राजा ।
यशोभृतां धर्मभृतां वरिष्ठः
युधिष्ठिरः पालयतां महात्मा ।

— $^{b}$) K3 B2–4 Dc D3. 4 S (G4 om.) समागताः; D1. 2 सहांधकैः. B2 D1. 2 T2 G3 M1 क्षत्रियाः; Dn D4. 6 T1 सात्वत- (for क्षत्रिय-). K3 Dc D3 S (G4 om.) -शूरसेनाः. — S (except G4) reads 19$^{cd}$ after 17. — $^{c}$) T2 G3. 4 धृतराष्ट्रस्य पुत्रान्. — $^{d}$) Ś1 K4 अपाकरोतु. D1. 2 लोके यशस्वी पुरुषप्रवीरः. — After 19, Dn2 reads वासुदेवः, followed by st. 22.

**20** $^{c}$) Ś1 K B1 D3 T2 G2–4 पालयते; D1 पारयतां; D2 पालयतां (for पारयते). — $^{d}$) Ś1 K1. 4 द्यूते यथोक्तः; D1. 2 द्यूतं यदुक्तं.

**21** $^{a}$) Ś1 damaged. K1. 4 Dc D1–4 T2 G2. 3 M1 °प्रयुक्तैः; M2 °विमुक्तैः (for °प्रमुक्तैः). — $^{d}$) M लोके यशः स्फीतमुपाकरोतु (=19$^{d}$). — After 21, Ś1 K1. 2 ins. an addl. colophon (*adhy. name:* सात्यकिवाक्यं).

**22** T1 श्रीभगवान्; G1 श्रीकृष्णः (for वासु° उ°). — $^{c}$) K1–3 B2 Dc D5 T2 (before corr.) G2 M द्वाभ्यां; B4 आ° (for स्वा°). — $^{d}$) Ś1 K1. 2 Dc अधिपः (for ऋषभः).

**23** $^{c}$) K1. 3 B2–4 Dn D1. 2. 4. 6 M1 च (for वा).

उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनंजयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे-
न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ २४
यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।
योत्स्याम विक्रम्य परांस्तदा वै
सुयोधनस्त्यक्ष्यति जीवलोकम् ॥ २५

युधिष्ठिर उवाच ।

नैतच्चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ २६
यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ २७
प्रतिप्रयान्त्वद्य दशार्हवीरा
दृढोऽसि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया
द्रष्टासि भूयः सुखिनः समेतान् ॥ २८

वैशंपायन उवाच ।

तेऽन्योन्यमामन्त्र्य तथाभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मू
राजापि तीर्थान्यनुसंचचार ॥ २९
विसृज्य कृष्णं त्वथ धर्मराजो
विदर्भराजोपचितां सुतीर्थाम् ।
सुतेन सोमेन विमिश्रितोदां
ततः पयोष्णीं प्रति स ह्युवास ॥ ३०

C. 3. 10290
B. 3. 120. 32
K. 3. 121. 33

इति श्रीमहाभारते आरण्यकपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

**24** $^{a}$) Ś$_1$ K$_1$ पृथिव्यां विश्रुतौ (unmetrical !); K$_2$ विश्रुतौ पृथिव्यां; K$_4$ Dc प्रथितौ पृथिव्यां. — $^{c}$) Ś$_1$ विशिष्यान्; K प्रशिष्यान् (K$_4$ प्रशास्यान्); B$_1$ नु शासेन् (for प्रशासेन्). — $^{d}$) D$_{1.2}$ M$_2$ [ऽ]सौ (for ऽयम्).

**25** $^{a}$) K$_3$ Dc D$_{1.2}$ पंचालपति°. — $^{b}$) Ś$_1$ K$_1$ D$_5$ सकेकयैश्; K$_4$ B$_1$ Dc Dn$_1$.n$_3$ D$_{3.4.6}$ G$_1$ सकैकयश्. — $^{c}$) B (B$_3$ corrupt) Dn D$_{4.6}$ युध्येम; Dc योत्स्यामि (for योत्स्याम). Ś$_1$ K$_{1.2}$ D$_{1.2}$ आक्रम्य (for विक्रम्य). B Dn D$_{4.6}$ रणे समेताः (B$_2$ °तान्) (for परांस्तदा वै). — $^{d}$) B Dn D$_{4.6}$ तदैव सर्वे रिपवो हि न स्युः.

**26** $^{a}$) B Dn D$_{4.6}$ नेदं (for नैतच्). Ś$_1$ K$_{1.2}$ Dc D$_{3.5}$ चिरान् (for चित्रं). D$_2$ (? gloss) सात्यके (for माधव). — $^{b}$) T G °मिदं (for °तमं). — $^{c}$) K$_{3.4}$ D$_{3.5}$ एव (for एकः).

**27** $^{a}$) T$_{1.2}$ (before corr.) G$_{2.4}$ यदेव; G$_1$ °थैव (for °दैव). D$_{1.2}$ पुरुषोत्तमोसौ (for पुरुष°). — Ś$_1$ K$_2$ om. (hapl.) 27$^{bc}$. — $^{d}$) Ś$_1$ K$_{1.2.4}$ D$_2$ जेष्यति (for °सि).

**28** $^{b}$) K$_{1.2}$ B D (except D$_1$) T$_2$ G$_3$ दृष्टोस्मि (for दृढोऽस्मि). Ś$_1$ नववीर°; K Dc D$_5$ नरवीर°; D$_{1-3}$ G$_1$ M$_2$ नरदेव° (for नरलोक°). — $^{c}$) K$_{1.3}$ D$_{1-4}$ T$_2$ G$_{2-4}$ प्रसादं; D$_5$ प्रमाणं (for ऽप्रमादं). Ś$_1$ K$_2$ T$_2$ G$_3$ [अ]प्रमेयान्. — $^{d}$) Ś$_1$ K$_{1.2}$ द्रक्ष्यामि; K$_3$ धक्ष्यामि (for द्रष्टासि). Ś$_1$ K$_{1-3}$ D$_3$ सुखितान्; T$_2$ G$_{2-4}$ स्वजनैः (for सुखिनः). D$_{1.2}$ समस्तान् (for समेतान्).

**29** B D (except D$_{3.5}$) G$_4$ om. the ref. — $^{a}$) Ś$_1$ K D$_{3.5}$ ततो° (for तथा°). — $^{d}$) B$_{2-4}$ Dn D$_{4.6}$ ते चापि; D$_3$ स चापि (for राजापि). B Dn D$_{4.6}$ विचेरुः (B$_1$ °विवेश) (for °चचार). D$_{1.2}$ राजापि सर्वैरभिवादितश्च.

**30** $^{a}$) B$_1$ कृष्णं च स; T G वृष्णीनथ (T$_2$ G$_{3.4}$ °ननु) (for कृष्णं त्वथ). — $^{b}$) Ś$_1$ K$_{1.2}$ D$_5$ °पचितान्. Ś$_1$ K$_{1.2}$ स तीर्थान्; K$_4$ सुतीर्थे; D$_{1.2}$ महात्मा; T$_1$ स तीर्थां (for सुती°). — After 30$^{ab}$, K$_{1.2}$ B D (except D$_{1.2.5}$; D$_3$ marg.) T G ins.:

590* जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृभृत्यः सह लोमशेन ।

[(L. 1) T$_1$ G$_{2.4}$ सरितां. — (L. 2) °कः सह वा; Dc °भिश्च सह; G$_1$ °भिः सह वै (for °भृत्यः सह).]
— G$_4$ om. 30$^{cd}$. — $^{c}$) K$_1$ Dc D$_5$ विमिश्रितोयं; K$_{2.3}$ B Dn D$_{4.6}$ विमिश्रतोयां; T$_1$ सभूमितोदां. D$_{1.2}$ महानदीं पुण्यतमां सुतोयां. — $^{d}$) K$_3$ B Dn D$_6$ T G$_{1.2}$ पयः (for ततः). D$_{1.2}$ अभितः ससार (for प्रति स ह्यु°). Ś$_1$ Dc स

# १२१

C. 3. 10291
B. 3. 121. 1
K. 3. 122. 1

लोमश उवाच ।
नृगेण यजमानेन सोमेनेह पुरंदरः ।
तर्पितः श्रूयते राजन्स तृप्तो मदमभ्यगात् ॥ १
इह देवैः सहेन्द्रैर्हि प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ २
आमूर्तरयसश्चेह राजा वज्रधरं प्रभुम् ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ३
तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम् ।
वानस्पत्यं च भौमं च यद् द्रव्यं नियतं मखे ॥ ४
तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः ।
सप्तैकैकस्य यूपस्य चषालाश्चोपरि स्थिताः ॥ ५
तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ६
तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ७
सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असंख्येयाश्च केनचित् ॥ ८
तथैव तदसंख्येयं धनं यत्प्रददौ गयः ।

---

व्युवास; K1 B2. 4 Dn D3–6 सोव्यु°; K2 सो व्यु°; K3 -पद्यु°; K4 -मध्यु°; B1 T1 G1 सोभ्यु° (for स ह्यु°). — K1. 2 B D (except D1. 5; D3 marg.) T G ins. after 30 (G4, which om. 30$^{cd}$, ins. after 590*):

591* द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानः स्तुतिभिर्वराभिः ।

[(L. 1) K2 मुनिभिर्; T2 G3 विदितो; G2 मुदितो (for मुदितैर्). — (L. 2) T G पुष्कलाभिः (for वराभिः).]

Colophon om. in B3. — *Major parvan:* Ś1 K1. 2 Dn2 D6 T G2–4 M1 आरण्य. — *Sub-parvan:* B1 Dc तीर्थयात्रा. K3. 4 B2 Dn1. n3 D1. 2. 4–6 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* Ś1 K1. 2 प्रभासतीर्थयात्रा; K1(addl.) D6 वृष्णिगमनं; K4 Dc B1 वृष्णिपांडव(B1 °यादव)संवादः; B4 कृष्णप्रयाणं; D1–3 यादव(D3 वृष्णि-)पांडवसमागमः; D5 वृष्णिप्रत्यागमनं. — *Adhy. no.* (figures, words or both): Dn1 119; Dn2 120 (as in text); Dn3 S 121 (M2 123); D1 125. — *Śloka no.:* Dn D1 32.

## 121

**1** $^{a}$) Ś1 D1. 6 नृगेन; S (except M2) गयेन (for नृगेण). — $^{d}$) K2. 4 B D (except D1–3) S (except G4 M1) मुदम् (for मदम्); cf. 7$^{c}$.

**2** $^{a}$) B Dn D4–6 च; D1. 2 S तु (for हि). — $^{d}$) D1. 2 S बहुभिर् (for महद्भिर्).

**3** $^{a}$) Ś1 K1 Dc D6 अमूर्तरयसश्चेह; K4 आपूर्तरयमश्चेह (m अमूर्तिरयसः पुत्रः); D1 अमूर्तरयसं चेह; D2 अमूर्तरयसा वेह; D3 अमूर्तरयसश्चैव; T G1–3 आधूर्तरजसश्चेह (G1 °श्चैव); M असूर्तरजसश्चेह. — $^{b}$) Dn D4. 6 प्रभुः; S स्वयं (for प्रभुम्).

**4** $^{a}$) Ś1 K D3. 5 सवेषु (for यज्ञे°). — $^{d}$) Ś1 K2. 4 D3 दीयते; K1 देयते (for नियतं). — After 4, N (except K3) ins.:

592* चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः ।

[K1 पात्रं; Dc पात्रीः (for पात्र्यः). K1. 2 B1. 3. 4 D3. 5 transp. स्रुचः and स्रुवाः.]

**5** $^{b}$) T2 G2. 3 मुनयः; M1 प्रयोगात् (for प्रयोगाः). — $^{c}$) D3 T2 G1. 3. 4 M1 यज्ञस्य (for यूपस्य). — $^{d}$) K1. 2 चषाला हि; K3 D1–3. 5 S (except G3. 4) चषालेषु (for चषालाश्च). G4 M1. 2 प्रतिष्ठिताः (for [उ]परि स्थिताः).

**6** $^{a}$) K1. 2 D1. 2 यस्य स्म; K4 गमस्य; T2 G3. 4 ते तस्य (for तस्य स्म). — $^{d}$) T2 G3. 4 सर्वे (for सेन्द्रा).

**7** $^{a}$) D3 प्रसन्नेषु; G1 महाश्रेष्ठ (for मखा°). Dc तस्य सर्वमखाग्र्येषु; D1. 2 तस्य सर्वेषु यज्ञेषु. — $^{b}$) Ś1 K1. 3. 4 Dc D3 G2 M2 धरणीपतेः (G2 M2 °ते). — After 7, B D (except D1–3. 5) ins.:

593* प्रसंख्यानानसंख्येयान्प्रत्यगृह्णन्द्विजातयः ।

[B1. 5 प्रसंख्यकालेसंख्येयान्; B2 असंख्यातान°; B4 असंख्येकान°; Dc प्रसंख्याकालसंख्येयं.]

**8** $^{a}$) Ś1 K1. 2 G4 च; D1. 2 वै (for वा). D1. 2 गांग्यो (for लोके). — $^{c}$) G2 च (for वा) K1 यथा वर्षांबुधाराश्च. — $^{d}$) K3. 4 B Dc T2 G2. 3 M1 स्म (for च).

सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ ९
भवेत्संख्येयमेतद्वै यदेतत्परिकीर्तितम् ।
न सा शक्या तु संख्यातुं दक्षिणा दक्षिणावतः ॥ १०
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ॥ ११
अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः ।
गयस्य यजमानस्य तत्र तत्र विशां पते ॥ १२
स लोकान्प्राप्तवानैन्द्रान्कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् ॥ १३
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽनघ ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ १४

वैशंपायन उवाच ।

स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ।
समाजगाम तेजस्वी भ्रातृभिः सहितोऽनघः ॥ १५
ततोऽस्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि तत्र तत्र विशां पते ॥ १६
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
ददमानोऽसकृद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ १७

लोमश उवाच ।

देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ।
वैडूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ १८
संधिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एतमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ १९
एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह कौशिकः ॥ २०
चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ।

C. 3. 10313
B. 3. 121. 22
K. 3. 122. 23

---

**10** $^{a}$) K2. 3 B2 Dn D3–6 हि (for वै). — $^{c}$) S1 K1. 2. 4 D1. 2 न तु शक्यास्तु (K4 D1. 2 °क्या हि); K3 B Dc Dn D3–6 न तस्य शक्याः (for न सा शक्या तु). M2 च यज्ञेषु (for तु संख्यातुं). — $^{d}$) G4 दक्षिणां; M2 संख्यातुं (for दक्षिणा).

**11** $^{a}$) K3 D1–3. 5 तु; K4 हि (for च). — $^{b}$) K3 S स यज्ञेषु (T2 G2. 3 M2 by transp. यज्ञेषु स) विशां पते.

**12** $^{a}$) D1. 2 M1 अल्पावकाशा पृ°; G1 अल्पया शेषया पृथ्वी. — $^{b}$) Ś1 K1 चित्यैर्; D1. 2 विप्रैर् (for चैत्यैर्). M चासीत् (for आसीन्). D1. 2 समागतैः; T2 G2. 3 M समाचिता; G4 समावृतः (for महा°).

**14** $^{a}$) Ś1 K1. 2 Dc D1 T1 G1 अपि; T2 G2–4 अस्यां (for अत्र). — $^{b}$) K3 B2–4 D (except D1–3) [ऽ]च्युत; T2 G2. 3 नृप; M1 [ऽ]प्युत (for ऽनघ). — $^{d}$) Ś1 K D5 धुतपाप्मा; T1 पूत°.

**15** $^{a}$) Ś1 K1–3 Dn1 S (except G1) नरश्रेष्ठ. — $^{c}$) B G4 वैदूर्य-; D1. 2 वैडूर्यं. — After 15$^{cd}$, S ins.:

594* उद्दिश्य पाण्डवश्रेष्ठः स प्रतस्थे महीपतिः ।
[T1 प्रतस्थेयं; M2 (by transp.) प्रतस्थे स.]

— G4 om. 15$^{ef}$. — $^{e}$) Ś1 K1. 2. 4 D3 अवगाहत; B2 (m as in text) Dn D4. 6 समागमत; Dc स जगाम स; D1. 2 विभ्राजमानस्; G2 M1 समानर्वेवैस्; M2 समानवर्षैस् (for °जगाम). — $^{f}$) K3. 4 B2. 4 Dc Dn D3–6 M [ऽ]नघ; D1. 2 ययौ (for ऽनघः).

**16** $^{a}$) B Dn D4–6 तत्रास्य (for ततो°). — $^{d}$) K4 T1 यानि (for the first तत्र). K1 B Dn D4. 6 पुण्यान्यायतनानि च (=1. 207. 4$^{d}$, 14$^{b}$; 210. 1$^{b}$; etc.).

**17** $^{c}$) K3 B Dn D4. 6 तत्र तत्र; S ददानो हि (T1 ददौ सो हि) (for ददमानो). B Dn D4. 6 [अ]ददद् (for ऽसकृद्).

**18** G1 om. 18$^{ab}$. — $^{c}$) B Dn1 वैदूर्य-; D1. 2 वैडूर्यं (for वैडूर्य-).

**19** $^{a}$) K3 T1 G2 M1 संधिरेषा; B1 सलिलेषु (for संधिरेष). — $^{b}$) T1 G1. 2 M त्रेतायां (for °या). — G4 om. 19$^{cd}$. — $^{c}$) Ś1 K1 Dc M1 एताम्; K4 Dn D5 एनम्; D3 (*sup. lin.* as in text) एवम्; T2 (by corr.) एतद् (for एतम्).

**20** $^{a}$) K1 शर्यातिवीर्यस्य; K2. 4 B2 सर्यातियज्ञस्य; T1 M शय्याति°; G2 शंयाति°. — $^{b}$) D1. 2 देशोयं संप्रका°. — $^{d}$) S (except M2) वासवः (for कौशिकः).

**21** $^{a}$) T2 G3 चुक्रोध. Ś1 K D3. 5 चैव; Dc तस्य (for चापि). — $^{b}$) S महेंद्राय. — G1 om. 21$^{ef}$. — $^{e}$) Dc नाम; D1. 2 T2 G (G1 om.) अपि (for चापि). Dc D1. 2 च (for स). — S reads 23$^{ab}$ (with v.l.) after 21, *repeating* it in its proper place.

**23** S *repeats* 23$^{ab}$ here, reading it with v.l. (for

C. 3. 10313
B. 3. 121. 22
K. 3. 122. 24

सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ॥ २१
युधिष्ठिर उवाच ।
कथं विष्टम्भितस्तेन भगवान्पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ २२
नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ ।
एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

# १२२

लोमश उवाच ।
भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भार्गवः ।
समीपे सरसः सोऽस्य तपस्तेपे महाद्युतिः ॥ १
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत्सुबहून्कालानेकदेशे विशां पते ॥ २
स वल्मीकोऽभवदृषिर्लताभिरभिसंवृतः ।
कालेन महता राजन्समाकीर्णः पिपीलिकैः ॥ ३
तथा स संवृतो धीमान्मृत्पिण्ड इव सर्वशः ।
तप्यति स्म तपो राजन्वल्मीकेन समावृतः ॥ ४
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ५
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः ।
एकैव च सुता शुभ्रा सुकन्या नाम भारत ॥ ६
सा सखीभिः परिवृता सर्वाभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७
सा चैव सुदती तत्र पश्यमाना मनोरमान् ।

---

the first time) after 21. — [a]) S (first time) महाभाग (for कथं ब्रह्मन्). — [b]) Ś$_1$ सोमपीथिनौ; $K_4$ °पायिनौ; B °पीतिनौ.

Colophon om. in Ś$_1$ $K_{1.2}$ $B_4$. — *Major parvan:* $Dn_2$ $D_6$ $T_2$ $G_{2-4}$ $M_1$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $D_{1-3}$ (all om. sub-parvan name) mention only लोमशतीर्थयात्रा (followed by सौकन्य in $D_3$); B ($B_4$ om.) Dc Dn $D_{4.6}$, likewise, only सौकन्य. — *Adhy. name:* $K_{3.4}$ $D_5$ गययज्ञवर्णनं. — *Adhy. no.* (figures, words or both): $Dn_1$ 120; $Dn_2$ 121 (as in text); $Dn_3$ S 122 ($M_2$ 124); $D_1$ 126. — *Śloka no.:* Dn $D_1$ 24.

## 122

**1** [a]) $B_{1.4}$ वै; $D_3$ तु (for [अ]भूच्). — [b]) $D_2$ om. from नाम up to वीर- (in $2^b$). Ś$_1$ K Dc $D_{1.3.5}$ नामतः; B Dn $D_{4.6}$ भारत (for भार्गवः); cf. $6^d$, and v.l. — [c]) Ś$_1$ $K_{1.2}$ $B_3$ $D_{3.5}$ सौम्य; $B_2$ Dn $D_{1.4.6}$ तस्य (for सोऽस्य). — [d]) Ś$_1$ K महामुनिः (for °द्युतिः).

**2** $D_2$ om. up to वीर- (cf. v.l. 1). — [b]) $D_{1.2}$ तस्थिवान् (for पाण्डव). — [c]) $K_{3.4}$ $D_{1.2}$ $T_2$ $G_{1.3}$ $M_2$ स बहून्कालान्; B सुचिरं कालम्. Dn $D_{4.6}$ अतिष्ठत चिरं कालम्. — [d]) Ś$_1$ K $D_5$ मही- (for विशां). $M_1$ एकपादेन भारत.

**3** [b]) $D_{1.2}$ वल्लीभिर् (for लताभिर्). $K_{1.2}$ $B_{2.4}$ Dn $D_{4-6}$ इव; $D_1$ बहु; $T_2$ $G_3$ चाभि- (for अभि-). — [d]) Some N MSS. °लकैः (for °लिकैः).

**4** $T_2$ $G_3$ om. 4. — [a]) $K_1$ सु-; $G_1$ [अ]पि; $G_4$ च (for स). — [b]) Ś$_1$ K $D_{1-3}$ सर्वतः ($K_4$ संवृतः) (for सर्वशः). — [c]) $K_2$ $B_2$ Dn $D_{4-6}$ $G_4$ तप्यते. $K_1$ $T_1$ ततो (for तपो). B D (except $D_{3.5}$) $G_4$ घोरं (for राजन्).

**5** [b]) $K_{3.4}$ $D_3$ सर्यातिर्; S (except $T_2$ $G_3$) शर्य्यातिर्. — [c]) $D_3$ $T_1$ $G_1$ राजन् (for रम्यं).

**6** [c]) Ś$_1$ $K_{1.3.4}$ तु; $D_{1.2}$ हि (for च). $M_1$ शुभा (for सुता). B $D_{4.6}$ T $G_{2-4}$ सुभ्रूः; Dc Dn सुभ्रुः; $D_{1.2}$ तासां; $D_3$ सिद्धा (for शुभ्रा). — [d]) Ś$_1$ K Dc $D_{3.5}$ नामतः; $T_1$ $G_1$ पार्थिव (for भारत); cf. $1^b$, and v.l.

**7** [b]) B Dn $D_{4.6}$ दिव्या°. — [d]) $B_1$ $T_2$ $G_{2-4}$ भार्गवं सा; $T_1$ भार्गवं च (for °वस्य). $D_{1.2}$ ददर्श ह (for समासदत्).

**8** [a]) Ś$_1$ $K_3$ $B_{2-4}$ $Dn_1$ $D_5$ सुमतीं; $K_2$ $Dn_2$ $D_{3.4.6}$ °मती (for °दती). $Dn_3$ $T_1$ $G_1$ $M_2$ सा वै वसुमतीं तत्र; $D_{1.2}$ सा च कृच्छ्रमतीत्येवं. — [b]) $K_4$ वीक्ष्यमाना; B Dn

वनस्पतीन्विचिन्वन्ती विजहार सखीवृता ॥ ८
रूपेण वयसा चैव मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९
तां सखीरहितामेकामेकवस्त्रामलंकृताम् ।
ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् ॥ १०
तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च ब्रह्मर्षिस्तपोबलसमन्वितः ।
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ॥ ११
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ॥ १२
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ।
अक्रुध्यत्स तया विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रं समावृणोत् ॥ १३
ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः ॥ १४
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ।
ज्ञातं वा यदि वाज्ञातं तद्दृतं ब्रूत माचिरम् ॥ १५
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ १६
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्सुहृद्वर्गं प्रत्यजानन्न चैव ते ॥ १७
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम् ।
पितरं दुःखितं चापि सुकन्येदमथाब्रवीत् ॥ १८
मयाटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् ।
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥ १९
एतच्छ्रुत्वा तु शर्यातिर्वल्मीकं तूर्णमाद्रवत् ।
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् ॥ २०

C. 3. 10337
B. 3. 122. 22
K. 3. 123. 20

---

D4. 6 S पश्यंती सु-; D1. 2 वनोद्देशे. Ś1 K3 B1. 3. 4 Dc1 Dn D5 T1 मनोरमां; B2 T2 G M3 °हरां; D1. 2 °रमं; D4. 6 °रमा. — $^{c}$) T1 G4 वनस्पतिं. G2. 4 प्रचिन्वंती; M प्रचिन्वाना.

**9** B3 om. 9–11. — $^{a}$) M2m सुकन्या (for रूपेण). — $^{b}$) Ś1 K D3. 5 सुरापान-; B1 सुरूपेण; Dc संमोहेन; D1. 2 मधुपान- (for मदनेन). T1 M2 दमेन (M2 मदेन) मदनेन च.

**10** B3 om. 10 (cf. v.l. 9); M1 om. $10^{a}$–$11^{d}$. — $^{d}$) G4 चलंतीम् (for चरन्तीम्).

**11** B3 om. 11 (cf. v.l. 9); M1 om. $11^{abcd}$ (cf. v.l. 10); K3 om. $11^{cd}$. — $^{c}$) K4 B Dc Dn D3–6 विप्रर्षिस् (for ब्रह्मर्षिस्). D1. 2 ब्रह्मर्षिः कामसंतप्तः. — $^{e}$) Ś1 K2 आभाषत; K3 बभाषे च (for आबभाषे). — $^{f}$) Ś1 K1. 2 तस्य (for चास्य).

**13** $^{c}$) D1. 2 T1 G2 सहसा (for स तया). D1 नेत्रे; T G2. 3 M1 विद्धो; G4 विप्रो (for विद्धे). — $^{d}$) D1 विद्धे (for नेत्रे). T1 G1 तथा नेत्रेतिमन्युमान्. — $^{e}$) K4 सर्याति°; T1 G2 M शर्याति°; G1 शैर्याति°. — $^{f}$) K2–4 B D (except D3) T2 G3 M °न्मूत्रे.

**14** $^{a}$) D1. 2 शकृन्मूत्रे ततो रुद्धे. — $^{b}$) K4 M1 सैन्यमेत्याह दुःखितं; B2 सैन्यमानाह दुष्कृतं; Dc D1. 2. 4. 6 T G M2 सैन्यमासीत्सुदुःखितं. — $^{d}$) Ś1 K2. 4 Dc D1. 3 M2 पर्यतप्यत; K1 °पृच्छंश्च.

**15** $^{e}$) D1. 2 ज्ञानाद्वाप्यथ वाज्ञानात्. — $^{f}$) K4 M2 तदिदं; B1. 3 तत्कृतं; Dc Dn D2. 4 तद् द्रुतं (for तद्दृतं). D1. 2 T G नानृतं (T1 G1. 2 तद् द्रुतं; T2 G3. 4 द्रुतं वै) वदतानघाः.

**16** $^{b}$) K3 T1 G1. 2 M विद्म° (for विद्मो°). D1. 2 नानृतं करवामहे. — $^{c}$) Dc2 सर्वेषां वै (for सर्वोपायैर्). — $^{d}$) T1 G1 transp. भवान् and तद्. Ś1 K Dc D3. 5 समधि°; G4 तदभि° (for तदधि°).

**17** $^{a}$) D1. 2 ततस्तु स महीपालः. — $^{c}$) B1 यं यं (for पर्य-). B2. 4 G1 सुहृद्वर्गान्. — $^{d}$) B2 Dn D4. 6 G4 पर्य° (for प्रत्य°).

**18** $^{a}$) K1 अनाहार्थां; D1. 2 परमार्तं; T1 आनाय्यार्तं; G2. 4 सा तदार्तं (for आनाहार्तं). G4 ततः सैन्यं (for ततो दृष्ट्वा). — Ś1 om. $18^{bc}$. — $^{b}$) G4 ततो दृष्ट्वा (for तत्सैन्यम्). — $^{c}$) B D (except D1–3) दृष्ट्वा (for चापि). — $^{d}$) D1. 2 (with hiatus) सुकन्या इदमब्रवीत्.

**19** $^{a}$) Ś1 K1. 2 मया किलेह; K4 मयाटव्ये हि; D1. 2 मया भ्रमंत्या; D3 मयागत्येह; G2 मयाटंत्या च. — $^{b}$) Ś1 K1 G1 दृष्ट्वा (for दृष्टं). — $^{c}$) Ś1 K1. 2 D1. 2. 5 खद्योतवनविज्ञानात्; K3. 4 °वदवज्ञानात्; S °वदभि (M1 °वि) ज्ञाय.

**20** Ś1 om. $20^{ab}$. — $^{ab}$) B2. 4 D4. 6 transp. शर्यातिः and वल्मीकं. K4 Dc2 सर्यातिर्; S (except T2 G3) शर्य्या-

C. 3. 10337
B. 3. 122. 22
K. 3. 123. 21

अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ।
अज्ञानाद्बालया यत्ते कृतं तत्क्षन्तुमर्हसि ॥ २१
ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।
रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् ॥ २२
तामेव प्रतिगृह्याहं राजन्दुहितरं तव ।
क्षमिष्यामि महीपाल सत्यमेतद्ब्रवीमि ते ॥ २३
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ २४
प्रतिगृह्य च तां कन्यां च्यवनः प्रससाद ह ।
प्राप्तप्रसादो राजा स ससैन्यः पुनराव्रजत् ॥ २५
सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ २६
अग्नीनामतिथीनां च शुश्रूषुरनसूयिका ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

# १२३

लोमश उवाच ।
कस्यचित्त्वथ कालस्य सुराणामश्विनौ नृप ।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ १
तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव ।
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् ॥ २
कस्य त्वमसि वामोरु किं वने वै करोषि च ।

---

तिर् (for शर्यातिर्). K4 B2. 4 Dc1 अभ्यगात्; D4. 6 अभ्ययात् (for आद्रवत्). — After 20c, T2 G2–4 ins.:

595* चन्द्रादित्यसमप्रभम् ।
ज्ञानवृद्धं वयोवृद्धं.
[(L. 2) T2 G3 शील° (for वयो°).]

**21** D5 om. 21. — a) K3 अयाचत स; M °चताथ (for °चदथ). — b) Ś1 K1. 3. 4 Dc स महीपतिः (for पृथिवी°). — After 21, D3 ins.:

596* इमामेव च ते कन्यां ददामि सुदृढव्रत ।
भार्यार्थी त्वं गृहाणेमां प्रसीदस्व च भार्गव ।

**22** After 22ab, B D (except D1–3. 5) ins.:

597* अपमानादहं विद्धो ह्यनया दर्पपूर्णया ।

— d) Ś1 K D3 लोभमोहसमावृतां; D5 °समावृतः; M बुद्धिमोहबलात्कृतां.

**23** c) B2 Dn D4. 6 क्षंस्यामीति (for क्षमि°).

**24** Before 24, all MSS. except G4 ins. (the superfluous) लोमश उ°.

**25** a) T G तु (for च). — c) Ś1 K D3. 5 प्राप्ते प्रसादे. K4 राजन्स; B Dc Dn D4. 6 राजा वै; D1. 2 राजासौ; D5 राजा च; T G राजर्षिः (for राजा स). — d) K2. 4 B D (except D1. 2) T2 G3 पुरम् (for पुनर्). K3 सैन्यः पुरमथाव्रजत्.

**27** b) Ś1 K1–3 D1. 2 अनसूयया; Dc2 D3 G2. 4 M1 अनसूयका; M2 अनसूयता.

Colophon. — *Major parvan:* Ś1 K1. 2 T G2–4 M1 आरण्य. — *Sub-parvan:* B4 T1 तीर्थयात्रा, followed by सौकन्य. Ś1 K1. 2 (all om. sub-parvan name) mention only सुकन्योपाख्यान; K3. 4 D1. 5, likewise, only लोमशतीर्थयात्रा, followed by सौकन्य; and B1–3 Dc Dn1. n3 D2–4. 6 T2 G3 only सौकन्य. — *Adhy. name:* T G3 सुकन्याप्रदानं. — *Adhy. no.* (figures, words or both): K1 27 (= 127); Dn1 (*sup. lin.*) 121; Dn2 122 (as in text); Dn3 S 123 (M2 125); D1 127. — *Śloka no.:* Dn 29; D1 31.

## 123

**1** b) Ś1 K Dc D5 नासत्याव्; B2. 3 D3. 4. 6 त्रिदशयाम्; D1. 2 पुराणाम्; G1 सीराणाम् (for सुराणाम्). D1. 2 उभौ; G1 तदा (for नृप).

**2** d) D6 नृप (for [इ]दम्); cf. 1b.

**3** a) Ś1 K1. 2 अथ (for असि). — b) Ś1 K D3. 5 किं वनेस्मिन् (D3 वनेस्मिन्किं) चिकीर्षसि; B Dc Dn D4. 6 वनेस्मिन्किं करोषि च (D6 वा); D1. 2 किं चात्र क्रियते त्वया. — c) Ś1 K D3. 5 इच्छाम (K1. 2. 4 °व)स्त्वां वयं ज्ञातुं; D1. 2

इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ॥ ३
ततः सुकन्या संवीता तावुवाच सुरोत्तमौ ।
शर्यातितनयां वित्तं भार्यां च च्यवनस्य माम् ॥ ४
अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु ।
कथं त्वमसि कल्याणि पित्रा दत्ता गताध्वने ॥ ५
भ्राजसे वनमध्ये त्वं विद्युत्सौदामिनी यथा ।
न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ॥ ६
सर्वाभरणसंपन्ना परमाम्बरधारिणी ।
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपङ्किनी ॥ ७
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ।
त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतम् ॥ ८
असमर्थं परित्राणे पोषणे च शुचिस्मिते ।
साधु च्यवनमुत्सृज्य वरयस्वैकमावयोः ।
पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ॥ ९
एवमुक्ता सुकन्या तु सुरौ ताविदमब्रवीत् ।
रताहं च्यवने पत्यौ मैवं मा पर्यशङ्किथाः ॥ १०
तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ।
युवानं रूपसंपन्नं करिष्यावः पतिं तव ॥ ११
ततस्तस्यावयोश्चैव पतिमेकतमं वृणु ।
एतेन समयेनैनमामन्त्रय वरानने ॥ १२
सा तयोर्वचनाद्राजन्नुपसंगम्य भार्गवम् ।
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति ॥ १३
तच्छ्रुत्वा च्यवनो भार्यामुवाच क्रियतामिति ।
भर्त्रा सा समनुज्ञाता क्रियतामित्यथाब्रवीत् ॥ १४

C. 3. 10360
B. Hapl. om.
K. 3. 124. 16

---

ज्ञातुं त्वामिच्छतो भद्रे.

**4** $^{a}$) B Dc Dn D$_{3.4.6}$ T$_{2}$ G$_{3}$ सव्रीडा (for संवीता). — $^{b}$) G$_{4}$ उवाच च (for तावुवाच). D$_{1.2}$ उवाच सुरसत्तमौ. — $^{c}$) K$_{4}$ सर्याति-; T$_{1}$ G$_{2}$ M शय्याति-; G$_{1}$ शय्यातेस्. — $^{d}$) B Dn D$_{4.6}$ transp. च and माम्. D$_{3}$ तु (for च). — After 4, S ins.:

598* नाम्ना चाहं सुकन्येति नृलोकेऽस्मिन्प्रतिष्ठिता।
साहं सर्वात्मना नित्यं भर्तारमनुवर्तिनी।

[(L. 1) M$_{2}$ चापि (for चाहं). M$_{1}$ transp. सुकन्येति and नृलोकेऽस्मिन्. M$_{1}$ च विश्रुता (for प्रति°). — (L. 2) T$_{1}$ G$_{1}$ M$_{2}$ भर्तारं प्रति वि(G$_{1}$ नि)ष्ठिता; M$_{1}$ पतिं प्रति सुनि°.]

**5** $^{a}$) Ś$_{1}$ K D$_{1-3.5}$ ततो° (for अथा°). K$_{3.4}$ Dc D$_{3.5}$ T G$_{1.2}$ M [ए]नां; T$_{2}$ G$_{3}$ [इ]मां (for [ए]तां). — $^{d}$) Ś$_{1}$ K$_{2}$ गताध्वरे; K$_{3}$ °त्मने; D$_{3}$ °धमे; D$_{5}$ °बुधे; S गता वने (G$_{1}$ वरानने).

**6** $^{a}$) Dc यं (for त्वं). Ś$_{1}$ K$_{1.2}$ D$_{3}$ भ्राजस्य(D$_{3}$ °से)-स्मिन्वनोद्देशे; K$_{4}$ B Dn D$_{4.6}$ भ्राजसेस्मिन्वने भीरु; D$_{1.2}$ भ्राजसे तनुमध्या त्वं. — $^{b}$) =3. 50. 12$^{d}$. K$_{1.2}$ B$_{1.2}$ °सौदामनी. — $^{c}$) G$_{1.2}$ तुल्यांगीं (for तुल्यां हि). — $^{d}$) K$_{1-3}$ D$_{1}$ तव (for त्वया). K$_{4}$ B$_{1-3}$ D$_{1}$ पश्यामि. B Dc Dn D$_{3-6}$ भाविनि (for भामिनि). — After 6, B D (except D$_{1-3.5}$) S ins.:

599* अनाभरणसंपन्ना परमाम्बरवर्जिता।
शोभयस्यधिकं भद्रे वनमप्यनलंकृता।

[(L. 2) S शोभसेभ्य(T$_{1}$ G$_{2}$ °ह्य)धिकं. S एवम् (for वनम्). T$_{2}$ G$_{3}$ पुनरलंकृता (for अप्यनलं°).]

**7** G$_{4}$ om. 7$^{ab}$. — $^{c}$) Ś$_{1}$ K शोभेस्त्वम्; B$_{2.3}$ Dn D$_{1-4.6}$ शोभसे तु (D$_{1.2}$ हि); D$_{5}$ शुभे त्वं (for शोभेथास्तु). M$_{2}$ अहीनांगी (for अनव°). — $^{d}$) G$_{2.4}$ त्वेव (for त्वेवं).

**8** $^{c}$) D$_{1-3}$ त्वमुपाससि; T$_{2}$ G$_{3.4}$ त्वमुपास्यसि; G$_{2}$ M$_{1}$ त्वमुपासे हि (for त्वमुपास्से ह). — $^{d}$) D$_{3}$ G$_{1}$ °विवर्जितं.

**9** $^{b}$) Ś$_{1}$ K Dc वा; Dn तु (for च). — $^{c}$) Ś$_{1}$ K D$_{3}$ साद्य; B$_{2}$ Dc Dn D$_{1.2.4.6}$ G$_{1}$ सा त्वं (for साधु). Ś$_{1}$ K$_{1.2}$ व्यसनम् (for च्यवनम्). — $^{d}$) G$_{2}$ M$_{2}$ वरयैकं त्वम् (for वरयस्वैकम्).

**10** $^{a}$) B D (except D$_{1-3}$) [अ]पि (for तु). G$_{1}$ सुकन्या चैवमुक्ता च; M$_{2}$ एवमुक्ता तु सा कन्या. — $^{c}$) D$_{1.2}$ प्रीत्या (for पत्यौ). Ś$_{1}$ K$_{1.2}$ पत्यौ रताहं च्यवने. — $^{d}$) Dc नैवं (for मैवं). K$_{3.4}$ B$_{2-4}$ D मां (for मा). Ś$_{1}$ पहशंकतां (sic); K$_{2-4}$ Dc D$_{1.2}$ पर्यशंकतां (Dc$_{1}$ °तं); B$_{3}$ °शंकितं; B$_{4}$ परिशंकिथाः; D$_{3}$ परिशंकितं.

**11** $^{b}$) M एवं (for आवां). B$_{2}$ M$_{2}$ देवभिषक्तमौ; D$_{3}$ देवौ भिषग्वरौ.

**12** $^{a}$) M त्वम् (for तस्य). — $^{b}$) S एकतरं. B Dn D$_{4.6}$ वृणीष्वान्यतमं पतिं. — $^{c}$) Ś$_{1}$ K$_{1.2.4}$ आवाम्; Dc एवम्; D$_{1.2}$ एव; T$_{1}$ एतम्; T$_{2}$ G$_{3}$ इमम् (for एनम्). — $^{d}$) Ś$_{1}$ K Dc Dn सुमध्यमे; B D$_{4.6}$ पतिं शुभे; D$_{3}$ शुचिस्मिते (for वरा°).

**14** K$_{1}$ Dn$_{1}$ om. (hapl.) 14$^{c}$–15$^{b}$. — $^{c}$) D$_{1.2}$ S transp. भर्त्रा and सा.

**15** K$_{1}$ Dn$_{1}$ om. 15$^{ab}$ (cf. v.l. 14). — $^{a}$) M$_{1}$

C. 3. 10360
B. HAPL. OM.
K. 3. 124. 17

श्रुत्वा तदश्विनौ वाक्यं तत्तस्याः क्रियतामिति ।
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥ १५
ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद्राजन्सरः प्रविशतां प्रभो ॥ १६
ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्ततः ।
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः ।
तुल्यरूपधराश्चैव मनसः प्रीतिवर्धनाः ॥ १७
तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे ।
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ।
यत्र वाप्यभिकामासि तं वृणीष्व सुशोभने ॥ १८

सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ।
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ॥ १९
लब्ध्वा तु च्यवनो भार्यां वयोरूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ॥ २०
यथाहं रूपसंपन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् ॥ २१
तस्माद्युवां करिष्यामि प्रीत्याहं सोमपीथिनौ ।
मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् ॥ २२
तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।
च्यवनोऽपि सुकन्या च सुराविव विजह्रतुः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

ततो° (for तद°). Ś$_1$ K$_{2-4}$ Dn$_2$. n$_3$ D$_{1-3. 5}$ T$_1$ G$_{2. 4}$ तच्छ्रुत्वा चाश्विनौ वा(Ś$_1$ °नोर्वा)क्यं. — $^b$) Ś$_1$ K$_{2. 3}$ Dn$_2$. n$_3$ D$_{1-3. 5}$ तस्यास्तौ; K$_4$ T$_1$ G$_{2. 4}$ (by transp.) तस्यास्तत्.

**16** $^b$) T G$_{3. 4}$ M तत्; G$_1$ तां (for ह). — $^d$) K$_4$ B$_{2-4}$ Dn D$_{4-6}$ T$_2$ G$_{1-3}$ M$_1$ प्राविशतां; B$_1$ Dc D$_{1. 2}$ प्राविशतौ; G$_4$ प्राविशतान्. B$_1$ Dc D$_{1. 2}$ उभौ; B$_{2-4}$ Dn D$_{4. 6}$ M$_1$ तदा (for प्रभो).

**17** $^b$) B Dn D$_{4. 6}$ तदा; S त्रयः (for ततः). — $^c$) K$_3$ D$_{2. 5}$ चैव (for सर्वे). — $^e$) N (except B$_1$ D$_1$) °वेष° (for °रूप°). K$_{1. 3}$ D$_{1. 2. 5}$ सर्वे (for चैव).

**18** After 18$^{cd}$, S (except G$_1$) ins.:

600* तमश्विनोरन्यतमं च्यवनं वा मनस्विनि ।
[T$_1$ G$_2$ M यशस्विनि.]

— $^e$) D$_{1. 2}$ यं तु (for यत्र). K$_{1. 4}$ B$_3$ Dc D$_{1. 2. 4. 6}$ चा° (for वा°). T$_1$ G$_1$ यमेवमभि°; T$_2$ G$_3$ यमेव त्वं हि कामासि; G$_2$ यं त्वमेवाभि°; G$_4$ यमेव त्वभि°. — $^f$) Dc D$_{1. 2}$ S शुभा(T$_1$ G$_1$ वरा)नने (for सुशो°).

**19** $^a$) K$_4$ च (for तु). — $^c$) K$_4$ D$_{1. 2}$ साध्वी; M$_1$ हित्वा (for बुद्ध्या). — $^d$) T G ततो; M देवौ (for देवी). K$_3$ D$_{1. 2}$ S transp. स्वकं and पतिम्. K$_4$ देवौ ताविदमब्रवीत्. — After 19, K$_4$ D$_2$ ins.:

601* यद्यहं मनसा नान्यं पतिमिच्छे स्वकं विना ।
तेन सत्येन मे देवौ प्रयच्छेतां पतिं मम ।

[(L. 1) D$_2$ यथाहमंगना नान्यं (for the prior half). — (L. 2) D$_2$ स्वकं (for मम).]

K$_4$ D$_2$ cont.: D$_1$ ins. after 19:

602* एवमुक्तौ तथा साध्व्या नासत्यौ सुरसत्तमौ ।
दर्शयामासतुस्तस्याः सुकन्याया भृगोः सुतम् ।

Thereafter K$_4$ *repeats* 19$^{cd}$ (!), and then cont.:

603* ततो देवाः सुतुष्टाश्च च्यवनं तं पतिं ददुः ।

**21** $^a$) Ś$_1$ K$_1$ यदर्थं; K$_3$ D$_3$ यदहं (for यथाहं).

**22** $^b$) Ś$_1$ K$_{1. 2. 4}$ D$_3$ सोमपा(Ś$_1$ °पी)यिनौ.

**23** $^b$) D$_{1. 2}$ जग्मतुस्ततः (for प्रति°). — $^c$) K$_3$ B D$_{4. 6}$ च (for [अ]पि). — After 23, D$_{1. 2}$ ins.:

604* तस्मिन्नेव सरस्तीरे बिभ्रतौ रूपमुत्तमम् ।

Colophon. — *Major parvan:* Ś$_1$ K$_1$ Dn$_2$ D$_6$ T$_2$ G$_{2-4}$ M$_1$ आरण्य. — *Sub-parvan:* M$_2$ तीर्थयात्रा, followed by सौकन्य. Ś$_1$ K$_{1. 2}$ (all om. sub-parvan name) mention only सुकन्योपाख्यान; K$_{3. 4}$ D$_{1. 3}$, likewise, only लोमशतीर्थयात्रा, followed by सौकन्य; and B Dc Dn D$_{2. 4-6}$, only सौकन्य. — *Adhy. name:* T$_2$ G$_3$ च्यवनरूपप्राप्तिकथनं; M$_2$ च्यवनरूपलाभः. — *Adhy. no.* (figures, words or both): Dn$_1$ 122; Dn$_2$ 123 (as in text); Dn$_3$ S 124 (M$_2$ 126); D$_1$ 128. — *Śloka no.:* Dn 25; D$_1$ 28.

# 124

**1** Dn$_2$ T G$_3$ om. the ref. — $^a$) B D (except D$_{3. 5}$) T$_2$ (after corr.) G$_4$ शुश्राव; T$_{1. 2}$ (before corr.) G$_{1-3}$ M संश्रुत्य (for श्रुत्वा तु). K$_4$ सर्यातिर्; S (except T$_2$ G$_{3. 4}$) शर्यातिर्. — $^b$) S (except M$_1$) युवानं (for

# १२४

लोमश उवाच ।

ततः श्रुत्वा तु शर्यातिर्वयःस्थं च्यवनं कृतम् ।
संहृष्टः सेनया सार्धमुपायाद्भार्गवाश्रमम् ॥ १

च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव ।
रेमे महीपः शर्यातिः कृत्स्नां प्राप्य महीमिव ॥ २

ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे महामनाः ॥ ३

अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् ।
याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ॥ ४

ततः परमसंहृष्टः शर्यातिः पृथिवीपतिः ।
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ५

प्रशस्तेऽहनि यज्ञीये सर्वकामसमृद्धिमत् ।
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥ ६

तत्रैनं च्यवनो राजन्याजयामास भार्गवः ।
अद्भुतानि च तत्रासन्यानि तानि निबोध मे ॥ ७

अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्यमाणं तयोर्ग्रहम् ॥ ८

इन्द्र उवाच ।

उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ।
भिषजौ देवपुत्राणां कर्मणा नैवमर्हतः ॥ ९

च्यवन उवाच ।

मावमंस्था महात्मानौ रूपद्रविणवत्तरौ ।
यौ चक्रतुर्मां मघवन्वृन्दारकमिवाजरम् ॥ १०

ऋते त्वां विबुधांश्चान्यान्कथं वै नार्हतः सवम् ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरंदर ॥ ११

इन्द्र उवाच ।

चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ॥ १२

लोमश उवाच ।

एतदेव यदा वाक्यमाम्रेडयति वासवः ।

C. 3. 10383
B. 3. 124. 13
K. 3. 125. 13

---

वयःस्थं). — $^{c}$) Ś$_1$ K Dc D$_{3.5}$ M प्रहृष्टः; Dn G$_2$ सु° (for सं°).

**2** T$_1$ M$_2$ om. 2$^{cd}$. — $^{c}$) B$_{2.3}$ D (except D$_{1-3.5}$) सभार्यः (for महीपः). MSS. शय्यातिः, शंयाति, etc.; hereafter these variants are completely ignored! — $^{d}$) D$_{1.2}$ कृत्स्नां लब्ध्वे मेदिनीं.

**3** Ś$_1$ om. 3$^{cd}$. — $^{c}$) T$_2$ G$_{2-4}$ M$_2$ कल्याणीं. — $^{d}$) S (except G$_1$) कथां (for कथाश्च्). K$_3$ B Dn D$_{4.6}$ मनोरमाः (B$_1$ महीपतिः) (for महा°).

**4** $^{ab}$) Ś$_1$ च्यवनश्च महाराजं प्रोवाच परि°. — $^{d}$) B Dn$_1$. n$_3$ D$_{4.6}$ अव° (for उप°).

**5** $^{b}$) B Dc Dn D$_{4.6}$ अवनी° (for पृथिवी°).

**6** $^{a}$) S (except G$_4$) याज्ञीये. — $^{b}$) Ś$_1$ K$_{1.2}$ D$_5$ °द्धिमान्.

**7** $^{c}$) D$_{1.2}$ T$_1$ G$_1$ अत्य(D$_{1.2}$ यान्य)द्भुतानि (for अद्भुतानि च). — $^{d}$) D$_{1.2}$ तानि मे गदतः शृणु.

**8** $^{d}$) Ś$_1$ मा गृहाणे (sic); K$_{1.2}$ मा गृहाण; K$_3$ D$_5$ गृह्णानं तु; B$_{2-4}$ Dc Dn D$_4$ गृह्णानं स (for गृह्य°). B$_1$ प्रतिग्रहं; D$_{1.2}$ तयोर्हविः; D$_5$ तयोः सवं. K$_4$ D$_{1-3}$ मा गृहाणैतयोर्ग्रहं. — After 8, Ś$_1$ reads 13$^{cd}$.

**9** $^{b}$) K$_{2.4}$ D$_5$ नासत्यौ देवतास्विह (D$_5$ °स्विनौ). — $^{c}$) Ś$_1$ K D$_3$ देवतानां हि; B Dc Dn D$_{4-6}$ दिवि देवानां; D$_{1.2}$ देवलोकस्य (for °पुत्राणां). — $^{d}$) T$_2$ G$_{3.4}$ कर्मणां (for °णा). Ś$_1$ K$_{1.2.4}$ D$_{1-3}$ तेन गर्हितौ; K$_3$ B Dc Dn D$_{4-6}$ तेन नार्हतः (for नैव°).

**10** Ś$_1$ om. (hapl.) 10–12. — $^{a}$) B Dn D$_{4.6}$ महोत्साहौ; Dc नावमंस्था. — $^{b}$) K$_4$ D$_3$ °वर्चसौ; D$_{1.2}$ °संमतौ; T$_2$ G$_3$ °वत्तमौ; G$_4$ °वित्तमौ.

**11** Ś$_1$ om. 11 (cf. v.l. 10). — $^{a}$) K$_1$ D$_5$ ऋते त्वा; M त्वदृते (for ऋते त्वां). D$_{1.2}$ तौ तस्माद्विबुधश्रेष्ठ. — $^{b}$) M$_2$ नैवा° (for वै ना°). B$_4$ स्वरं; Dc$_2$ T$_{1.2}$ (before corr.) स्वयं (for सवम्). D$_{1.2}$ नेदृग्वक्तुं त्वमर्हसि. — $^{d}$) K$_{3.4}$ D$_{3.5}$ T$_2$ G$_{2-4}$ परंतप; Dc परंतपौ; D$_{1.2}$ सुरोत्तमौ (for पुरं°).

**13** $^{a}$) D$_1$ G$_1$ यथा; T$_2$ G$_{2-4}$ तदा (for यदा). — $^{b}$) K$_{1.2}$ S (except M$_2$) वासवे; B Dn D$_{4-6}$ देवराट् (for वासवः). — $^{c}$) Ś$_1$ T$_2$ G$_{2-4}$ तु तद्वाक्यं; D$_1$ तु तं शक्रं; D$_2$ च तं शक्रं (for ततः शक्रं); cf. 14$^{a}$ and v.l.

C. 3. 10383
B. 3. 124. 13
K. 3. 125. 13

अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः ॥ १३

ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा ।
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ १४

आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ १५

एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः ।
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥ १६

ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।
तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ॥ १७

संस्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ।
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ १८

ततः कृत्या समभवदृषेस्तस्य तपोबलात् ।
मदो नाम महावीर्यो बृहत्कायो महासुरः ।
शरीरं यस्य निर्देष्टुमशक्यं तु सुरासुरैः ॥ १९

तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत् ।
हनुरेका स्थिता तस्य भूमावेका दिवं गता ॥ २०

चतस्र आयता दंष्ट्रा योजनानां शतं शतम् ।
इतरे त्वस्य दशना बभूवुर्दशयोजनाः ।
प्राकारसदृशाकाराः शूलाग्रसमदर्शनाः ॥ २१

बाहू पर्वतसंकाशावायतावयुतं समौ ।
नेत्रे रविशशिप्रख्ये वक्त्रमन्तकसंनिभम् ॥ २२

लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया ।
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ॥ २३

स भक्षयिष्यन्संक्रुद्धः शतक्रतुमुपाद्रवत् ।
महता घोररूपेण लोकाञ्शब्देन नादयन् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

**14** a) Ś1 K1. 2 D1. 2 M1 ततः; K3. 4 सुतं (for तु तं). — c) M1 वल° (for बल°).

**15** c) D1. 2 प्रेषयिष्यामि (for प्रहरि°). — d) D1. 2 दुरासदं (for अनुत्तमम्).

**16** G1 om. 16ab. — b) T2 G2–4 [अ]थ (for स). — Ś1 D1 T2 G3 (hapl.) om. 16c–17d.

**17** Ś1 D1 T2 G3 om. 17 (cf. v.l. 16). — ab) K3. 4 D1 कोपाद्वज्रमिंद्रः (for वज्रं घोररूपं).

**18** a) K2–4 B Dc Dn D3–6 तं (for सं-). G1 तं बाहुं (for च्यवनो). D1. 2 च्यवनः स्तंभयामास. — b) D1. 2 जुहाव. T2 (by corr.) [ऽ]नले. — c) B2 T2 (by corr.) कृत्यार्थं. D1. 2 स (for सु-). — d) Ś1 K1 देवान् (for देवं). D1. 2 देवेशं हंतुमुद्यतः.

**19** a) D1. 2 तत्र (for ततः). Ś1 K D3. 5 तत्र कृत्योद्भवो जज्ञे; B Dc D4. 6 ततः कृत्याथ संजज्ञे. — b) N (except D1. 2) मुनेस् (for ऋषेस्). — c) D1. 2 °कायो (for °वीर्यो). — d) T1 G1 महारवः (for °सुरः). D1. 2 महावीर्यो महाबलः. — e) Dc T G2. 3 तस्य (for यस्य). — f) Ś1 K1 वै; K4 D3 M नृ-; D1. 2 स- (for तु). — After 19, Ś1 K1. 2. 4 D1–3 ins.:

605* तस्य प्रमाणं वपुषा न तुल्यमिह विद्यते ।

**20** b) B2 D1. 2 M तीक्ष्णोग्रदशनं; T1 तीक्ष्णं तद्दर्शनं; G4 तीक्ष्णाग्रं दशनं. — c) Ś1 K D1–3. 5 हनुरेकः स्थितस्. B1. 3. 4 Dc Dn D4. 6 M त्वस्य (for तस्य). — d) Ś1 K D1–3. 5 भूमावेको दिवं गतः.

**21** a) Ś1 K B Dn D1. 3–6 चा(K4 त्वा)यता (for आ°). Dc आयताश्चतुरो दंष्ट्रा. — c) Ś1 K1. 2 B1. 2. 4 Dn D4. 6 T G3. 4 तस्य (for त्वस्य). — e) Ś1 प्राकारदशना°; K1. 3. 4 D3 °शिखरा°; K2 B Dc Dn D4–6 प्रासादशिखरा°; D1. 2 प्राकारपरिखा°; T2 G3 M2 प्रासादसदृशा°.

**22** Dc2 om. 22ab. — a) T G परिघसंकाशौ. — b) S व्यायतौ (for आयतौ). K2 चायुतं; D5 अयुतौ; T2 G3. 4 भीषणौ (for अयुतं). Ś1 समं; K2 शमं; G2 शतं (for समौ). — c) G1. 2. 4 शशिरवि° (by transp.). — d) B Dn D4. 6 वक्त्रं कालाग्निसंनिभं.

**23** b) K3. 4 D5 विद्युच्चलित°; D1. 2 विद्युच्चापल°; D3 विद्युच्चंचल°. — d) T2 G3. 4 जगद्बली.

**24** a) Ś1 Dc D1. 2 सं- (for स). — c) Ś1 K1. 3. 4 D3. 5 घोरनादेन. — d) K3 B2 Dc D1. 2. 5 S (except M2) पूर° (for नाद°).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan:* N (om. sub-parvan name) mentions only सौकन्य (K4 D1 लोमशतीर्थयात्रा, followed by सौकन्य). — *Adhy. name:* T2 G3 पुरंदरवज्रस्तंभनं. — *Adhy. no.* (figures, words or both): Dn1 123; Dn2 124 (as in text); Dn3 S 125 (M2 127); D1 129. — *Śloka no.:* Dn D1 25.

# १२५

लोमश उवाच ।

तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः ।
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ १
भयात्संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः ।
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ॥ २
सोमार्हावश्विनावेतावद्य प्रभृति भार्गव ।
भविष्यतः सत्यमेतद्वचो ब्रह्मन्ब्रवीमि ते ॥ ३
न ते मिथ्या समारम्भो भवत्वेष परो विधिः ।
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ॥ ४
सोमार्हावश्विनावेतौ यथैवाद्य कृतौ त्वया ।
भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ॥ ५
सुकन्यायाः पितुश्चास्य लोके कीर्तिः प्रथेदिति ।
अतो मयैतद्विहितं तव वीर्यप्रकाशनम् ।
तस्मात्प्रसादं कुरु मे भवत्वेतद्यथेच्छसि ॥ ६
एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरंदरम् ॥ ७
मदं च व्यभजद्राजन्पाने स्त्रीषु च वीर्यवान् ।
अक्षेषु मृगयायां च पूर्वसृष्टं पुनः पुनः ॥ ८
तथा मदं विनिक्षिप्य शक्रं संतर्प्य चेन्दुना ।
अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम् ॥ ९
विख्याप्य वीर्यं सर्वेषु लोकेषु वदतां वरः ।
सुकन्यया सहारण्ये विजहारानुरक्तया ॥ १०

C. 3. 10406
B. 3. 125. 11
K. 3. 126. 11

---

## 125

**2** $^{a}$) D$_{1.2}$ स तथा (for भयात्सं-). — $^{b}$) Ś$_{1}$ K$_{1.3.4}$ D$_{2}$ T$_{2}$ G$_{2.3}$ सृक्किणी ; B सृक्कणी ; D$_{3}$ सृक्कणीं ; G$_{1}$ सृक्कणिं ; M$_{1}$ स्त्रक्कणी ; M$_{2}$ स्त्रक्किणी. G$_{1.4}$ परिलेलिहन् (for लेलिहन्मुहुः). — $^{c}$) D$_{5}$ पांडवेय (for देवराजश्च). Ś$_{1}$ K D$_{3}$ प्रणतोब्रवीत्पांडवेय (hypermetric !).

**3** B$_{4}$ om. 3–4. — $^{c}$) D$_{1.2}$ भविष्येते वचः सत्यं. — $^{d}$) Ś$_{1}$ K$_{1.2}$ Dc सत्यं (for ब्रह्मन्). K$_{3.4}$ B Dn D$_{1-6}$ वचो विप्र (D$_{1.2}$ सर्वमेतत्) प्रसीद मे.

**4** B$_{4}$ om. 4 (cf. v.l. 3). — $^{a}$) Ś$_{1}$ K$_{1.2.4}$ मा (for न). — $^{b}$) K$_{1.2}$ D$_{3}$ भवति (for भवतु). T$_{1}$ G$_{2.4}$ M$_{2}$ एषोपरो (for एष परो). Ś$_{1}$ K D$_{1}$ तपोधन (for परो विधिः). — $^{c}$) D$_{1.2}$ त्वाहं (for चाहं). B$_{1}$ देवर्षे ; B$_{2.3}$ S ब्रह्म° (for विप्र°).

**5** $^{a}$) T$_{2}$ G$_{1-3}$ सोमपौ (for सोमार्हौ). — $^{b}$) Dn D$_{5}$ यथा वाद्य ; G$_{1}$ तथै° (for यथै°). K$_{4}$ D$_{1-3}$ T$_{1}$ transp. कृतौ and त्वया. — After 5$^{ab}$, S ins. :

606* तथैव मामपि ब्रह्मञ्श्रेयसा योक्तुमर्हसि ।

— T$_{2}$ om. 5$^{c}$–6$^{f}$.

**6** T$_{2}$ om. 6 (cf. v.l. 5). — $^{b}$) T$_{1}$ G (G$_{3}$ om.) M$_{2}$ transp. लोके and कीर्तिः. Ś$_{1}$ K$_{1.2.4}$ D$_{3}$ भवेदिति ; K$_{3}$ D$_{1.2}$ भविष्यति (for प्रथे°). — $^{c}$) D$_{1.2}$ एवं ; S (except G$_{3}$ ; T$_{2}$ om.) ततो (for अतो). D$_{1.2}$ [ए]व (for [ए]तद्). M प्रथितं (for विहितं). — After 6$^{cd}$, D$_{1.2}$ ins. :

607* इह रिरंसया देवाः पितरश्च महर्षयः ।
अर्चयन्ति महाप्राज्ञ क्रतुं तव महाबलाः ।

— $^{f}$) B Dc Dn D$_{4.6}$ S (except M$_{2}$ ; T$_{2}$ om.) एवं (for एतद्). Ś$_{1}$ K$_{1.2}$ यदि° (for यथे°).

**7** $^{b}$) B Dn D$_{4.6}$ भार्गवस्य (for च्यव°). — $^{c}$) Ś$_{1}$ K$_{1.2}$ मन्युर्व्यपागम° ; K$_{3}$ D$_{5}$ मन्युर्व्युपाशम° ; K$_{4}$ D$_{3}$ मन्युर्व्यपारम° ; Dc G$_{2}$ स मन्युरगम° ; D$_{1.2}$ T$_{2}$ G$_{3}$ स मन्युरशम° ; G$_{4}$ स मन्युर्व्यशम° ; M शमं मन्युरगा°.

**8** $^{d}$) K$_{1}$ D$_{1.2.4}$ पूर्वं (for पूर्व-). D$_{1.2}$ महात्मना (for पुनः पुनः).

**9** $^{a}$) B Dn D$_{4.6}$ G$_{1}$ M$_{2}$ तदा मदं ; Dc ततो मदं ; D$_{1.2}$ मदमेवं. Ś$_{1}$ K$_{1.2}$ च (for वि-). — $^{c}$) B$_{1.3}$ °भ्यां सह देवाभ्यां.

**10** $^{ab}$) B D (except D$_{3.5}$) T$_{2}$ G$_{2-4}$ transp. सर्वे° and लोके°. T$_{2}$ (before corr.) G$_{2.4}$ ददतां (for व°). T$_{1.2}$ (before corr.) वर. — $^{c}$) G$_{4}$ तदारण्ये (for सहा°). — $^{d}$) B$_{2}$ Dc Dn D$_{1.2.4.6}$ [अ]नुकूलया ; D$_{3}$ [अ]नुरक्तवान्. — After 10, D$_{1.2}$ ins. :

608* अद्यापीह प्रगायन्ति गाथां तस्यैव धीमतः ।
तां श्रुत्वा चक्षुषोर्हानिं नाप्नुवन्तीह मानवाः ।
शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ ।
ये भुक्त्वा संस्मरिष्यन्ति तेषां चक्षुर्न हीयते ।

C. 3. 10406
B. 3. 125. 11
K. 3. 126. 12

तस्यैतद्द्विजसंघुष्टं सरो राजन्प्रकाशते ।
अत्र त्वं सह सोदर्यैः पितॄन्देवांश्च तर्पय ॥ ११
एतद्दृष्ट्वा महीपाल सिकताक्षं च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ।
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ॥ १२
आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
सदाफलः सदास्रोतो मरुतां स्थानमुत्तमम् ।
चैत्याश्चैते बहुशतास्त्रिदशानां युधिष्ठिर ॥ १३
एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते ।
वैखानसाश्च ऋषयो वालखिल्यास्तथैव च ॥ १४
शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च ।
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश ॥ १५
शंतनुश्चात्र कौन्तेय शुनकश्च नराधिप ।
नरनारायणौ चोभौ स्थानं प्राप्ताः सनातनम् ॥ १६
इह नित्यशया देवाः पितरश्च महर्षिभिः ।
आर्चीकपर्वते तेपुस्तान्यजस्व युधिष्ठिर ॥ १७
इह ते वै चरून्प्राश्नन्नृषयश्च विशां पते ।
यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ॥ १८

---

**11** *b*) D1 M दिव्यं (for राजन्). T1 G1 विशां पते (for प्रका°). — After $11^{ab}$, Ś1 K D3 read $13^{abcd}$. — *d*) T1 G1 समर्चय (for च तर्पय). — After 11, T1 ins.:

609* तर्पयाद्य पितॄन्देवान्पयसा पावनेन च ।

**12** *a*) Ś1 K3 T1 एतं; K1 एवं (for एतद्). D1. 2 एतत्पश्य च राजेंद्र. — *b*) K1 B4 Dc सिकताख्यं; K3 शितिकाक्षं; K4 D3 शितिकंठश्च; T1 G M1 सिकताख्यश्च (G1 सिकतस्य). D1. 2 सितिकंठस्य च प्रभो. — *d*) Ś1 K1. 2 कुरुनंदन; D2 (by transp.) दर्शनं कुरु. — *e*) K3. 4 महाभाग; D3 T G महीपाल (T1 G1 च सर्वेषु) (for महाराज). — *f*) T1 G1 महाराज (for सर्वेषु च). Dc D3 [ए]व; T2 G3. 4 [ए]षु (for च). D3 [उ]दकं (for जलं). K1 B Dc स्पृशन्. — After 12, K1. 2 B1 (om. line 3). 2. 3 (om. line 4) D (except D1–3. 5) ins.:

610* स्थाणोर्मन्त्राणि च जपन्सिद्धिं प्राप्स्यसि भारत ।
संधिर्द्वयोर्नरश्रेष्ठ त्रेताया द्वापरस्य च ।
अयं हि दृश्यते पार्थ सर्वपापप्रणाशनः ।
अत्रोपस्पृश चैव त्वं सर्वपापप्रणाशने ।
[(L. 1) B1–3 यास्यसि (for प्राप्स्यसि).]

— After 12, the sequence in D1 is $13^{ef}$–$14^{ab}$, $13^{abcd}$, 610*, $14^{cd}$, 15 etc.

**13** Ś1 K D3 read $13^{abcd}$ after $11^{ab}$. For sequence in D1 cf. v.l. 12; D2 reads $13^{abcd}$ after 14. — *a*) Ś1 K1 T2 G2. 3 M अर्चीक-; B3 D1 G1 आर्चिकः; Dc2 आवीकः. — *e*) Ś1 K1 नित्याश्च; K4 याज्याश्च; D1 चित्याश्च; T1 G1 चित्याश्च; M1 चित्यश्च; M2 चित्यश्च (for चैत्याश्च). B1. 4 Dc चैव; T1 G1. 2. 4 M1 चैता; M2 corrupt (for चैते). Ś1 K1 D5 बहुमतास्; K2 B Dc Dn D4. 6 °विधास्; M1 °शिवास्.

**14** For sequence in D1 cf. v.l. 12. — *a*) K1. 2 D3. 5 S चंद्रसरो; B2 चंद्रमसं. K1–3 D3. 5 राजन्; S नित्यं (for तीर्थं). — *b*) K3 D5 S अर्चयन्त्य(K3 आजह्रुः ऋ-; D5 आजह्नु)षयः सदा. — *c*) K3. 4 B Dc Dn D2. 4. 6 वाल-(K4 B Dc2 °लि)खिल्याः; D1 पुरा केचिद्; M पुराणाश्च (for च ऋषयो). T G वैखानसप्रभृतयो. — *d*) K3. 4 B Dc Dn D2. 4–6 पाव(K3 Dc परा-; K4 D5 पारा)का वायुभोजनाः. — After 14, D2 reads $13^{abcd}$.

**15** Cf. 381* and note thereon. — Ś1 om. $15^{ab}$. — After $15^{ab}$, B2 ins.:

611* आदिसिद्धानि कौन्तेय न विघ्नस्तत्र कारणम् ।

[Cf. Nīl.'s gloss on B. 3. 125. 18, and on B. 3. 82. 38.]

**16** *a*) Dc Dn2. n3 D4. 6 शांतनु°. B Dc Dn D4. 6 राजेंद्र (for कौन्तेय). — *b*) N (except K2 Dc) नराधिपः. — *d*) Dc प्राप्य; D1. 2 M1 प्राप्तौ (for प्राप्ताः).

**17** *a*) S नित्याश्रया. — *b*) K3 D3 M सहर्षिभिः (for म°). — *c*) Ś1 अर्चीकपर्वतो तेषु; K1. 2 अर्चीकपर्वतश्रेष्ठ; K3 D5 आर्चीकपर्वते पुण्ये; K4 D1–3 आ(K4 अ)र्चीकपर्वते रम्ये; T2 G आर्ची(T2 G3 अर्ची-; G1 आर्चि)के पर्वतवरे. — *d*) K1. 4 तान्नमस्य; K2 मान्नमस्य; K3 Dc D3 तान्नमस्व; D1. 2 स्थानमस्ति; T2 G2. 3 ते यजंते; G4 ते युज्यंते (for तान्यजस्व).

**18** *a*) T1 इह कृत्स्नं; G इतरे वै (for इह ते वै). Ś1 K1. 2 Dc (Dc1m as in text) D3 चरवः कार्याः; K3 न वचः कार्याः; K4 D1. 2 तरवः कार्याः; B1 वै चरुः कार्यः; D5 च तपः प्राशन्; M1 वै चरुप्राशाः; M2 वै चरून्प्राशः (for वै चरून्प्राश्नन्). — *b*) Ś1 K Dc D1. 3 अ(K1. 4 D3 आ)तिथेयाः (K3 आतिथ्यं च); B1 आतिथेयः; D5 तिथयश्च; S त्रिदशाश्च (M1 स्थिताश्चैव) (for ऋषयश्च). — After $18^{ab}$, T G read $20^{cd}$–$21^{ab}$. — *c*) K1 Dn3 D6 G2. 4 M2 °स्रोता (for °स्रोताः). — *d*) T G3. 4 कृष्णा. D3 त्विह; T2 G2–4 चैव

यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन ।
सर्वे चात्र गमिष्यामः सुकृशाः सुतपस्विनः ॥ १९
एतत्प्रस्रवणं पुण्यमिन्द्रस्य मनुजाधिप ।
यत्र धाता विधाता च वरुणश्चोर्ध्वमागताः ॥ २०
इह ते न्यवसन्राजन्क्षान्ताः परमधर्मिणः ।
मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः ॥ २१
एषा सा यमुना राजन्राजर्षिगणसेविता ।
नानायज्ञचिता राजन्पुण्या पापभयापहा ॥ २२
अत्र राजा महेष्वासो मान्धातायजत स्वयम् ।
सहदेवश्च कौन्तेय सोमको ददतां वरः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

# १२६

युधिष्ठिर उवाच ।
मान्धाता राजशार्दूलस्त्रिषु लोकेषु विश्रुतः ।
कथं जातो महाब्रह्मन्यौवनाश्वो नृपोत्तमः ।
कथं चैतां परां काष्ठां प्राप्तवानमितद्युतिः ॥ १
यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः ।
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः ॥ २
यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः ।
जन्म चाप्रतिवीर्यस्य कुशलो ह्यसि भाषितुम् ॥ ३

C. 3. 10426
B. 3. 126. 3
K. 3. 127. 4

---

(for चेह). K4 D1 तपोरताः; S तपोधनः (T2 G3 °नाः; G1 °रः).

**19** b) Ś1 K1–3 B D1 °कर्षण. — d) B Dc Dn D4. 6 त्वयैव सह पांडव.

**20** a) K4 B2. 4 D1 प्रश्रवणं. — b) B Dn D4. 6 मनुजेश्वर (B1 पुरुषर्षभ) (for मनुजा°). — cd) S अत्र (for यत्र). D1. 2 अत्र धाता च वरुणो मित्रश्च स्वर्गमागताः.

**21** a) Ś1 निवसन्; B Dn D4. 6 [ऽ]प्यवसन् (for न्यवसन्). — b) K1 क्षतः; K2 क्षुतौ (sic) (for क्षान्ताः). D1 कांक्षंतः सिद्धिमुत्तमां; D2 कांक्षितः सिद्धिमुत्तमं; S कांक्षंतः सर्व(M °ह)धर्मिणः. — c) Ś1 K1. 2 ऋद्धबुद्धीनाम्; K3 D5 मृदुबुद्धीनाम् (for ऋजु°). — d) D2 S शिवः (for शुभः).

**22** b) K3 B Dc1 Dn D4–6 महर्षि° (for राजर्षि°). — c) D1–3 नानायूप°. D1–3 S पुण्या (for राजन्). — d) D1–3 S सर्व- (for पुण्या).

**23** a) T1 अत्रारामे महातेजाः. — Ś1 K1. 2 om. $23^{cd}$. — c) K3 Dn D4. 5 M साहदेवि°; B Dc सह देवै° (Dc2 इह देवि°); D6 (m as in text) साहदैवि°. B2 विक्रांत; D1. 2 M2 राजेंद्र (for कौन्तेय). — d) Dc D1. 2 S (except T1 G1 M1) वदतां (for द°). D1. 4 G2 M2 वर.

Colophon. — *Major parvan:* Ś1 K1. 2 T2 G2–4 M1 आरण्य. — *Sub-parvan:* B4 M1 तीर्थयात्रा (followed by लोमशतीर्थयात्रा and सौकन्य in B4 and only सौकन्य in M1). Ś1 K1. 2 B1–3 Dc Dn D2–4. 6 G2 M2 (all om. sub-parvan name) mention only सौकन्य; K3. 4 D1. 5, likewise, mention only लोमशतीर्थयात्रा, followed by सौकन्य. To सौकन्य, K B1. 3. 4 Dc D1–3. 5 G2 M add समाप्त. — *Adhy. no.* (figures, words or both): Dn1 124; Dn2 125 (as in text); Dn3 S 126 (M2 128); D1 130. — *Śloka no.:* Dn 26; D1 28.

## 126

**1** a) K3 Dc D1 T1 राजशार्दूल. — c) Ś1 K1. 2 महेष्वासो; S (except G4 M2) महान्ब्रह्मन्. — d) D1. 2 M1 युवनाश्वा(D2 °श्व)न्; G4 M2 यु(M2 य)वनाश्वो. B2 T1 G1 महीपतिः (for नृपो°). — e) K1 Dn D2. 4. 6 चैनां; B1. 4 Dc चैव; T G च तां (for चैतां). B1. 4 Dc पदं (for परां). B1 कष्टां; D3 कीर्तिं; S ख्यातिं (for काष्ठां).

**2** K3 om. $2^{cd}$. — After 2, S ins.:

612* सत्यकीर्तेर्हि मान्धातुः कथ्यमानं त्वयानघ ।

**3** a) D3 °पाद° (for °शब्द°). Ś1 K1. 2. 4 स; K3 D3. 5 वै (for च). — b) Ś1 K1. 2 तुल्यः (for तस्य). K3 क्रतुभिर्भूरिदक्षिणैः; D3. 5 लोकेषु परिगीयते. — K3 om. $3^{c}$–$4^{d}$; D5 om. $3^{cd}$.

**4** K3 om. 4 (cf. v.l. 3). — After $4^{ab}$, B1. 4 ins.:

613* यथा चासौ समभवच्चरितं तस्य धीमतः ।

C. 3. 10426
B. 3. 126. 4
K. 3. 127. 5

लोमश उवाच ।
शृणुष्वावहितो राजन्राज्ञस्तस्य महात्मनः ।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ॥ ४
इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ।
सोऽयजत्पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ॥ ५
अश्वमेधसहस्रं च प्राप्य धर्मभृतां वरः ।
अन्यैश्च क्रतुभिर्मुख्यैर्विविधैराप्तदक्षिणैः ॥ ६
अनपत्यस्तु राजर्षिः स महात्मा दृढव्रतः ।
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह ॥ ७
शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मना ।
पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ॥ ८
तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः ।
इष्टिं चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ॥ ९
संभृतो मन्त्रपूतेन वारिणा कलशो महान् ।
तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ।
यत्प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम् ॥ १०
तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः ।
रात्रिजागरणश्रान्ताः सौद्युम्निः समतीत्य तान् ॥ ११
शुष्ककण्ठः पिपासार्तः पानीयार्थी भृशं नृपः ।
तं प्रविश्याश्रमं श्रान्तः पानीयं सोऽभ्ययाचत ॥ १२
तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ।
नाश्रौषीत्कश्चन तदा शकुनेरिव वाशितम् ॥ १३
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत् ॥ १४
स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः ।
निर्वाणमगमद्धीमान्सुसुखी चाभवत्तदा ॥ १५
ततस्ते प्रत्यबुध्यन्त ऋषयः सनराधिपाः ।
निस्तोयं तं च कलशं ददृशुः सर्व एव ते ॥ १६

— $^{c}$) D3 स (for वै). — $^{d}$) D2 M लोकेस्मिन्. Ś1 K1. 2 परिकीर्त्यते. D3 तस्य शक्रसमद्युतेः (= 3$^{b}$).

**5** 5$^{a}$ = 1. 91. 1$^{a}$. — 5$^{d}$ = 1. 144. 16$^{d}$.

**6** $^{b}$) S (except M2) प्राप. Ś1 K1 वर. — $^{c}$) Dc D1. 2 अन्यैश्च विविधैर्यज्ञैर्. — $^{d}$) B Dn D6 अजयत्स्वाप्त°; Dc मुख्यैश्चैवाप्त°; D1. 2 अवाप्तवर°.

**7** $^{a}$) Ś1 K Dc D1–3. 5 स (K1 सु-); B1. 3. 4 च (for तु). — $^{b}$) Ś1 K Dc D1–3. 5 सु- (for स). B Dn D4. 6 महाव्रतः; Dc2 धृत° (for दृढ°). — $^{d}$) K1 T1 वने (for वन-).

**8** Ś1 om. 8$^{a}$. — $^{b}$) B1. 4 Dn D4–6 M2 आत्मवान् (for आत्मना). — After 8$^{ab}$, K2 B Dc Dn D3 (marg.). 4. 6 ins.:

614* स कदाचिन्नृपो राजन्नुपवासेन दुःखितः ।

— $^{c}$) D1. 2 °शुष्ककंठः सन्; T G पिपासुः शुष्क° (T1 खिन्न°).

**9** $^{b}$) Ś1 K D3. 5 भृगुरप्यथ. — $^{c}$) Ś1 सौद्युम्नो; K1 °म्नीं; K4 °म्नैर्; M2 °म्नं. — $^{d}$) B3 महर्षेः.

**10** $^{f}$) G3. 4 शक्रसमद्युतिं. — After 10, S ins.:

615* तद्वारि विधिवद्राजन्यस्मिन्नासीत्सुसंस्कृतम् ।
[T1 रात्रौ पिहितं; G4 वारि विहितं (for वारि विधिवद्).]

**11** $^{c}$) K1. 2 रात्रि (K2 °त्रि-) जागरणं श्रांतः; K3. 4 Dc D2. 3. 5 M1 रात्रिजागरणश्रांतान्; B4 T1 G2 °श्रांतः; Dn D4 G1. 4 °णाच्छ्रांतान्; D1 रात्रौ जागरणश्रांताः; D2 रात्रौ राजन्सुविश्रांताः; D6 रात्रिजागरणाच्छ्रांताः. — $^{d}$) Dc समतीतवान्; T1 स तु पार्थिव; T2 G1–3 स च पार्थिव; M1 समुपेत्य तान् (for समतीत्य तान्). K3. 4 D3. 5 युवनाश्वोभ्यतीत्य तान्; D1. 2 सुषुपुः स(D2 सं)हिता नृप.

**12** $^{a}$) D1. 2 ततो राजन् (for पिपा°). — $^{b}$) Some MSS. पानीयार्थं. — $^{c}$) K4 D3 सं-; D1. 2 स (for तं). B2–4 Dc Dn D4. 6 शांतः (for श्रान्तः). — $^{d}$) Ś1 K1. 2. 4 B1. 4 Dc D1. 2 पानीयं सम(B4 °यमन्व)याचत; K3 D5 वार्ययाचत पार्थिव.

**13** $^{ab}$) K3. 4 Dc transp. शुष्केण and कण्ठेन. — $^{c}$) K3. 4 D3 गिरं; M2 ततः (for तदा). D1. 2 नाश्रौषन्मुनयो राजन्. — $^{d}$) K2. 4 D2 वासितं; B2 Dc D4–6 वासतः; B4 भाषतः; Dn M2 वाशतः; D1. 3 भाषितं (for वाशितम्).

**14** $^{b}$) K3 वारिपूर्णं; D1. 2 तोय°. — $^{d}$) Ś1 जलं (for पीत्वा). Ś1 पीत्वा; K1. 2 चैनं; T1 चांगो; T2 G2–4 चापो (for चाम्भो). B1. 3 Dc Dn2 व्यपासृजत्; T1 [S]प्यवासृ°; T2 G3 ह्यवासृ°; G2. 4 [S]भ्यवासृ°.

**15** $^{a}$) Ś1 K D3. 5 पीत्वा तु (for स पीत्वा). D3 वारि (for तोयं). — $^{c}$) D1. 2 परं निर्वाणमगमत्. — $^{d}$) K3. 4 B4 स सुखी; M2 स सखी (for सुसुखी). D1. 2 सुखी चैवाभवत्तदा.

**16** $^{b}$) K1. 2 G3 स नराधिपः; D3 °धिपं; G2 M1 ते नराधिप. B2–4 Dc Dn D4. 6 मुनयः सतपोधनाः. — $^{c}$) D1. 2 T2 G4 तत्र (T2 G4 °त्र) कलशं; T1 तत्र ददृशुः; G1

कस्य कर्मेदमिति च पर्यपृच्छन्समागताः ।
युवनाश्वो मयेत्येव सत्यं समभिपद्यत ॥ १७
न युक्तमिति तं प्राह भगवान्भार्गवस्तदा ।
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः ॥ १८
मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षे महाबलपराक्रम ॥ १९
महाबलो महावीर्यस्तपोबलसमन्वितः ।
यः शक्रमपि वीर्येण गमयेद्यमसादनम् ॥ २०
अनेन विधिना राजन्मयैतदुपपादितम् ।
अब्भक्षणं त्वया राजन्नयुक्तं कृतमद्य वै ॥ २१
न त्वद्य शक्यमस्माभिरेतत्कर्तुमतोऽन्यथा ।
नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि ॥ २२
पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः ।
ताभ्यस्त्वमात्मना पुत्रमेवंवीर्यं जनिष्यसि ॥ २३
विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम् ।
यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ॥ २४
ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इवापरः ॥ २५
निश्चक्राम महातेजा न च तं मृत्युराविशत् ।
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् ॥ २६
ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ।
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे ॥ २७
मामयं धास्यतीत्येवं परिभाष्टः स वज्रिणा ।

C. 3. 10453
B. 3. 126. 30
K. 3. 127. 31

---

कलशं तत्र (for तं च कलशं). — d) T1 सर्वे एव महामते.

**17** a) K2 B2–4 Dn D4–6 ते (for च). — b) D1. 2 T2 G2–4 समाहिताः. — c) B Dc Dn D3. 4 6 G2 मम ; D1. 2 [अ]हम् (for मया). K2 B D (except D3) T G3. 4 [ए]वं (for [ए]व). — d) T1 G1 सर्वं (for सत्यं).

**18** b) Ś1 K D3. 5 M1 वै (M1 स) भृगुस् (for भार्गवस्). — c) K3 सुतार्थे; D1 सुतीर्थं (for सुतार्थं). Ś1 K1. 2 संभृता (for स्थापिता). Dc च (for हि). — d) Ś1 K1. 2 संयुताः (for °भृताः).

**19** a) Ś1 K1 यत्रा° (for ह्यत्रा°). — b) K1. 2 युक्ताय (for आस्थाय). Ś1 K Dc D1–3. 5 केवलं (for दारुणम्). — c) T2 G1–3 अस्य (for तव). — d) K1. 2 Dn3 T G °क्रमः ; D3 °क्रमं.

**20** a) D1. 2 महाबाहुर् ; T G °कायो (G4 °वीर्यो) ; M1 °बाहो (for महाबलो). T2 G3 महायोगस् ; G4 °कायस् ; M2 तपोवीर्यस् (for महावीर्यस्). — b) D1. 2 सुतो बल° ; S तपोयोग°. — c) Ś1 Dc अति- (for अपि).

**21** c) K2 B4 Dc D3–6 अब्भक्षणात्. D1. 2 आपः पीतास्त्वया राजन्. — d) K3 D5 अन्यथैवोपपादितं.

**22** T2 om. $22^{a}$–$23^{d}$. — ab) Ś1 K Dc D3. 5 transp. शक्यं and कर्तुं. B1 एवं (for एतत्). T1 G1 कर्म ततो (for कर्तुमतो). — c) D1 किं तु ; D2 किं नु (for नूनं). K1 चैव कृतं ; D3 कर्म° ; T1 M2 देव° (for दैव°). D1. 2 मन्ये (for ह्येतद्). — d) K1 एव ; S (G3 om.) एतत् (for एवं).

**23** T2 om. $23^{abcd}$ (cf. v.l. 22) ; K4 om. 23. — a) Ś1 K (K4 om.) D3. 5 यत् (for याः). — c) Ś1 K1. 3 D3 महावीर्यं. — d) K1 मत्तपोवीर्यसंमताः ; D1. 2 S (T2 om.) न युक्तं कृतमद्य वै. — e) Dc D1 ताभिस् ; D3 तेभ्यस् ; G2. 3 M तस्मात् (for ताभ्यस्). — Ś1 om. (hapl.) $23^{f}$–$24^{c}$. — f) D1. 2 अति° (for एवं°). B Dc Dn D4. 6 ईदृशं जनयिष्यसि.

**24** Ś1 om. $24^{abc}$ (cf. v.l. 23). — a) K Dc D1–3. 5 चात्र ; S तात (for तत्र). — c) K3. 4 ततः ; Dc1 यस्य ; Dc2 यस्त्वं ; M यदा (for यथा). — After 24, K2 B Dc Dn D4. 6 ins. :

616* गर्भधारणजं वापि न खेदं समवाप्स्यसि ।;

while D5 ins. :

617* इति श्रुत्वा वचस्तस्य राजा त्विति तथाब्रवीत् ।;

and, finally, S ins. :

618* न च प्राणैर्महाराज वियोगस्ते भविष्यति ।

[M1 तदा ; M2 तथा (for न च).]

**25** c) K3. 4 B1. 3 D3 T2 G1–3 वामपार्श्वं ; D1. 2 वामं कुक्षिं. — d) M2 स्थितः (for सुतः). K1 सद्य (for सूर्य). B Dn D4. 6 स्थितः (for [अ]परः).

**27** D2 om. $27^{ab}$ (along with $26^{bcd}$). — a) Ś1 तस्य (for ततः). — After $27^{ab}$, K1. 2 B2–4 Dc Dn D4. 6 ins. :

619* ततो देवा महेन्द्रं तमपृच्छन्धास्यतीति किम् ।

[K1. 2 Dn1. n2 Dc1 कं ; Dc2 के (for किम्).]

— T1 om. $27^{c}$–$29^{b}$. — c) Ś1 कृतोस्या° ; D1. 2 च तस्या° (for ततोऽस्या°). — d) D1. 2 शिशोः (for शक्रः). T2

C. 3. 10453
B. 3. 126. 31
K. 3. 127. 31

मान्धातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ॥ २८
प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा ।
अवर्धत महीपाल किष्कूणां च त्रयोदश ॥ २९
वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम् ।
उपतस्थुर्महाराज ध्यातमात्राणि सर्वशः ॥ ३०
धनुराजगवं नाम शराः शृङ्गोद्भवाश्च ये ।
अभेद्यं कवचं चैव सद्यस्तमुपसंश्रयन् ॥ ३१
सोऽभिषिक्तो मघवता स्वयं शक्रेण भारत ।
धर्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः ॥ ३२
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥ ३३
तस्येयं वसुसंपूर्णा वसुधा वसुधाधिप ।
तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ॥ ३४
चितचैत्यो महातेजा धर्मं प्राप्य च पुष्कलम् ।
शक्रस्यार्धासनं राजँल्लब्धवानमितद्युतिः ॥ ३५
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
निर्जिता शासनादेव सरत्नाकरपत्तना ॥ ३६
तस्य चित्यैर्महाराज क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत्किंचिदनावृतम् ॥ ३७
तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ॥ ३८
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना ।

---

G1–3 स्वामभिसंदधात्; M समभिसंदधात्.

**28** T1 om. 28 (cf. v.l. 27). — a) G2 M [ए]व (for [ए]वं). — b) K3. 4 D1–3 परिभाष्य स; B Dc Dn D4. 6 भाषिते चैव; T2 G भाषितं चैव; D5 परिष्वज्य च (for परिभाष्यः स as in Ś1 K1. 2). D1–3 वज्रभृत् (for वज्रिणा). M परितुष्ट इवाभवत्.

**29** T1 om. 29ab (cf. v.l. 27). — b) K1. 2 Dc2 आसाद्य स; D5 प्रस्थाप्य स (*sup. lin.* समासाद्य); T2 G3 आस्वाद्यास्य (for आस्वाद्य स). — c) B2–4 Dc Dn D4. 6 G4 M2 महातेजाः; D3 T2 G3 महीपालः. — d) B Dc Dn D4. 6 किष्कून्राजन्; T2 G3 °णां स; G1 शिशुनाशु; M किष्कूणां तु (for °णां च). Ś1 K D1–3. 5 किष्कूनथ चतुर्दश.

**30** a) T1 सधनुर्वेदं; M2 तु धनुर्वेदः. — b) T2 G2–4 सर्वाण्य° (for दिव्यान्य°). — c) Ś1 K1. 2 M महात्मानं; T2 G3 महाराजं. — d) K3 ध्यातं मात्राणि; B2 Dn D4. 6 T2 G3 ध्यातमात्रस्य; Dc ध्यानमात्रस्य; T1 जातमात्रे च.

**31** a) D1. 2 चाजगवं (for आज°). B Dc Dn D4. 6 आजगवं नाम धनुः. — c) D3. 6 G1 M1 अभेद्य-. D1. 2 चैवं (for चैव). — d) Ś1 K B Dc Dn D3–6 उपशिश्रियुः; T1 उपसंश्रयात्; G2 M1 समुपाश्रयन् (for उपसंश्रयन्). D1. 2 उपतस्थे नराधिप.

**32** a) K3 S (except G4 M2) भग° (for मघ°); cf. v.l. 3. 51. 14, 18. — c) K4 D3 कर्मणा (for धर्मेण). S [ए]वाजय° (M2 [अ]पालय°) (for व्यजय°). — d) D1. 2 च क्रमैः (for वि°).

**33** b) Ś1 K1. 2 प्रवर्तत. — c) Ś1 K1. 2 राज्यं च; K3. 4 D1. 3. 5 सर्वाणि (for राजर्षिं).

**34** a) K4 [ए]षा; T2 G3. 4 [ए]व (for [इ]यं). — c) K1. 2 बहुभिर् (for विविधैर्). — d) Ś1 K1. 2 विविधैः (for बहुभिः). Ś1 K1. 2 स्वाप्त°; K3 D1. 3 T G1–3 चाप्त°; K4 G4 भूरि° (for स्वाप्त°).

**35** a) K1 चितचित्यो; K2 D3. 5 S कृतकृत्यो (M2 चिताश्रित्यो); K3. 4 चैतनित्यो; B4 चित्रचित्यो; D1. 2 विनिवृत्तो (for चित°). — b) K3. 4 D5 सु-; D1. 2 [ए]व; D3 स (for च). B Dc Dn D4. 6 धर्मान्प्राप्य च पुष्कलान्. — c) Ś1 K1 शक्रस्य शासनं; K3 D5 शक्रस्याराधनं. Ś1 K D3. 5 चैव; D1. 2 राजा (for राजन्). — d) Ś1 K1. 2 G4 प्राप्त° (for लब्ध°).

**36** a) B Dn D4. 6 एकाहात् (for °ह्ना). K3 D5 एकाहेन मही तेन. — b) M2 वै तदा (for धीमता). D1. 2 वीर्येणामितबुद्धिना. — c) B2 Dn D4. 6 विजिता (for निर्जिता). Ś1 K2 राजन्; K1 तेन; D1. 2 तस्य (for एव). — d) K2 M °पट्टना; K3 D5 सवनाकरपत्तना; D1. 2 स्थिताः सर्वे महीक्षितः.

**37** Dc2 om. 37a–38a. — a) K1. 2 B Dc1 Dn D1–4. 6 चैत्यैर्; T2 G3 चित्रैर् (for चित्यैर्). K4 ब्राह्मणेभ्यो महाराज. — c) D1. 2 व्याप्ता मही महाराज. — d) T1 काचिद् (for किंचिद्). B2 अनामयं; T G1–3 M असंवृता (M °तं); G4 अनावृता (for अनावृतम्).

**38** Dc2 om. 38a (cf. v.l. 37). — a) B1 ततः (for तेन). Dc1 [अ]र्बुद° (for पद्म°). — c) B Dn D1. 2. 4. 6 ब्राह्मणानां.

**39** b) Ś1 K1. 2 अनावृष्टौ. T G नराधिप (for महा°). — c) Ś1 वृष्ट्यं; B4 °ष्टिं (for °ष्टं). K3 T2 G3 वृष्टिं सस्य-

वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ॥ ३९
तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्जन्निव महामेघः प्रमथ्य निहतः शरैः ॥ ४०
प्रजाश्चतुर्विधास्तेन जिता राजन्महात्मना ।
तेनात्मतपसा लोकाः स्थापिताश्चापि तेजसा ॥ ४१
तस्यैतद्देवयजनं स्थानमादित्यवर्चसः ।
पश्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ॥ ४२
एतत्ते सर्वमाख्यातं मान्धातुश्चरितं महत् ।
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

# १२७

युधिष्ठिर उवाच ।
कथंवीर्यः स राजाभूत्सोमको वदतां वर ।
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः ॥ १
लोमश उवाच ।
युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः ।
तस्य भार्याशतं राजन्सदृशीनामभूत्तदा ॥ २
स वै यत्नेन महता तासु पुत्रं महीपतिः ।
कंचिन्नासादयामास कालेन महता अपि ॥ ३

C. 3. 10472
B. 3. 127. 3
K. 3. 128. 3

---

समृध्यर्थं; B2 वृष्टिं समाधिवृ°; Dc वृष्टिसस्याभिवृ°; D2 इष्टं च सस्यवृ°; G1. 2 M वृष्टं सस्य(G1 सर्वं)समृ°. — d T1 G1 वृत्रवैरिणः (for वज्र°).

**40** a) Ś1 K1. 2. 4 D3 तेनासौ (K4 D3 °न वै) तुमुले युद्धे. — b) K1. 2 गां(K1 गं)धर्वाधि°. — d) Ś1 K1 निशितैः (for निहतः).

**41** a) D1. 2 चापि (for तेन). — b) Ś1 K1. 3. 4 D5 कृताः; K2 B3 Dn D4. 6 त्राताः (for जिताः). K4 तेन (for राजन्). B1. 3 Dn D4–6 कृतात्मना (for महा°). D1–3 पालिता सुमहात्मना. — c) Ś1 K2. 4 D3 T2 G2–4 तेन स्व तपसा; K3 स्वेनापि तपसा; B4 तेनार्थं°; D5 स्वेनाति°; T1 तेनार्धं°; G1 तेनात्य°. — d) Ś1 K1. 2 B Dn D4. 6 तापिताश् (for स्थापिताश्). K3 D5 च महौजसा; K4 D3 चामितौजसा; B Dc Dn D4. 6 M1 चातितेजसा; T G2. 3 M2 चात्मतेजसा.

**42** D1 om. 42ab. — b) B2 D1 S आदित्यतेजसः (G1 °सं). — c) Dn D4. 6 यस्य; T1 G1 तस्य; T2 G2. 4 पुण्यं (for पश्य). Ś1 K1. 2 पुण्यतमा देशाः. — d) Ś1 K1 मध्यगाः; D1–3 धीमतः. — After 42, T G ins.:

620* तथा त्वमपि राजेन्द्र मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्षन्स्वर्गलोकमवाप्स्यसि ।

**43** After 43, K1 B Dc Dn D3 (marg. *sec. m.*). 4. 6 S ins.:

621* वैशंपायन उवाच ।
एवमुक्तः स कौन्तेयो लोमशेन महर्षिणा ।
पप्रच्छानन्तरं भूयः सोमकं प्रति भारत ।

[(L. 1) S तु (for स). Dc राजेंद्रो (for कौन्तेयो). B2. 3 D3 S महात्मना (for मह°).]

Colophon om. in B4. — *Major parvan:* Ś1 K1. 2 Dn2 T G2–4 M1 आरण्य. — *Sub-parvan:* B2 तीर्थयात्रा, followed by लोमशतीर्थयात्रा. K4 D5 (both om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* Ś1 K1. 2 मांधातृकथा; K3. 4 B1–3 Dn D4–6 मांधातो(K4 D6 °तू°; B1–3 D5 °त्रु°; D4 °तु)पाख्यानं; Dc मांधातृशक्रोपाख्यानं; D1 मांधातुरुपाख्यानसमाप्तिः; D2. 3 मांधातुराख्यानं; M2 मांधातृचरितं. — *Adhy. no.* (figures, words or both): Dn1 125; Dn2 126 (as in text); Dn3 S 127 (M2 129); D1 131. — *Śloka no.:* Dn 47; D1 44.

## 127

**1** b) K1. 3 D3. 5 T2 G2. 3 M ददतां (for व°). Ś1 K1–3 Dc D1–3. 5. 6 S वरः (for वर).

**3** c) K1 Dc D1. 2. 4 किंचिन्; K3 कष्टान् (for कंचिन्). — d) To avoid the hiatus, Ś1 तयोः; K1. 2 तथा; K3. 4 D3. 5 स्वपि; B1 T G M1 [अ]पि च; B2 Dc Dn D4. 6 M2 ह्यपि (for अपि).

**4** b) N (except K2 Dc D1) घट° (for यत°); cf. 14c. — c) D3 T G तस्य (T1 G1 राजन्); M तस्यां

C. 3. 10473
B. 3. 127. 4
K. 3. 128. 4

कदाचित्तस्य वृद्धस्य यतमानस्य यत्नतः ।
जन्तुर्नाम सुतस्तस्मिन्स्त्रीशते समजायत ॥ ४
तं जातं मातरः सर्वाः परिवार्य समासते ।
सततं पृष्ठतः कृत्वा कामभोगान्विशां पते ॥ ५
ततः पिपीलिका जन्तुं कदाचिददशत्स्फिजि ।
स दष्टो व्यनदद्राजंस्तेन दुःखेन बालकः ॥ ६
ततस्ता मातरः सर्वाः प्राक्रोशन्भृशदुःखिताः ।
परिवार्य जन्तुं सहिताः स शब्दस्तुमुलोऽभवत् ॥ ७
तमार्तनादं सहसा शुश्राव स महीपतिः ।
अमात्यपरिषन्मध्ये उपविष्टः सहर्त्विजैः ॥ ८
ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ॥ ९
त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिंदमः ॥ १०
सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरान्नृपः ।
ऋत्विजैः सहितो राजन्सहामात्य उपाविशत् ॥ ११

सोमक उवाच ।

धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत् ।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता ॥ १२
इदं भार्याशतं ब्रह्मन्परीक्ष्योपचितं प्रभो ।
पुत्रार्थिना मया वोढं न चासां विद्यते प्रजा ॥ १३
एकः कथंचिदुत्पन्नः पुत्रो जन्तुरयं मम ।
यतमानस्य सर्वासु किं नु दुःखमतः परम् ॥ १४
वयश्च समतीतं मे सभार्यस्य द्विजोत्तम ।
आसां प्राणाः समायत्ता मम चात्रैकपुत्रके ॥ १५
स्यान्नु कर्म तथा युक्तं येन पुत्रशतं भवेत् ।

---

(for तस्मिन्). — d) S (except M2) ज्येष्ठायां (for स्त्रीशते).

**5** b) K3. 4 D3. 5 [उ]पतस्थिरे; D1. 2 समासत; T1 समाधिरे; T2 G समासिरे. — c) Ś1 K2. 3 D1–3 सापत्नं; K1. 4 D5 सापत्न्यं (for सततं). — After 5, D1. 2 ins.:

622* ममायमिति मन्वाना मनोभिः पुत्रमौरसम् ।

**6** a) Ś1 K D1–3 पिपीलि(Ś1 K1. 2 °ल)को. — b) K4 B1 D1–3 स्फिजे; Dc °चिं; Dn D4. 6 °चि; M1 °जौ (for °जि). T1 कदाचिद्दंशत त्वचि. — c) Ś1 व्यानदद्; T1 G2 ह्यरुदद्; T2 G2. 3 ह्यनदद्; G4 [ऽ]भ्यनदद्. Dn D4. 6 नादं (for राजन्).

**7** a) D1. 2 मातरस्तास्ततः सर्वाः. — c) Hypermetric! B Dc Dn D4. 6 प्रवार्य; G1 परीतो (for परिवार्य). Ś1 K1. 2 बालं तं; Dn सहसा (for सहिताः). K4 D3 परिवार्य तु (D3 च) तं बालं; D1 परिवार्य तं सहिताः. — d) A few MSS. तुमलः.

**8** a) Ś1 K1. 2 °शब्दं (for °नादं). Ś1 K1. 2 तुमुलं (for सहसा). — c) B Dn D4. 6 अमात्यपर्षदो; D5 आगत्य परिषन्°. K4 G2 M मध्य (for मध्ये). — d) Ś1 K1. 2 ह्युपविष्टः. K3. 4 D3. 5 T1 G1 M2 सहर्त्विजः; B Dc Dn D4. 6 °जाः; D1. 2 G2 सऋत्विजः.

**9** d) T2 G3. 4 च तं सुतं (for सुतं प्रति).

**10** a) T1 स संभ्रमात् (for त्वर°). T G3 सहोत्थाय (for स चो°). — c) Ś1 K1. 2 तत्र (for पुत्रम्). — d) B3 Dn2. n3 D4. 6 अरिंदम; Dc अरिंदमाः.

**11** b) Ś1 K1–3 नृप; K4 D1–3 S ततः (for नृपः). — c) Ś1 ऋत्विजः; K B Dn D3–6 T G M2 ऋत्विजा (K3 ऋषिभिः); Dc D1. 2 M1 ऋत्विग्भिः (for °जैः). Ś1 K D1–3. 5 M1 राजा; B2 ततः (for राजन्). — *N. B.* The reading ऋत्विजैः was found in some MSS. collated, but not included in the crit. app. — d) Ś1 K D3. 5 सभायां (K3 D5 सामात्यः) समुपाविशत्.

**12** Ś1 लोमश उ°; G4 राजा. — a) D1. 2 धिग्धिगस्तु; T2 G3. 4 धिगस्तु हि (for धिगस्त्विह). T G1. 3. 4 [ए]कपुत्रत्वाद्. — b) M2 अपुत्रं वै (for अपुत्रत्वं). — c) D6 नित्यांतरत्वाद्; M1 अनित्यत्वाच्च. S (except M2) मर्त्यानां (for भूता°).

**13** b) Dc Dn D4. 6 सदृशं; G2. 4 [उ]पच्चितिं. D1. 2 M2 मया (for प्रभो). Ś1 K D3. 5 सदृशीनां यतव्रत (D3 °तः; D5 °तं); G1 अनपत्योचितं मया. — D1. 2 om. $13^c$–$14^d$. — c) K1 होढुं; K3 होहं; T1 चाथ; T3 G2–4 M1 चोढं; M2 वोढा (for वोढं). — d) B Dn D4. 6 तासां (for चा°).

**14** D1. 2 om. 14 (cf. v.l. 13). — c) B2–4 Dc Dn D4. 6 यतमानासु (for °नस्य). — d) =1. 9. $3^d$: 4. 18. $36^d$. Ś1 K1. 2 दुःखतरं नृप; K3. 4 D3. 5 M °तरं (D5 °करं) ततः.

**15** b) Dc द्विजोत्तमाः; D1. 2 द्विजर्षभ; G2 नरोत्तम.

महता लघुना वापि कर्मणा दुष्करेण वा ॥ १६

ऋत्विगुवाच ।

अस्ति वै तादृशं कर्म येन पुत्रशतं भवेत् ।
यदि शक्नोषि तत्कर्तुमथ वक्ष्यामि सोमक ॥ १७

सोमक उवाच ।

कार्यं वा यदि वाकार्यं येन पुत्रशतं भवेत् ।
कृतमेव हि तद्विद्धि भगवान्प्रब्रवीतु मे ॥ १८

ऋत्विगुवाच ।

यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥ १९
वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्ताः सुमहावीर्याञ्जनयिष्यन्ति ते सुतान् ॥ २०
तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः ।
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

# १२८

सोमक उवाच ।

ब्रह्मन्यद्यद्यथा कार्यं तत्तत्कुरु तथा तथा ।
पुत्रकामतया सर्वं करिष्यामि वचस्तव ॥ १

लोमश उवाच ।

ततः स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु बलात्पुत्रमपाकर्षुः कृपान्विताः ।

C. 3. 10492
B. 3. 128. 2
K. 3. 129 2

— $^d$) D5 चैव; S [अ]स्मिन् (for चात्र).

**16** $^a$) Ś1 K B1m. 2. 3 Dc Dn D2. 4–6 T2 G1. 3. 4 स्यात्तु; D3 तस्मात् (for स्यात्तु). D3 समा-; T1 कथं; G1 क्रिया- (for तथा).

**17** $^a$) B Dc Dn1 D6 T1 G1. 3. 4 चैतादृशं; T2 चेत्ता° (for वै ता°). — M2 om. (hapl.) 17$^c$–18$^b$. — After 17, D5 ins.:

623* क्रियतामविचारेण ततः प्राप्स्यसि पुत्रकान् ।

**18** M2 om. 18$^{ab}$ (cf. v.l. 17). — $^c$) K4 D5 M2 [इ]ह; B Dc Dn D4. 6 T G M1 [इ]ति (for हि). D1. 2 कृतमेतद्धि भगवन्. — $^d$) Ś1 K B1 Dc D3. 5 तद्भवान्; T2 G3 M भगवन् (for भगवान्). M प्रब्रवीहि. D1. 2 तदिदानीं ब्रवीहि मे.

**19** $^b$) Ś1 K2 D1. 2 विहिते; G4 च चिते (for वितते). — $^c$) T1 राजन्; T2 G धीमन् (for श्रीमद्). — $^d$) M2 उत्तिष्ठेद° (for भविष्यत्य°). K3. 4 Dc D5 वै (for ते).

**20** $^a$) Ś1 K1. 2 वसायां. — $^b$) Ś1 K1–3 आघ्रंतु; K4 D3 M2 आघ्रांतु (for आघ्राय). — $^c$) T1 तान् (for ताः). Ś1 सुमहावीरान्; K1. 3 D1. 2 सुमहावीर्या. — $^d$) Ś1 तान् (for ते). D1. 2 भविष्यंति सुताः प्रभो.

**21** $^b$) G1 जीविता स नरात्मजः. — $^c$) K3 D1. 2. 5 S लक्षणं (for उत्तरे). — $^d$) K3 सव्ये; D2 M1 वामे; D5 मध्ये; T G M2 वाम- (for लक्ष्म).

Colophon om. in K3 D5. G4 broken. — *Major parvan:* Ś1 K1 T2 G2. 3 M1 आरण्य. — *Sub-parvan:* D3 तीर्थयात्रा. Ś1 K1. 2 (all om. sub-parvan name) mention only सोमक; K4 D1, likewise, only लोमशतीर्थयात्रा, followed by जन्तूपाख्यान; and B1. 2. 4 Dc Dn D2. 4. 6 M2, only जन्तूपाख्यान. — *Adhy. name:* B4 ऋत्विग्वाक्यं. — *Adhy. no.* (figures, words or both): K1 28 (= 128); Dn1 126; Dn2 127 (as in text); Dn3 S (G4 broken) 128 (M2 130); D1 132. — *Śloka no.:* Dn 21; D1 20.

## 128

**1** $^a$) Ś1 K1 D1 अद्य यथा; B1 यच्च यथा; B3 यथा यथा (for यद्यद्यथा). Dc कामं; D1. 2 कर्म (for कार्यं). — $^b$) B Dc Dn D3–6 तत्कुरुष्व (for तत्तत्कुरु). T2 G3. 4 यथा (for the *first* तथा). D1. 2 तत्कर्तव्यं यथाक्रमं. — $^c$) K4 Dc D1. 2 °कामनया. — $^d$) Ś1 K1. 2. 4 D3 चिकीर्षामि (for करि°).

**2** After the ref., G1 ins.:

624* स सोमकवचः श्रुत्वा ब्राह्मणो वेदपारगः ।

— $^a$) D1. 2 S (except G1) स याजयामास तदा (M2 ततः). — $^c$) T G2–4 तदा (for बलात्). — $^d$) Ś1 K1. 2 D1. 2

C. 3. 10493
B. 3. 128. 3
K. 3. 129. 3

हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमन्विताः ॥ २
तं मातरः प्रत्यकर्षन्गृहीत्वा दक्षिणे करे ।
सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ॥ ३
कुररीणामिवार्तानामपाकृष्य तु तं सुतम् ।
विशस्य चैनं विधिना वपामस्य जुहाव सः ॥ ४
वपायां हूयमानायां गन्धमाघ्राय मातरः ।
आर्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन ।
सर्वाश्च गर्भानलभंस्ततस्ताः पार्थिवाङ्गनाः ॥ ५
ततो दशसु मासेषु सोमकस्य विशां पते ।
जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ॥ ६
जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव भारत ।
स तासामिष्ट एवासीन्न तथान्ये निजाः सुताः ॥ ७
तच्च लक्षणमस्यासीत्सौवर्णं पार्श्व उत्तरे ।
तस्मिन्पुत्रशते चाग्र्यः स बभूव गुणैर्युतः ॥ ८
ततः स लोकमगमत्सोमकस्य गुरुः परम् ।
अथ काले व्यतीते तु सोमकोऽप्यगमत्परम् ॥ ९
अथ तं नरके घोरे पच्यमानं ददर्श सः ।
तमपृच्छत्किमर्थं त्वं नरके पच्यसे द्विज ॥ १०
तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशम् ।
त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् ॥ ११
एतच्छ्रुत्वा स राजर्षिर्धर्मराजानमब्रवीत् ।
अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः ।
मत्कृते हि महाभागः पच्यते नरकाग्निना ॥ १२

धर्म उवाच ।

नान्यः कर्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि ददतां वर ॥ १३

---

समाकर्षन्; K$_{3.4}$ D$_{3.5}$ M अपाकर्षन्; Dn$_3$ D$_6$ T G$_3$ °कार्षुः (for °कर्षुः). — $^{e}$) K$_{1.2}$ G$_1$ हतास्मि (for हताः स्म). Ś$_1$ K$_{1.2}$ M$_2$ [इ]ति वाचंत्यः; K$_{3.4}$ B D$_{1.3.4}$ [इ]ति वासंत्यः; Dc [अ]भिभाषंत्यः; G$_{2.4}$ [इ]ति वाश्यंत (for [इ]ति वाशन्त्यः). — $^{f}$) T$_1$ G$_2$ तीव्रकोप-. Ś$_1$ K$_{1.2.4}$ B$_{1.3.4}$ Dn D$_{3.4}$ -समाहताः; K$_3$ B$_2$ D$_{1.2}$ -समाहिताः. Dc तीव्रशोकाः सुविह्वलाः.

**3** $^{a}$) Ś$_1$ K$_{1.2}$ प्रकर्षति; K$_{3.4}$ D$_5$ पर्यकर्षन्; Dc पर्यपृच्छत्; D$_3$ (hypermetric) कर्षयंति स्म (for प्रत्यकर्षन्). B Dn D$_{4.6}$ रुदंत्यः करुणं वा(B चा)पि. — T$_1$ om. $3^{c}$–$5^{b}$. — $^{d}$) Ś$_1$ K$_{1.2}$ [ऽ]पि प्रकर्षति; K$_3$ D$_{3.5}$ व्यपकर्षत; K$_4$ [ऽ]पि व्यकर्षत; Dc [ऽ]पि व्यकर्षयत् (for ऽपि स्म कर्षति).

**4** T$_1$ om. 4 (cf. v.l. 3). — $^{b}$) Ś$_1$ K$_{1.2}$ अपाकर्षत्; B Dn D$_{1.2.4}$ समाकृष्य (for अपाकृष्य). Ś$_1$ K Dc D$_{3.5}$ सुतं तदा; D$_{1.2}$ S (T$_1$ om.) ततः सुतं (for तु तं सुतम्). — $^{c}$) K$_1$ याजकश्च; K$_2$ याजकैश्च (for विशस्य). Ś$_1$ K$_{1.2}$ चैव; D$_4$ चैतं (for चैनं). B$_4$ Dn विधिवद् (for °ना)

**5** T$_1$ om. $5^{ab}$ (cf. v.l. 3). — $^{a}$) Ś$_1$ K$_{1.2}$ वसा° (for वपा°). S (T$_1$ om.) जंतोर्वपायां हूयंत्यां. — $^{b}$) K$_{3.4}$ B$_1$ D$_{1–3.5}$ धूमम् (for गन्धम्). Ś$_1$ K$_{1.2}$ आदाय (for आघ्राय). — $^{f}$) B D (except D$_{1–3.5}$) परमांगनाः (for पार्थि°).

**7** $^{a}$) D$_{1.2}$ transp. ज्येष्ठः and समभवत्. — $^{b}$) D$_{1.2}$ जनन्यां चैव (for जनि°). N (except K$_2$ Dc) पार्थिव (for भारत). — $^{d}$) K$_3$ Dn D$_{4–6}$ T$_1$ G$_{2.4}$ M ते; G$_1$ मे (for [अ]न्ये).

**8** $^{a}$) B$_2$ D$_3$ T$_1$ G$_1$ M$_2$ तस्य (for तच्च). Ś$_1$ K$_{1.3}$ B$_1$ T$_1$ एव; B$_{2.3}$ D$_{3.6}$ G$_1$ M$_2$ अपि (for अस्य). D$_{1.2}$ तदेव चास्य सौवर्णं. — $^{b}$) D$_{1.2}$ लक्षणं (for सौवर्णं). — $^{d}$) Ś$_1$ K$_4$ D$_2$ इति; K$_1$ B D$_{1.3.4.6}$ अपि; T$_1$ वृतः (for युतः). — After 8, D$_{1.2}$ ins.:

625* राजा पृथिव्यां विख्यातः सदा धर्मपरायणः ।

**9** $^{a}$) K$_3$ D$_5$ S कालम् (for लोकम्). K$_3$ D$_5$ S (except T$_2$ G$_3$) अकरोत् (for अगमत्). — $^{b}$) Dn$_3$ D$_3$m. $_{4.6}$ (before corr.) भृगुः; M$_1$ गुरून् (for गुरुः). K$_3$ D$_5$ नृप (for परम्). — Ś$_1$ om. (hapl.) $9^{cd}$. — $^{c}$) K$_3$ अनुक्रमेण पश्चात्तु; D$_5$ S अन्वक्षमेव पश्चात्तु.

**10** $^{a}$) K$_3$ D$_5$ S नरके पच्यमानं तं (G$_4$ तु); D$_{1.2}$ अथापश्यत तं राजा. — $^{b}$) K$_1$ पश्य° (for पच्य°). K$_3$ D$_5$ स ददर्श पुरोहितं; D$_{1.2}$ पच्यंतं नरके गुरुं; S ददर्श स तु सोमकः (M$_1$ स्वपुरोहितं). — $^{c}$) K$_3$ कथं तु; D$_5$ S कथं नु (for किमर्थं). Ś$_1$ K$_{1.2.4}$ D$_3$ सोमकस्तमुवाचेदं; D$_{1.2}$ अपृच्छच्च कथं त्वं वै. — $^{d}$) Ś$_1$ K$_{1.2.4}$ किमर्थं पच्यसे; D$_{1.2}$ (by transp.) पच्यसे नरके. T$_1$ G$_1$ transp. पच्यसे and द्विज.

**12** $^{b}$) D$_{1.2}$ S धर्मराजमथाब्रवीत्. — $^{c}$) D$_{1.2}$ पाच-(D$_2$ °त)यस्वेह मां देव. — After 12, S ins.:

626* सोऽहमात्मानमाधास्ये नरके मुच्यतां गुरुः ।

**13** D$_{1.2}$ S यमः (for धर्मः). — $^{a}$) T$_1$ G$_1$ कर्म- (for कर्तुः). Ś$_1$ K$_{1–4}$ D$_{1–3}$ महाराज (for फलं राजन्). — $^{b}$) Ś$_1$ K$_{1.2.4}$ D$_{1–3}$ फलं भुंक्ते (for उप°). Dc D$_{1.2}$ M कथं-

सोमक उवाच ।
पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादिनम् ।
इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ १४
नरके वा धर्मराज कर्मणास्य समो ह्यहम् ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ १५
धर्म उवाच ।
यद्येवमीप्सितं राजन्भुङ्क्ष्वास्य सहितः फलम् ।
तुल्यकालं सहानेन पश्चात्प्राप्स्यसि सद्गतिम् ॥ १६
लोमश उवाच ।
स चकार तथा सर्वं राजा राजीवलोचनः ।
पुनश्च लेभे लोकान्स्वान्कर्मणा निर्जिताञ्शुभान् ।
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः ॥ १७
एष तस्याश्रमः पुण्यो य एषोऽग्रे विराजते ।
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः ॥ १८
एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

# १२९

लोमश उवाच ।
अस्मिन्किल स्वयं राजन्निष्टवान्वै प्रजापतिः ।
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् ॥ १
अम्बरीषश्च नाभाग इष्टवान्यमुनामनु ।

C. 3. 10514
B. 3. 129. 2
K. 3. 131. 2

चन. — After 13$^{ab}$, D1 ins. :

627* यदि तेऽस्य फलं राजन्नुपभोज्यं कथंचन ।

— $^{c}$) M दिव्यानि (for इमा°). — $^{d}$) Ś1 रुदतां वर; K3. 4 B Dc Dn D4–6 वदतां वर; D1. 2 सुबहूनि च. K2 वसमस्त्वावयोरिदं (sic). — After 13, D1. 2 ins. :

628* दुष्कृतं चास्य विन्देथा मुच्यते त्वद्गुरुर्यथा ।

**14** $^{a}$) K1 D1 कामयेल्ल्. — $^{b}$) K3 Dc तमृते; G1 ऋते तं; M2 ये विना (for ऋतेऽहं). — $^{c}$) Ś1 K1 [इ]ह (for [ए]व). D1. 2 वस्तुं विप्रेण वै सह.

**16** S (except M2) यमः (for धर्मः). — $^{b}$) B1. 3 Dc D1 भुक्त्वास्य (Dc2 भुक्तस्य); T1 G2. 4 भुंक्ष्वाद्य; T2 G3 भुंक्ष्वार्थं- (for भुङ्क्ष्वास्य). — $^{c}$) T1 G1 अनेनेह (for सहानेन). — $^{d}$) Dc2 G1 यास्यसि (for प्राप्स्यसि). K3 G1 तद्गतिं (for सद्गतिम्).

**17** S om. the ref. — $^{b}$) D1. 2 राजा धर्मेण भाषितं. — After 17$^{ab}$, N M1 ins. :

629* क्षीणपापश्च तस्मात्स विमुक्तो गुरुणा सह ।
[Ś1 K1 पश्चात्स (for तस्मा°).]

— $^{c}$) Dc यान् (for स्वान्). B लेभे लोकाञ्शुभा(B2 °कांस्तु ता)न्राजन्; Dn D4. 6 लेभे कामाञ्शुभान्राजन्. — $^{d}$) B Dn D4. 6 निर्जितान्स्वयं; D1. 2 S स्वेन निर्जितान्. — $^{e}$) T2 G3 transp. तेन and एव. — $^{f}$) Ś1 K D3. 5 गुरुणा गुरुवत्सलः; D1. 2 गुरुणा सोमको नृपः.

**18** $^{b}$) Ś1 K1. 3. 4 D1. 2 धर्मस्याग्र्यो; T G य एषोत्र (for य एषोऽग्रे). T2 G2–4 प्रकाशते (for विरा°). M2 य एष दिवि रोचते. — $^{c}$) D1. 2 उषित्वा तत्र; T1 G1 क्षांतश्चोष्याथ; T2 G3 °श्चोष्य च; G2. 4 °श्चोष्यात्र (for क्षान्त उष्यात्र). — $^{d}$) K4 प्राप्नोति परमां गतिं; D1. 2 आप्नुयात्स्वर्गतिं नरः; D3 प्राप्नोति सुकृतिर्नरः.

**19** $^{c}$) B2 नियताहारः; D1. 2 संयतात्मानः. Dc2 षड्रात्रं नियताहाराः.

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T2 G2–4 M1 आरण्य. — *Sub-parvan:* Ś1 K1. 2 (all om. subparvan name) mention only सोमकोपाख्यान; K3 D3. 5, likewise, only लोमशतीर्थयात्रा, followed by जन्तूपाख्यान; and K4 B Dc Dn D1. 2. 4. 6 T2 G3 M1 only जन्तूपाख्यान (followed by समाप्त in B1. 4 D1. 2 M1). — *Adhy. name:* T2 G3 यमसोमकसंवादः. — *Adhy. no.* (figures, words or both): Dn1 127; Dn2 128 (as in text); Dn3 S 129 (M2 131); D1 133. — *Śloka no.:* Dn 21; D1 23.

## 129

**1** $^{c}$) K4 D1. 2 S (except G4) इष्ट(K4 °ष्टा-; G1. 2 °ष्टि)कृतं. — $^{d}$) D5 T G वर्षसहस्रकं.

**2** $^{b}$) K4m इष्टवंतौ महाबलौ. — After 2$^{ab}$, B2–4

C. 3. 10515
B. 3. 129. 3
K. 3. 131. 3

यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः ॥ २
देशो नाहुषयज्ञानामयं पुण्यतमो नृप ।
यत्रेष्ट्वा दश पद्मानि सदस्येभ्यो निसृष्टवान् ॥ ३
सार्वभौमस्य कौन्तेय ययातेरमितौजसः ।
स्पर्धमानस्य शक्रेण पश्येदं यज्ञवास्त्विह ॥ ४
पश्य नानाविधाकारैरग्निभिर्निचितां महीम् ।
मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ॥ ५
एषा शम्येकपत्रा सा शरकं चैतदुत्तमम् ।
पश्य रामह्रदानेतान्पश्य नारायणाश्रमम् ॥ ६
एतदार्चीकपुत्रस्य योगैर्विचरतो महीम् ।
अपसर्पणं महीपाल रौप्यायाममितौजसः ॥ ७
अत्रानुवंशं पठतः शृणु मे कुरुनन्दन ।
उलूखलैराभरणैः पिशाची यदभाषत ॥ ८
युगंधरे दधि प्राश्य उषित्वा चाच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा सपुत्रा वस्तुमिच्छसि ॥ ९
एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।

---

Dn D4. 6 read 3cd. — d) Ś1 K B1 Dc D1-3 T1 G1. 4 M ह (for सः). — After 2, K4 D1. 2 ins.:

630* तेषामिष्टानि लिङ्गानि दृश्यन्तेऽद्यापि भारत ।
येषां लिङ्गैर्महाराज संस्तीर्णैव च भूरियम् ।
स्वयं प्रकाशबहवो वृक्षाश्चैते विशां पते ।
देवाश्च ऋषयश्चैव समागच्छन्ति नित्यशः ।
तद्गुं सायं तथा प्रातर्दृश्यन्ते ते हुताशनाः । [5]
इहाप्लुतानां कौन्तेय सद्यः पाप्मा विहन्यते ।
कुरुश्रेष्ठाभिषेकं वै तस्मात्कुरु सहानुजः ।
ततो नत्वाप्लुताङ्गस्त्वं कौशिकीमनुयास्यसि ।
विश्वामित्रेण वै तत्र तपस्तप्तमनुत्तमम् ।
ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः । [10]
जगाम कौशिकीं पुण्यां रम्यां स्फीतजलां नदीम् ।

Colophon.

लोमश उवाच ।

एषैव च नदी पुण्या कौशिकी नाम भारत ।
विश्वामित्राश्रमो रम्य एष तत्र प्रकाशते ।
आश्रमश्चैव पुण्याख्यः कश्यपस्य महात्मनः ।

[ K4 भारत (for नित्यशः) in line 4, and एष तात (for एव तत्र) in line 13. ]

**3** a) Ś1 देवश्च नहुषश्चास्यां; K1. 2 B Dc Dn D4. 6 देशश्च ना(K1. 2 Dc2 न)हुषस्यायं. — b) Ś1 K1. 2 B Dc Dn D4. 6 यज्वनः पुण्यकर्मणः. — c) Ś1 K1. 3 अत्रेष्टा दश; K2. 4 अत्रेष्ट्वा दश; D5 अत्र द्वादश. — d) D2 ब्राह्मणेभ्यो (for सद°). D (except D2. 5) [ऽ]भि- (for नि-).

**4** b) D1. 2 अमितद्युतेः (for अमितौ°). — d) K1 B1. 3 D4. 6 यस्येदं; B4 Dc Dn तस्ये° (for पश्ये°). Ś1 K1. 2 D3 यज्ञियं बहु (for यज्ञवा°). D1. 2 पश्येमां यज्ञसंस्थितिं.

**5** b) K1 G4 विचितां (for नि°). — c) K3. 4 Dc निमज्जंतीमिवाक्रांतां. — d) Dc पुण्य-; D1. 2 T2 G M नृप; T1 तृप- (for यज्ञ-).

**6** a) K1 B Dc D4. 6 शम्येकपत्रा या; K3 समीषणा यक्षी; D1. 2 सा चैकपत्रा सा; G1 शम्येकपत्राख्या; G3 °पत्रास्याः. — b) K1 शरदं; K3. 4 B Dc Dn D2-4. 6 सरकं (B1 शरणं); D5 दारवं; T2 G1-3 शकटं (for शरकं). Ś1 K Dc D3. 5 चेदम्; D1. 2 वनम् (for चैतद्). — c) D1. 2 यत्र देवाः सगंधर्वाः.

**7** a) Ś1 K1-3 D5 G4 अर्चीक°; B Dn D4. 6 चर्चीक°; Dc चार्चीक°. — b) D1. 2 सुयज्ञैरर्चितां महीं. — c) Hypermetric! K1-3 D (except D1-3) प्र° (for अप°). D3 महाराज (for महीं°). S अपसर्पणमुर्वीश. — d) Ś1 K3. 4 रौ(K4 रो)च्यायम्; K1 रौप्यायम्; D1. 2 T G2-4 M2 ब्याख्यातम्; G1 विख्यातम्; M1 प्रख्यातम् (for रौप्यायाम्).

**8** 8cd (with 10cd) cited in some MSS. of the Kāśikā on Pāṇini 2. 1. 45 and commented on in Nyāsa (*ad loc.*). — a) M अनुवंशान्. D1. 2 गदतः; D3 पठती; T G2-4 नृपते (for पठतः). — After 8, D2. 3 (marg. *sec. m.*) ins.:

631* अत्र स्नास्यन्ति ये नित्यं तेषां विघ्नो भवेदिति ।
[ D3 भविष्यति (for भवेदिति). ]

**9** a) Ś1 K2 च विश्रुत्यां; T2 G3. 4 पयः प्राश्य; G2 पयः पीत्वा (for दधि प्राश्य). — c) Dc एतद् (for तद्वद्). K2. 3 B Dn2 D3 भूत°; Cnp भूति° (as in text). — d) Ś1 K1. 2 B4 Dc D4-6 अर्हसि (for इच्छसि). D1-3 पुत्रानाप्स्यसि सुव्रतान्.

**10** 10cd is cited in some MSS. of the Kāśikā (*ad* Pāṇini 2. 1. 45) with v.l. च द्रक्ष्यसि (for अतोऽन्यथा); cf. v.l. 8abc. — b) K3. 4 D1 द्वितीयां. T G2-4 वत्स्यसे. G1 द्वितीयं दिवसं यदि. — c) Ś1 K B1 D1-3 तु (for वै). Ś1 K1. 2 तद्; S (except G1) मे (for ते). K3 Dc S (except G1) नृत्तं (for वृत्तं). — d) D1-3 M1 G4 रात्रि- (for रात्रौ). Ś1 Dc S (except G3) नृत्तम् (for वृत्तम्). — After 10, D1. 2 ins.:

632* एवमेतद्विदित्वा त्वं रात्रिं वस महामते ।

एतद्वै ते दिवा वृत्तं रात्रौ वृत्तमतोऽन्यथा ॥ १०
अत्राद्याहो निवत्स्यामः क्षपां भरतसत्तम ।
द्वारमेतद्धि कौन्तेय कुरुक्षेत्रस्य भारत ॥ ११
अत्रैव नाहुषो राजा राजन्क्रतुभिरिष्टवान् ।
ययातिर्बहुरत्नाढ्यैर्यत्रेन्द्रो मुदमभ्यगात् ॥ १२
एतत्प्लक्षावतरणं यमुनातीर्थमुच्यते ।
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ १३
अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः ।
यूपोलूखलिनस्तात गच्छन्त्यवभृथाप्लवम् ॥ १४
अत्रैव भरतो राजा मेध्यमश्वमवासृजत् ।
असकृत्कृष्णसारङ्गं धर्मेणावाप्य मेदिनीम् ॥ १५
अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम् ।
आस्ते देवर्षिमुख्येन संवर्तेनाभिपालितः ॥ १६
अत्रोपस्पृश्य राजेन्द्र सर्वाँल्लोकान्प्रपश्यति ।
पूयते दुष्कृताच्चैव समुपस्पृश्य भारत ॥ १७

वैशंपायन उवाच ।

तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः ।
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ १८
सर्वाँल्लोकान्प्रपश्यामि तपसा सत्यविक्रम ।
इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ १९

लोमश उवाच ।

एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।
सरस्वतीमिमां पुण्यां पश्यैकशरणावृताम् ।
यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि ॥ २०

C. 3. 10533
B. 3. 129. 21
K. 3. 131. 21

---

**11** B1. 3 om. 11ab. — a) Ś1 K1. 2 अत्राद्येह; B2. 4 Dn D4. 6 अद्य चात्र; Dc अद्यात्र च; D1. 2 अन्यत्रैव; D3 अत्र ह्योकां; T1 G1 अन्यत्राहो; T2 G2. 3 अत्राप्यहो (for अत्राद्याहो). — b) K3. 4 च भरतर्षभ (for भरत°). D1. 2 भयाच्चात्र नृपोत्तम. — c) B Dn D1. 2. 4–6 तु (for हि). — d) D1. 2 विश्रुतं (for भारत).

**12** a) Ś1 K1. 2 अत्रापि; K3 अत्रैवं. Ś1 K1. 2 नहुषो; K3 D2 नाघुषो. — b) D1. 2 भूरि-; D3 बहु- (for राजन्). — c) K1. 3 B1. 3 °रत्नाद्यैर्; K4 °रत्नाश्चैर्; B2. 4 D (except D3) T1 G1. 4 °रत्नौघैर्. — d) Ś1 K1 पदम्; K3. 4 B1 D3 मदम् (for मुदम्).

**13** b) B1. 3 G1. 2 यमुनातीरम्. B D (except D3. 5) उत्तमं (for उच्यते).

**14** ab) T1 M यत्र (for अत्र). Ś1 K1–3 B Dn D3. 4. 6 यज्ञै राजानः (for यज्ञैरी°). — c) B Dc D4. 6 °खलिकास्; T1 °खलितस् (for °खलिनस्). K4 स्नातुं; S तत्र (for तात). — d) B D (except Dn) [अ]वभृथप्लवं.

**15** a) T1 G1 तत्रैव (for अ°). B1. 3. 4 D (except D1–3. 5) G4 M वै (for [ए]व). — After 15a, B D (except D1–3. 5) ins.:

633* राजन्क्रतुभिरिष्टवान् ।
हयमेधेन यज्ञेन.

— c) D1 क्लृप्तभारांगां; G3 कृष्णसारंगाद्; G4 °सारंगान्. — d) Ś1 K1 कर्मणाप्य स; K2 कर्मणापि स; K3 कर्मणावाप्य; K4 धर्मेण प्राप्य; B1 Dn D4. 6 धर्मेणाप्य च.

**16** a) D1. 2 यत्रैव (for अ°). D2 M वै (for [ए]व). — c) K1 D3 आस्त; K3 अस्ति; Dc प्राप; M1 आस (for आस्ते). B Dn D4. 6 प्राप चैवर्षिमुख्येन. — d) Ś1 K1. 2 [अ]नुपालितः; B2 [अ]पि पालितः.

**17** T1 G1 om. from st. 17 up to st. 12 of the next adhy. — b) K4 D3 सर्वलोकान्. K4 D1 प्रपश्यसि; Dc2 अवाप्स्यसि. — c) D1. 2 मुच्यते दुष्कृतैश्चैव. — d) B Dc Dn D4. 6 अत्रापि समुपस्पृश (Dc °स्पृशन्); T G (T1 G1 om.) अत्रापः समुपस्पृशन्.

**18** T1 G1 om. 18 (cf. v.l. 17). — b) D1–3 पूज्य° (for स्तूय°).

**19** T1 G1 om. 19 (cf. v.l. 17). — Before 19, T2 G2. 3 ins. युधिष्ठिरः. — a) = 3. 114. 15a. T2 G3. 4 M स तान् (for सर्वान्). — b) Ś1 K D3. 5 सत्यसंगर; D1. 2 [अ]हं तपोधन. — c) D1. 2 °स्थः पांडवं चैव.

**20** T1 G1 om. 20 (cf. v.l. 17). — T2 G3 रोमशः. — a) Dc2 G2 महाभाग; T2 G3. 4 महाराज (for महाबाहो). — After 20ab, S (T1 G1 om.) ins.:

634* इह स्नात्वा तपोयुक्तांस्त्रीँल्लोकान्सचराचरान् ।

— K2 om. 20c–21b. — c) D1. 2 महा- (for इमां). — d) Ś1 Dc D3 पश्यैकशरणान्वि(D3 °श्रि)तान्; K1 B2. 4 Dn D4–6 पुण्यैकशरणावृ(K1 °न्वि)तां; K4 (marg. *sec. m.*) D1. 2 पश्यामोत्र महामते; G2 पश्यैकां शरणावृतां. — e) Ś1 D1. 2 तत्र; B2 Dc2 S (T1 G1 om.) अ° (for य°). Ś1 K1. 3 D3 स्नातो. — f) Ś1 K1. 4 धुतपाप्मा; Dn M पूत°. Dc2 T2 G2. 3 भविष्यति.

**21** T1 G1 om. 21 (cf. v.l. 17); K2 om. 21ab (cf.

C. 3. 10534
B. 3. 129. 21
K. 3. 131. 22

इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः ।
ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च ॥ २१
वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना ।
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## १३०

लोमश उवाच ।
इह मर्त्यास्तपस्तप्त्वा स्वर्गं गच्छन्ति भारत ।
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ १
एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा ।
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः ॥ २
एषा सरस्वती पुण्या दिव्या चोघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशां पते ॥ ३
द्वारं निषादराष्ट्रस्य येषां द्वेषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ४
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
यत्रैनामभ्यवर्तन्त दिव्याः पुण्याः समुद्रगाः ॥ ५
एतत्सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिंदम ।
लोपामुद्रा समागम्य भर्तारमवृणीत वै ॥ ६
एतत्प्रभासते तीर्थं प्रभासं भास्करद्युते ।

v.l. 20). — a) Ś1 K D3 सत्रैर् (for यज्ञैर्). — b) D1. 2 अयजंश्च (for इष्ट°). Ś1 K1 महर्षयः; B1 D1. 2 सुरर्षभाः. — c) B4 ब्राह्मणा ऋषयश्चैव; D1. 2 ऋषयश्च महाभागास्.

**22** T1 G1 om. 22 (cf. v.l. 17). — a) T2 G3. 4 वेदिः (for वेदी). — b) M2 दश° (for पञ्च°). — c) Ś1 K1. 2 D3 M1 कुरोश्च; D1. 2 ययातेर् (for कुरोर्वै). — d) Ś1 K1. 2 प्रकाशते (for महा°).

Colophon om. in T1 G1. — *Major parvan:* Ś1 K1. 2 T2 G2–4 M1 आरण्य; D6 वन (!). — *Sub-parvan:* B1. 3. 4 Dc Dn1. n3 D4. 6 तीर्थयात्रा. K3. 4 B2 D1–3. 5 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा. — *Adhy. name:* T2 G3 यमुनादर्शनं. — *Adhy. no.* (figures, words or both): Dn1 128; Dn2 129 (as in text); Dn3 T2 G2–4 M1 130; D1 135; M2 132. — *Śloka no.:* Dn1. n3 D1 23; Dn2 22.

## 130

**1** T1 G1 om. 1–12 (cf. v.l. 3. 129. 17). — a) D1. 2 महर्षयस् (for इह मर्त्यास्). Ś1 K2 तपःसिद्धाः; K1 B Dn D4–6 तनूस्त्यक्त्वा; K3. 4 Dc T2 (by corr.) G3 तनुं त्यक्त्वा (T2 [before corr.] तपस्त्यक्त्वा) (for तपस्तप्त्वा). — cd) Ś1 K Dc1 D1–3. 5 मर्तुकामा इहायांति पृथिव्याः (D1. 2 °व्यां) स्वर्गकांक्षिणः.

**2** T1 G1 om. 2 (cf. v.l. 1). — b) D1. 2 दक्षेण परमर्षिणा. — cd) Ś1 K D3. 5 त्यजेयुर्य इह प्राणांस्ते गच्छेयुर्नरा दिवं.

**3** T1 G1 om. 3 (cf. v.l. 1) — a) B D (except D3. 5) रम्या (for पुण्या). — b) Ś1 K D3. 5 रम्या (for दिव्या). B Dn D3. 4. 6 चौघवती; Dc घोषवती; G4 चोर्ध्ववती. — d) D1. 2 M1 सरस्वत्यां. Ś1 K D3. 5 महीपते; D1. 2 प्रकाशते (for विशां पते).

**4** T1 G1 om. 4 (cf. v.l. 1). — a) Ś1 K1 निषधराजस्य; B2 D2 Dc2 निषादराजस्य. — b) K2 D1. 2 एषा. Dn D6 दोषात्; D1. 2 प्राची (for द्वेषात्). — After 4ab, Ś1 ins.:

635* क्षीणपापा शुभाँल्लोकान्प्राप्नुते नात्र संशयः ।

— Ś1 om. (hapl.) 4c–5b. — d) G2. 4 M स (for हि). D1. 2 सा निषादभयान्नदी.

**5** T1 G1 om. 5 (cf. v.l. 1); Ś1 om. 5ab (cf. v.l. 4). — c) D1. 3 G4 यत्रैताम् (for °नाम्). Ś1 अभ्यधावंत; K3 नात्यवर्तंत; M अन्ववर्तंत. D1. 2 यत्र नष्टा महाभागाः. — d) B D (except D1–3. 5) सर्वाः (for दिव्याः).

**6** T1 G1 om. 6 (cf. v.l. 1). — a) K4 D3 महातीर्थं. K4 (marg. *sec. m.*) D1. 2 तस्मिन्स्नात्वा महातीर्थे. — b) D1. 2 महामुनिं (for अरिंदम). — c) D2 महाभागा (for समा°). — d) Ś1 K D1–3. 5 भर्तारमवृणोत्तदा.

**7** T1 G1 om. 7 (cf. v.l. 1). — a) K4 B D (except D3. 5) प्रकाशते. — b) Ś1 पुष्करद्युते; some MSS. भास्कर-

इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनम् ॥ ७
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एषा रम्या विपाशा च नदी परमपावनी ॥ ८
अत्रैव पुत्रशोकेन वसिष्ठो भगवानृषिः ।
बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः ॥ ९
काश्मीरमण्डलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ १०
अत्रोत्तराणां सर्वेषामृषीणां नाहुषस्य च ।
अग्नेश्चात्रैव संवादः काश्यपस्य च भारत ॥ ११
एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ १२
एष वातिकषण्डो वै प्रख्यातः सत्यविक्रमः ।
नाभ्यवर्तत यद्द्वारं विदेहानुत्तरं च यः ॥ १३
एष उज्जानको नाम यवक्रीर्यत्र शान्तवान् ।

C. 3. 10552
B. 3. 130. 17
K. 3. 132. 17

द्युतेः. K4 (marg. *sec. m.*) हाटकं क्षेत्रमुत्तमं. — c) Ś1 K1. 2 D1. 3 चंद्रस्य; D2 शक्र° (for इन्द्र°). K1 तीर्थं; D1. 2. 5 S नित्यं (for पुण्यं).

**8** T1 G1 om. 8 (cf. v.l. 1). — After 8ab, K4 ins.:

636* यत्र गयाशरो नाम पितॄणां तुष्टिकारकम् ।
यत्र तीर्थान्यनेकानि देवतायतनानि च ।
मुनीनामाश्रमाश्चैव सर्वाः स्वर्गमयाः शुभाः ।
यत्र गयाशिरो नाम तीर्थं पापभयापहम् ।
क्षेत्रमेतन्महीपाल प्रणमस्व यथाविधि ।
सर्वतीर्थसमावासो दृश्यते विबुधाचलः ।

— c) Ś1 K D1-3. 5 पुण्या (for रम्या). — d) Ś1 K D3-5 परमपावना. — For identification of "Viṣṇupada", cf. D. R. Bhandarkar, *Indian Culture*, 1937, p. 512 f.

**9** T1 G1 om. 9 (cf. v.l. 1). — a) B Dc Dn D2. 4. 6 M अत्र वै (for अत्रैव). — d) K3. 4 Dc D5 विपाशश्चोत्थितः पुनः. — After 9, K4 ins.:

637* सर्वतीर्थसमावासो दृश्यतेऽत्रार्बुदाचलः ।
[Cf. 636* above (line 6).]

**10** T1 G1 om. 10 (cf. v.l. 1). — a) Ś1 K1. 2 B1. 3 कश्मीर°. Ś1 K1. 2 D1 चैव; K4 D3 पुण्यं (for चैतत्). — b) Ś1 K2 सर्वं तीर्थम्; K1 D3 सर्वतीर्थम्; B2. 3 D6 G2 M2 सर्वं पुण्यम्; D1. 2 महत्पुण्यम् (for सर्वपुण्यम्). K1 अयं परं (for अरिंदम). K3. 4 पश्य पार्थिवसत्तम. — Ś1 K2 D1. 2 ins. after 10cd: K1. 3. 4 D3. 5 (which om. 10cd) ins. after 10ab: B Dc Dn ins. after 16:

638* वितस्तां पश्य राजेन्द्र सर्वपापप्रमोचनीम् ।
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ।

— d) G4 [इ]मं (for [इ]दं).

**11** T1 G1 om. 11 (cf. v.l. 1). — a) Dn1. n3 यत्र; Dn2 तत्र (for अत्र). T2 G2. 3 [उ]त्तरेण (for [उ]त्तराणां). — b) K3. 4 D3. 5 G4 नहुषस्य; Dc उत्तरस्य; D1. 2 वासवस्य; M2 बाहुकस्य. — c) K3. 4 B Dn D3-6 transp. अत्र and एव. M2 आसीद्धि (for चात्रैव). — d) Ś1 K D3. 5 कश्यपस्य. D1. 2 कश्यपस्याभवत्पुरा.

**12** T1 G1 om. 12 (cf. v.l. 1). — c) G2. 4 वर्षकस्य. Ś1 K1. 2 D1 शृंगे (for मध्ये).

**13** a) K1 वाभिकषंडो; K4 Dc Dn D5 वातिकखंडो; D3 वार्तिकखंडो; T1 चातिकषंडो; G4 चानीकषोढो; M1 वातकषंडो; M2 पातिक°. D1. 2 एष रामसमो वीरः; G2 एषा याति क्रमार्यस्थः. — b) Ś1 K1-3 D3. 5 विख्यातः (for प्र°). A few MSS. सत्यविक्रम. — K3 D5 om. 13cd. — c) Ś1 K1. 2 D3. 4. 6 नान्य(Ś1 °त्य-; D4. 6 °न्व)वर्तयत द्वारं; K4 B Dc Dn D1. 2 नात्य(D1 °न्य)वर्तत तद् द्वारं. — d) K1 B Dc Dn D3-6 T2 G3 विदेहाद्; K4 विदेहस्य; D1. 2 वैदेहाद् (for विदेहान्). K4 T1 G1. 2. 4 M उत्तरान् (for उत्तरं). K4 B1-3 Dc D1-3 M जयः; T1 जयत्; G3. 4 जयान् (for च यः). — After 13, N ins.:

639* इदमाश्चर्यमपरं देशेऽस्मिन्पुरुषर्षभ ।
क्षीणे युगेऽपि कौन्तेय शर्वस्य सह पार्षदैः ।
सहोमया च भवति दर्शनं कामरूपिणः ।
अस्मिन्सरसि रम्ये वै चैत्रे मासि पिनाकिनम् ।
यजन्ति याजकाः सम्यक्परिवारं शुभार्थिनः । [5]
अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः ।
क्षीणपापः शुभाँल्लोकान्प्राप्नुते नात्र संशयः ।

[(L. 2) K4 च; B Dc Dn D4. 6 तु (for ऽपि). — (L. 3) Dc कुशलं (for दर्शनं). Ś1 K1. 3 D5 काष्ठरूपिणः. — (L. 4) B1 सत्ये; B2 सत्रे; B3 सर्वे; B4 Dn D4. 6 सत्रैर्; Dc पुण्ये (for रम्ये). D1. 2 तु (for वै). K3. 4 D1-3. 5 चैत्रमासे पिनाकिनः. — (L. 5) B Dn D4. 6 यजंते. B Dn3 D6 परिवार-; Dc D1 परिचार-; D1 परिचारं. — (L. 7) Ś1 प्राप्नोति.]

**14** a) K1. 2 उज्जलको; D1. 2 उजनको; T2 G2. 3 उज्जतको; M उज्ज्वानुको. — b) K3 D5 शक्रो वै; B2 Dn D3 (by corr.). 4. 6 पावकिर् (for यवक्रीर्). D1. 2 सत्य° (for शान्त°). — d) Some MSS. वसिष्ठो.

C. 3. 10553
B. 3. 130. 17
K. 3. 132. 17

अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ १४
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥ १५
समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया ।
तं द्रक्ष्यसि महाराज भृगुतुङ्गं महागिरिम् ॥ १६
जलां चोपजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ १७
तां देवसमितिं तस्य वासवश्च विशां पते ।
अभ्यगच्छत राजानं ज्ञातुमग्निश्च भारत ॥ १८
जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ॥ १९
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ।
शरणार्थी तदा राजन्निलिल्ये भयपीडितः ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

# १३१

श्येन उवाच ।
धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः ।
स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि ॥ १
विहितं भक्षणं राजन्पीड्यमानस्य मे क्षुधा ।
मा भाङ्क्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि ॥ २
राजोवाच ।
संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ३

15 [c]) G2 [ए]ष (for [ए]व). K4 [अ]रुंधत्या (for रुक्मिण्या). — [d]) T1 [अ]श्रम्यद्; M1 [अ]शम्यद्. D2 तपोबलात् (for अकोपना).

16 [a]) K3 T1 G2 M2 समाधिना; T2 G3 °सीनां (for °धीनां). Ś1 K2 समापन्नं; K1. 3. 4 °धानं; B2 °धिस्तु; D1 °धि तु (for °सस्तु). — [b]) D5 पांडवानां. Ś1 K D5 T1 G1 श्रुतं (for श्रुतस्). T1 मया (for त्वया). — [c]) T1 G1. 2 M2 त्वं (for तं). D1. 2 M महीपालः; T2 G3 महाभाग. — [d]) D2 भृगुं तुंगं; S भृगुतुंदं. — After 16, B Dc Dn D4. 6 ins. 638* ; while Ś1 K D1–3. 5 ins.:

640* मण्डवां च तथा संध्यां द्रक्ष्यस्यमितविक्रम ।

[Ś1 मडुवां; K2 वडवा; K3 मंडकं; D1–3 मांडवाः; D5 मंडलं (for मण्डवां).]

17 [c]) D2 औशीनरो. — [d]) D2 वासवं च (for वासवाद्). D1. 6 अतिरिच्यत; S अतिरिच्यते.

18 [a]) Ś1 K1. 2 तं (for तां). Ś1 K D5 देवाः; D2 देवौ (for देव-). — [c]) D1. 2 M2 अभ्यगच्छंत. B Dn D4. 6 अभ्या(D4 °भ्य)गच्छन्नृपवरं. — [d]) T1 जमदग्नि (for ज्ञातुमग्निश्च).

20 [a]) Ś1 K2 B2. 3 Dn2. n3 D4. 6 ऊरू; D1 कुरु (for ऊरुं). D1. 2 M समाविश्य. — [c]) K D1–3 T1 G2. 4 ततो; Dc तथा (for तदा).

Colophon om. in K3 D5. — *Major parvan:* Ś1 K1. 2 D6 T2 G2–4 M1 आरण्य. — *Sub-parvan:* Ś1 K1 B Dc Dn1. n3 D2–4. 6 T2 G3 (all om. sub-parvan name) mention only श्येनकपोतीय (Ś1 °कपोत; K1 °कापोत); K4 D1, likewise, only लोमशतीर्थयात्रा (followed by श्येनकपोतीय in D1). — *Adhy. no.* (figures, words or both): Dn1 129; Dn2 T1 G1 130 (as in text); Dn3 T2 G2–4 M1 131; D1 136; M2 133. — *Śloka no.:* Dn1. n3 24; D1 25.

## 131

1 Before the ref., Dc ins.:

641* शृणु त्वं तत्र वै राजञ्श्येनो यदभिभाषत ।

— [a]) Ś1 K D1–3. 5 त्वामिहैकं; Dc त्वामिह वै; G1 चाहुरेकं; G4 M प्राहुरेकं. — [b]) Ś1 K Dc D1–3. 5 राजन्प्राहुर्मनीषिणः. — [c]) Dn T2 G3 सर्वे (for स वै).

2 [a]) D1. 2 विधिना विहितं भक्ष्यं. — [c]) K1 मा रक्षे; B D T2 G3 मा रक्षीर् (D1. 2 मां रक्ष); T1 G2. 4 मा हिंसीर् (for मा भाङ्क्षीर्). Ś1 K1. 2 D5 G2 धर्मलोपेन. — [d]) K1. 3 S धर्ममुत्सृज्य मा नशीः.

3 D1. 2 शिबिरुवाच. — [a]) K3 D1. 2 T1 प्राणार्थी

एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदाने परोऽधर्मः किं त्वं श्येन प्रपश्यसि ॥ ४
प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन लक्ष्यते ।
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ॥ ५

श्येन उवाच ।

आहारात्सर्वभूतानि संभवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ६
शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ७
भक्ष्याद्विलोपितस्याद्य मम प्राणा विशां पते ।
विसृज्य कायमेष्यन्ति पन्थानमपुनर्भवम् ॥ ८
प्रमृते मयि धर्मात्मन्पुत्रदारं नशिष्यति ।
रक्षमाणः कपोतं त्वं बहून्प्राणान्नशिष्यसि ॥ ९
धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ।
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम ॥ १०
विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुदाचरेत् ॥ ११
गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् ॥ १२

राजोवाच ।

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षिराट् किं त्वं धर्मज्ञश्चास्यसंशयम् ।

C. 3. 10574
B. 3. 131. 14
K. 3. 133. 14

---

(T$_1$ °र्थं). — $^{b}$) D$_{1.2}$ [उ]द्विग्नो (for भीतो). Ś$_1$ K D$_{3.5}$ [ऽ]यमातुरः (for महा°). — Dn$_1$ om. $3^{c}$–$4^{d}$; T$_2$ om. $3^{c}$–$5^{b}$. — $^{d}$) Ś$_1$ K$_4$ D$_3$ प्राणगृद्धीर्; D$_{1.2}$ प्राणान्गृध्नुर्. Ś$_1$ K$_{2-4}$ D$_{3.5}$ द्विजोत्तमः (for अयं द्विजः).

**4** Dn$_1$ T$_2$ om. 4 (cf. v.l. 3). — $^{a}$) Ś$_1$ K D$_{3.5}$ [अ]स्य; Dc$_2$ [अ]द्य; D$_{1.2}$ [अ]हं (for [इ]ह). — $^{b}$) Ś$_1$ K$_2$ D$_3$ ममांतिकं (for [अ]भयार्थिनः). — $^{c}$) Ś$_1$ K D$_{3.5}$ [ऽ]पराधं मे (K$_1$ कथं धर्मं); B Dn$_{2.}$ n$_3$ D$_{4.6}$ परं धर्मं; D$_{1.2}$ न चैवास्य (for परोऽधर्मः). — $^{d}$) Ś$_1$ K$_{2-4}$ D$_{3.5}$ कं त्वं; B Dc Dn$_{2.}$ n$_3$ D$_{4.6}$ कथं (for किं त्वं). D$_{1.2}$ कर्म (for श्येन). K$_1$ B Dc Dn$_{2.}$ n$_3$ D$_{4.6}$ T$_2$ G$_4$ न पश्यसि; D$_{1.2}$ चिकीर्षसि; T$_1$ G$_2$ [इ]ह पश्यसि (for प्रपश्यसि).

**5** T$_2$ om. $5^{ab}$ (cf. v.l. 3). — $^{b}$) M आगतः (for लक्ष्यते). — $^{c}$) K Dc D$_{4.6}$ T G मत्सकाशे (K$_1$ Dc °शी). — $^{d}$) Dn$_{2.}$ n$_3$ विवर्जितः; T$_2$ G$_4$ न शक्यते (for विग°). — After 5, K$_{1.2}$ B Dc Dn D$_{4.6}$ G$_3$ ins.:

642* यो हि कश्चिद् द्विजान्हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च त्यजते तुल्यं तेषां हि पातकम् ।

Dc$_2$ Dn$_2$ G$_3$ cont.: D$_1$ ins. after 5:

643* एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणधारणम् ।

[(L. 1) Dn$_2$ G$_3$ एकतो हरिवासराः (for the posterior half).]

**6** $^{b}$) Dc Dn$_3$ D$_{1.2}$ महीतले. — $^{c}$) D$_{1.2}$ [ए]व (for वि-). — $^{d}$) Ś$_1$ K$_{2.3}$ D$_3$ सर्वशः (for जन्तवः). D$_{1.2}$ संभवंति च सर्वशः.

**7** $^{a}$) K$_1$ दुस्त्यजेत्यर्थे; D$_{1.2}$ दुःकृतेप्यर्थे; T G पुष्कलस्यार्थे. — $^{d}$) D$_{1.2}$ वै जीवितुं (for वर्तं°).

**8** $^{a}$) Ś$_1$ D$_4$ T$_1$ G$_1$ M भक्षाद्. B Dn D$_{4.6}$ वियोजितस्याद्य; T$_1$ M$_2$ विलोभि°. — $^{c}$) Ś$_1$ K D$_{1.2.5}$ यास्यंति (for एष्यन्ति). — $^{d}$) B D (except D$_{1-3.5}$) अकुतोभयं (for अपुनर्भवम्).

**9** $^{a}$) K$_1$ B$_4$ D$_4$ प्रसृते; Dc$_1$ मन्मते; Dc$_2$ मन्मृते; T$_1$ प्रमीते; M$_2$ मृते तु (for प्रमृते). — $^{b}$) Ś$_1$ K Dc D$_{1.2.5}$ T$_2$ G$_{2-4}$ मरिष्यति; B D$_{4.6}$ विनंक्ष्यति; D$_3$ भविष्यति (for नशि°). Dn पुत्रदारादि नंक्ष्यति. — $^{c}$) K$_{1.3.4}$ D$_{3.5}$ M$_2$ राजन्रक्षन्; a few MSS. रक्ष्य° (for रक्ष°). — $^{d}$) N T$_1$ G$_1$ M न रक्षसि (for नशि°).

**10** $^{a}$) S बहून् (for धर्मं). — $^{b}$) K$_3$ Dn$_2$ D$_{1.2}$ S कुवर्त्म तत्; B$_3$ D$_3$ कुधर्मवि(D$_3$ °व)त्; D$_5$ कथंचन (for कुधर्म तत्). — $^{c}$) B Dn D$_{4.6}$ अविरोधात्; Dc अविरोधे. Ś$_1$ K Dc$_1$ हि; Dc$_2$ [ऽ]पि; D$_{1.2}$ च (for तु). — $^{d}$) D$_{1.2.5}$ सद्भिरुच्यते; a few MSS. सत्यविक्रमः.

**11** $^{a}$) B$_{1.2}$ Dc विरोधेषु. — $^{b}$) D$_1$ नित्यं जंतुषु सर्वशः. — $^{d}$) K$_{1.4}$ B$_{2-4}$ Dn D$_{3.4.6}$ M$_1$ समुपाचरेत्; B$_1$ Dc °पाचर; D$_5$ T G °दाचर; M$_2$ °दाहृतं. D$_{1.2}$ धर्मं तं विबुधा विदुः.

**12** Ś$_1$ K$_{1.2}$ om. $12^{ab}$. — $^{a}$) B Dn D$_{4.6}$ आदाय; D$_1$ T$_2$ G$_3$ M$_2$ अज्ञाय; G$_2$ आस्थाय (for आज्ञाय). — $^{d}$) B$_{2.4}$ Dn D$_{4.6}$ कुरुष्व धर्मनिश्चयं (unepic cadence!).

**13** $^{c}$) Ś$_1$ K$_{1.2}$ D$_3$ त्वं हि (for किं त्वं). D$_2$ सुवर्णपक्षकस्त्वं हि. — $^{d}$) K$_3$ Dc [अ]पि (for [अ]सि). D$_1$ धर्मज्ञ बहु भाषसे; S धर्मं (G$_1$ °र्मान्) ज्ञात्वा वि(T$_1$ -भि-; M$_1$ प्र)भाषसे. — $^{e}$) T$_2$ G$_{2-4}$ [अ]पि (for हि). D$_6$ सर्वसंयुक्तं; G$_1$ त्वं समा° (for धर्मसं°). D$_{1.2}$ तथा धर्मविचित्रार्थां. — $^{f}$) Dc$_2$ किंचित् (for चित्रं). B Dn D$_{4.6}$ च;

तथा हि धर्मसंयुक्तं बहु चित्रं प्रभाषसे ॥ १३
न तेऽस्त्यविदितं किंचिदिति त्वा लक्षयाम्यहम् ।
शरणैषिणः परित्यागं कथं साध्विति मन्यसे ॥ १४
आहारार्थं समारम्भस्तव चायं विहंगम ।
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया ॥ १५
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां यद्वान्यदभिकाङ्क्षसे ॥ १६

श्येन उवाच ।

न वराहं न चोक्षाणं न मृगान्विविधांस्तथा ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ १७
यस्तु मे दैवविहितो भक्षः क्षत्रियपुंगव ।
तमुत्सृज महीपाल कपोतमिममेव मे ॥ १८
श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी ।
मा राजन्मार्गमाज्ञाय कदलीस्कन्धमारुह ॥ १९

राजोवाच ।

राज्यं शिबीनामृद्धं वै शाधि पक्षिगणार्चित ।
यद्वा कामयसे किंचिच्छ्येन सर्वं ददानि ते ।
विनेमं पक्षिणं श्येन शरणार्थिनमागतम् ॥ २०
येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् ॥ २१

श्येन उवाच ।

उशीनर कपोते ते यदि स्नेहो नराधिप ।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥ २२
यदा समं कपोतेन तव मांसं भवेन्नृप ।

---

T$_1$ वि- (for प्र-). D$_{1.2}$ भाषसे गिरमुत्तमां.

**14** $^{b}$) N (except Ś$_1$ K$_{1.2}$) त्वां (for त्वा). — $^{c}$) Hypermetric! D$_{1.2}$ शरणैषिणां. K$_{3.4}$ D$_{3.5}$ शरणागतसंत्यागं; B Dc Dn D$_{4.6}$ T G शरणैषिपरित्यागं. — $^{d}$) D$_1$ कस्मात्; M कश्च (for कथं). Ś$_1$ K$_{1.2}$ D$_1$ त्वं साधु (for साध्विति). M मन्यते. D$_2$ कस्मात्त्वमभिमन्यसे. — After 14, M$_1$ ins.:

644* ह्रियमाणं तथाहारमुत्पन्नं क्षुधितस्य वै ।

**15** $^{a}$) S आहारार्थे. — M$_2$ om. 15$^{cd}$. — $^{c}$) K$_3$ D$_5$ [अ]धिकं (D$_5$ °कः) (for [अ]न्यथा). K$_3$ कर्म (for कर्तुम्). — $^{d}$) K$_{1.3.4}$ B$_4$ Dc$_2$ D$_{1.2}$ G$_2$ [ऽ]भि-; B$_{1.3}$ [ऽ]ति- (for ऽपि). D$_5$ आहारः पक्षिणां वर.

**16** $^{b}$) T G$_{2-4}$ transp. मृगो and महिषो. Dn D$_4$ माहिषो. — $^{c}$) T G$_{3.4}$ अत्र (for अद्य). Ś$_1$ K$_{1.2}$ D$_{1-3}$ एतत्ते क्रियतामद्य. — $^{d}$) Ś$_1$ M यद्वान्यम्; B$_1$ Dn D$_{4-6}$ यच्चान्यद्; T$_1$ यदर्थम्; T$_2$ G$_{2-4}$ यदन्यद् (for यद्वान्यद्). Ś$_1$ K B$_4$ Dc D$_{1-3}$ अभिकांक्षसि (K$_4$ अपि कांक्षसि); B$_2$ इह कांक्षसे; Dn D$_{4-6}$ इह कांक्षसि.

**17** $^{b}$) Ś$_1$ K Dc D$_{1-3}$ न मृगांश्च पृथग्विधान्. — $^{d}$) Ś$_1$ K$_2$ तेनघ; D$_{1.2}$ ते मम (for तेन मे). K$_1$ नान्यं भक्षमहं वृणे; B Dc Dn D$_{4-6}$ किं ममान्येन केनचित्.

**18** $^{a}$) Ś$_1$ K$_{1.2}$ D$_5$ विहितो भक्ष्यो; K$_3$ Dc Dn D$_{2.3}$ T G$_{1.3.4}$ देवविहितो. — $^{b}$) B Dn$_1$. n$_3$ D$_{1.2.4-6}$ भक्ष्यः. Ś$_1$ K$_{1.2}$ विधात्रा क्षत्रियर्षभ. — $^{c}$) Ś$_1$ K$_{1.2.4}$ Dc Dn$_3$ D$_{1.2.5}$ G$_2$ उत्सृज्य. G$_2$ M$_1$ महाराज (for मही°). — $^{d}$) K$_1$ नान्यं भक्ष्यमिहास्ति मे; K$_3$ Dc D$_5$ नान्यं भक्ष्यमहं वृणे.

**19** $^{a}$) B D (except D$_{1-3}$) श्येनः कपोतानत्तीति. — $^{b}$) G$_{1.2}$ श्रुतिर् (for स्थितिर्). B$_2$ D$_{4.6}$ पुरातनी (for सना°). — $^{c}$) K$_{1.2}$ B Dn D$_{4.6}$ T$_2$ G$_3$ सारम् (for मार्गम्). N G$_{1.2}$ अ(K$_{1.3}$ आ)ज्ञात्वा (for आज्ञाय). — $^{d}$) K$_4$ D$_{1.2}$ S (except M$_2$) कदलीस्तंभम्. Ś$_1$ D$_3$ आरुज; B$_{1.4}$ आव्रज; B$_3$ Dc Dn D$_{4.6}$ T$_1$ G$_1$ M$_2$ आसज; M$_1$ आश्रय (for आरुह). K$_1$ कदलीकंदभक्षनः (sic).

**20** $^{a}$) Dn D$_{4.6}$ राष्ट्रं (for राज्यं). Ś$_1$ K$_{1.2}$ च; K$_{3.4}$ D$_{1-3.5}$ M$_1$ हि (for वै). G$_1$ राज्यं च शिबीनामृद्धं. — $^{b}$) K$_4$ पक्षिगणार्चितः; D$_{1-3}$ °गणान्वितः; T G$_{2-4}$ °भिरर्कितः. G$_1$ (corrupt) वैशाधी पक्षिभिश्चितं; B Dc Dn D$_{4.6}$ ददानि तव खेचर. — After 20$^{ab}$, S ins.:

645* कृत्स्नमेतन्मया दत्तं राजवद्विहगोत्तम ।

— $^{c}$) B$_{2.4}$ यं च; B$_3$ Dn D$_{4.6}$ यं वा (for यद्वा). B Dn D$_{4.6}$ कामं (for किंचित्). — $^{d}$) K$_{3.4}$ D$_{1-3.5}$ G$_{2.4}$ ददामि (for °नि). Ś$_1$ K$_{1-3}$ D$_{1.2.5}$ तत् (for ते). — Ś$_1$ K$_2$ om. 20$^{e}$–21$^{d}$. — $^{e}$) T$_2$ G$_{2.3}$ [ए]नं (for [इ]मं).

**21** Ś$_1$ K$_2$ om. 21 (cf. v.l. 20). — $^{a}$) S स्थाप° (for वर्ज°). — $^{b}$) K$_{3.4}$ D$_{3.5}$ द्विजं दानेन मे द्विज. — $^{d}$) K$_1$ D$_{1.3}$ न दास्ये (D$_1$ मुच्यैनं; D$_3$ मुंचेमं) शरणागतं; D$_2$ मुचेनं (sic) शरणार्थिनं.

**22** $^{a}$) K$_3$ B$_1$ D$_3$ औशीनर. — $^{c}$) S आत्ममांसं समुद्धृ- (M °त्कृ)त्य. — $^{d}$) N (except Dc$_2$ Dn$_2$ D$_2$) कपोतं (for कपोत-). — After 22, K$_1$ reads 25.

तदा प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ २३
राजोवाच ।
अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥ २४
लोमश उवाच ।
अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन सहाभिभो ॥ २५
ध्रियमाणस्तु तुलया कपोतो व्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २६
न विद्यते यदा मांसं कपोतेन समं धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ २७
श्येन उवाच ।
इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥ २८
यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशां पते ।
एषा ते भास्वरी कीर्तिर्लोकानभिभविष्यति ॥ २९
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥ ३०
लोमश उवाच ।
तत्पाण्डवेय सदनं राज्ञस्तस्य महात्मनः ।

C. 3. 10595
B. 3. 131. 33
K. 3. 133. 35

---

**23** M1 om. (hapl.) 23–24. — ^b) B Dn D4. 6 नृपोत्तम; D1. 2 T G3. 4 नराधिप (for भवे°). — ^c) T2 G3. 4 त्वया (for तदा). B2–4 Dn D4. 6 देयं तु (for प्रदेयं). T1 देयं तव तदा मह्यं; G1 देयं तत्तुलया मह्यं. — ^d) Ś1 K2 D3 मांसे (for सा मे).

**24** M1 om. 24 (cf. v.l. 23). — After the ref., K4 ins.:

646* यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते ।
ततः किमुपचारोऽस्य प्रत्यहे क्रियते वृथा ।

— ^ab) K4 °भाषसे (for °याचसे). D1. 2 अनुग्रहं श्येन मन्ये यन्मे मांसं हि याचसे. — ^c) D1. 2 तदद्य (for तस्मात्ते). D1. 2 ते; T1 स्व; T2 G2–4 [ऽ]हं (for ऽद्य).

**25** Ś1 K1. 3. 4 D5 G4 M2 om. the ref. — ^a) Ś1 K D3. 5 उत्कृत्य च स्वमांसानि (K2 तत उत्कृत्य मांसानि); B Dc Dn D4. 6 उत्कृत्य स स्वयं मांसं; D1. 2 एवमुक्त्वा स्वमांसानि. — ^b) D1. 2 समुत्कृत्य स धर्मवित्. — ^c) K2. 4 D1–3. 5 तोलयामास. D1. 2 राजेंद्र (for कौन्तेय). — ^d) Ś1 K3. 4 सहाविभो; K1. 2 सहाभिभोः; B Dc Dn D6 समं विभो; D1. 2 समं यथा; D3 सह प्रभो; D4 समप्रभो; G4 सहाभिभूः.

**26** ^a) B D (except D1–3. 5) कपोतस्तु (for तु तुलया). — ^b) K2. 3 D3. 5 व्यतिरिच्यत. B Dc Dn D4. 6 मांसेनात्यतिरिच्यते. — ^c) D1. 2 भूय° (for पुन°).

**27** ^c) K4 स; M स्वं (for [अ]सौ). Ś1 K1–3 D3. 5 तत उत्कृत्य (Ś1 D3 °त्त-) मांसं स; D1. 2 आरुरोह तदा राजन्. — ^d) K3. 4 D3. 5 G1 transp. स्वयं and तुलां. D1. 2 स्वयमेव तुलां नृप.

**28** ^a) Ś1 K1. 2 D3 राजेंद्र; D1. 2 भद्रं ते (for धर्मज्ञ). — ^b) G1. 2 हव्यवाहनः. — ^c) K4 धर्मेण; B Dn धर्मे त्वां (for धर्मे त्वां). — ^d) Ś1 K1. 2 यज्ञे ते समुपागतौ.

**29** ^b) D1. 2 समुत्कृत्तानि पार्थिव. — ^c) K3. 4 B2 D1–3. 5 G1 भास्वरा; B3 Dc Dn D4. 6 T1 भास्वती; T2 G2–4 M1 शाश्वती. — ^d) D3 अतिचरिष्यति; T G अभि-(G2 °धि)गमिष्यति. D1. 2 लोके स्थास्यति शाश्वती.

**30** ^a) Ś1 K1. 3 त्वा; D1. 2 G1 च (for त्वां). — ^c) D1. 2 तावत्ते शाश्वतो लोकः. — ^d) K3 D5 तपसा शुभाः (for तव शाश्वताः). D1. 2 भविष्यति न संशयः. — After 30, K1. 2 B D (except D1–3. 5) ins.:

647* इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः ।
उशीनरोऽपि धर्मात्मा धर्मेणावृत्य रोदसी ।
विभ्राजमानो वपुषाप्यारुरोह त्रिविष्टपम् ।

[(L. 3) K1 Dn2 D4. 6 प्रारुरोह; Dc2 आरुरोह (for [अ]-प्यारुरोह). B त्रिपिष्टपं.]

**31** All MSS. except D2. 3 om. the ref. — D2. 3 ins. after the ref.: D1, after 30:

648* इत्युक्त्वा तं दानपतिमिन्द्राग्नी तौ तदा नृप ।
पूर्णदेहं स्वकं कृत्वा जग्मतुस्त्रिदशालयम् ।

[(L. 2) D1 स्वर्णदेहत्वचं कृत्वा (for the prior half).]

— ^a) D1. 2 यत् (for तत्). K1. 3. 4 B Dc Dn D3–6 तदेतत्स(K4 एतत्ते स)दनं राजन्. — K3 om. 31^c–32^d. — ^c) D1–3 पश्य च (for पश्यस्व). G4 [ए]नं (for [ए]तन्). — ^d) K1. 2 D3. 5 T G पापप्रणाशनं.

**32** K3 om. 32 (cf. v.l. 31). — ^a) B1 Dn D4. 6 तत्र (for अत्र). D1. 2 S (except G4) [ए]व (for वै). — ^b) D1. 2 T1 G1 M तपोधनाः (for सना°). — ^c) D3 G1 ब्राह्मणा. K1 D1. 2 सार्धं (for राजन्). — ^d) T1 G1. 2 M पुण्यकृद्भिर्. B2 महात्मनः; T G °व्रतैः (for °स्मभिः). Ś1 K (K3 om.) D3 तपोबलसमन्विताः (Ś1 °तैः).

C. 3. 10595
B. 3. 131. 34
K. 3. 133. 35

पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम् ॥ ३१
अत्र वै सततं देवा मुनयश्च सनातनाः ।
दृश्यन्ते ब्राह्मणै राजन्पुण्यवद्भिर्महात्मभिः ॥ ३२

इति श्रीमहाभारते आरण्यकपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

# १३२

लोमश उवाच ।
यः कथ्यते मन्त्रविदग्र्यबुद्धि-
रौद्दालकिः श्वेतकेतुः पृथिव्याम् ।
तस्याश्रमं पश्य नरेन्द्र पुण्यं
सदाफलैरुपपन्नं महीजैः ॥ १
साक्षादत्र श्वेतकेतुर्ददर्श
सरस्वतीं मानुषदेहरूपाम् ।
वेत्स्यामि वाणीमिति संप्रवृत्तां
सरस्वतीं श्वेतकेतुर्बभाषे ॥ २
तस्मिन्काले ब्रह्मविदां वरिष्ठा-
वास्तां तदा मातुलभागिनेयौ ।
अष्टावक्रश्चैव कहोडसूनु-
रौद्दालकिः श्वेतकेतुश्च राजन् ॥ ३
विदेहराजस्य महीपतेस्तौ
विप्रावुभौ मातुलभागिनेयौ ।
प्रविश्य यज्ञायतनं विवादे

Colophon. — *Major parvan :* Ś1 K1. 2 T2 G2–4 M1 आरण्य. — *Sub-parvan :* N T G1. 3 M1 (all om. sub-parvan name) mention only श्येनकपोतीय (Ś1 K1. 2 °कपोतोपाख्यान; D1. 5 लोमशतीर्थयात्रा, followed by श्येनकपोतीय); to श्येनकपोतीय, K4 B1. 4 Dc D1. 2 M1 add समाप्त. — *Adhy. no.* (figures, words or both): K1 36 (= 136); Dn1 130; Dn2. n3 T1 131 (as in text); D1 37; T2 G 132; M1 (erroneously) 120; M2 134. — *Śloka no.:* Dn1 34; Dn2. n3 36; D1 35.

## 132

**1** [a]) K3 B2 T2 G3. 4 यत् (for यः). Ś1 °विदद्य°; K2 Dn D4. 6 °विदग्ध°; B2 Dc2 D5 T G °विदग्र° (for °विदग्र्य°). — [c]) Ś1 K1. 2 D3 तस्याश्रमं पांडव पश्य चेमं; D1. 2 °मं पश्यत पांडवाग्र्याः; S °मं पश्यत पांडवेयाः.

**2** [a]) M2 transp. साक्षात् and अत्र. — [b]) K3 M1 मानुषदेव°; T1 G1 मानुषतुल्य°.

**3** K2 om. 3. — [a]) Ś1 K (K2 om.) B2 D (except Dc2 D1. 5) अस्मिन्. Ś1 K4 D3 उग्रौ; K1. 3 B Dc Dn D4–6 युगे (for काले). K3 धर्मभृतां; Dn1. n3 (*sup. lin.* as in text) D4. 6 ब्रह्मकृतां; Dn2 पुण्यकृतां (for ब्रह्म°). — [b]) N (except D1. 2; K2 om.) मुनी; T G3. 4 तथा; M1 उभौ (for तदा). — [c]) T1 G1 om. एव. Ś1 K1 D3 कहोडपुत्र; S कहोलसूनुर्. — [d]) B1m. 2 Dn D4. 6 पृथिव्यां (for च राजन्); cf. 1[b].

**4** [a]) K4 D1. 2 S समीपतस् (for महीपतेस्). — [b]) K3 वीरा°; S धीरा° (for विप्रा°). — [c]) B4 हि (for वि-). — [d]) S वंदिं. D1. 2 निजग्राह तम् (for °ग्राहतुर्). N (except Ś1 D1. 2) G1 अप्रमेयौ. — K1. 2 B Dc Dn D1. 3. 4. 6 ins. after 4: D2, after 4[ab]: Ś1 K3 D5 ins. lines 1–4 after 5 and lines 5–6 after 6: K4 ins. lines 5–6 after 4 and lines 1–4 after 5:

649* उपास्स्व कौन्तेय सहानुजस्त्वं
तस्याश्रमं पुण्यतमं प्रविश्य ।
अष्टावक्रं यस्य दौहित्रमाहु-
र्योऽसौ बन्दिं जनकस्याथ यज्ञे ।
वादी विप्राग्र्यो बाल एवाभिगम्य [5]
वादे भङ्क्त्वा मज्जयामास नद्याम् ।

[Before line 1, Ś1 K4 D5 read लोमश उ°. — (L. 1) D1. 2 अथात्र (for उपास्स्व), and च (for त्वं). — (L. 2) D2 प्रपश्य. — (L. 4) K4 यः स; D1. 2 यथा च (for योऽसौ). Ś1 D1 जज्ञे; K1 यज्ञं; K3. 4 D5 राज्ञः (for यज्ञे). — (L. 5) Ś1 K3. 4 D1–3. 5 वादे (for वादी). K3 Dc विप्राग्र्यं; D2 °ग्रो; D3 °ग्र्ये. Ś1 K3. 4 D1–3 तमेव यज्ञे निजग्राह बंदिं.]

बन्दिं निजग्राहतुरप्रमेयम् ॥ ४
युधिष्ठिर उवाच ।
कथंप्रभावः स बभूव विप्र-
स्तथायुक्तं यो निजग्राह बन्दिम् ।
अष्टावक्रः केन चासौ बभूव
तत्सर्वं मे लोमश शंस तत्त्वम् ॥ ५
लोमश उवाच ।
उद्दालकस्य नियतः शिष्य एको
नाम्ना कहोडेति बभूव राजन् ।
शुश्रूषुराचार्यवशानुवर्ती
दीर्घं कालं सोऽध्ययनं चकार ॥ ६
तं वै विप्राः पर्यभवंश्च शिष्या-
स्तं च ज्ञात्वा विप्रकारं गुरुः सः ।
तस्मै प्रादात्सद्य एव श्रुतं च
भार्यां च वै दुहितरं स्वां सुजाताम् ॥ ७
तस्या गर्भः समभवदग्निकल्पः
सोऽधीयानं पितरमथाभ्युवाच ।
सर्वां रात्रिमध्ययनं करोषि
नेदं पितः सम्यगिवोपवर्तते ॥ ८
उपालब्धः शिष्यमध्ये महर्षिः
स तं कोपादुदरस्थं शशाप ।
यस्मात्कुक्षौ वर्तमानो ब्रवीषि
तस्माद्वक्रो भवितास्यष्टकृत्वः ॥ ९
स वै तथा वक्र एवाभ्यजाय-
दष्टावक्रः प्रथितो वै महर्षिः ।
तस्यासीद्वै मातुलः श्वेतकेतुः

C. 3. 10609
B. 3. 132. 12
K. 3. 134. 12

---

**5** $^{a}$) Ś$_1$ K$_{1.2}$ विप्र. — $^{b}$) Ś$_1$ K$_2$ तथायुक्तो; K$_{1.4}$ B Dc Dn D$_{3.4-6}$ तथाभूतं; K$_3$ तथाभूर्ति; D$_{1.2}$ तथाभियुक्तं. S वंदिं. — After 5$^{ab}$, S ins.:

650* किं चाधिकृत्याथ तयोर्विवादो
विदेहराजस्य समीप आसीत् ।

— T$_1$ G$_1$ om. 5$^{cd}$. — $^{c}$) Ś$_1$ K$_2$ को नु (for केन). G$_4$ M$_1$ वासौ; M$_2$ वासो (for चासौ). G$_2$ मुनिश्च (for बभूव). — $^{d}$) Ś$_1$ K$_{1.2}$ D$_3$ सर्वं ह्येतत्; K$_4$ तन्मे सर्वं; D$_{1.2}$ सर्वं त्वं मे; T$_2$ G (G$_1$ om.) M$_1$ तत्सर्वं नो; M$_2$ सर्वं तन्नो (for तत्सर्वं मे). T$_2$ G (G$_1$ om.) [आ]चक्ष्व (for शंस). D$_{1.2}$ विप्र; T$_2$ G$_{2.3}$ विद्वन्; G$_4$ सर्वं (for तत्त्वम्).

**6** $^{a}$) D$_{1.2}$ उद्दालकस्यैकशिष्यो विनीतो. — $^{b}$) Ś$_1$ B$_1$ D$_{2.3.5}$ कहोडेति (B$_1$m कहोड इति); K$_2$ B$_{2-4}$ Dc Dn D$_{4.6}$ कहोड इति; K$_3$ कपोडेति; K$_4$ कहोलेति; S कहोळेति. B (B$_1$ marg.) Dn D$_{4.6}$ विश्रुतोभूत् (for बभूव राजन्). — $^{d}$) T$_2$ G$_{1-3}$ om. सः. T$_1$ M हि (for सः).

**7** $^{a}$) K$_{3.4}$ पर्यवदन्; D$_{1.2}$ °हसन्; D$_5$ °चरन्. Ś$_1$ K D$_5$ M$_1$ स; T$_1$ G$_1$ तु (for च). D$_{1.2}$ सुशिष्यं; M$_2$ महात्मा (for च शिष्यास्). B Dc Dn D$_{3.4.6}$ तं वै विप्रः पर्यचरत्स-शिष्यः. — $^{b}$) B Dc Dn D$_{4.6}$ T$_2$ G$_{3.4}$ तां; T$_1$ G$_{1.2}$ M$_2$ तत् (for तं). M चाजानात् (for च ज्ञात्वा). B Dc Dn D$_3$m. $_{4.6}$ T$_2$ G$_3$ परिचर्यां (for विप्रकारं). D$_{1.2}$ ज्ञात्वा विकारं तस्य सर्वं तदानीं. — After 7$^{ab}$, D$_1$ ins.:

651* तस्यैव शिष्यस्य परां च शिष्यतां
ज्ञात्वा विकारांस्तत्सुतायास्तदानीम् ।

— $^{c}$) Ś$_1$ K$_{1.2}$ सर्वम्; T$_1$ सत्य (for सद्य). K$_{1.2}$ द्रुतं (for श्रुतं). — $^{d}$) K$_1$ भार्यां चैव; D$_{2.6}$ भार्यां वै; D$_3$ T$_2$ G$_3$ भार्यार्थं वै; G$_2$ भार्यां चैवं (for भार्यां च वै).

**8** $^{a}$) K$_{3.4}$ B$_1$ Dc Dn$_2$ D$_1$ S (except G$_4$) तस्यां. — $^{b}$) K$_1$ D$_{1.2}$ om. अथ. B Dc Dn D$_{4-6}$ चाप्युवाच; D$_3$ सोभ्युवाच (for अथाभ्यु°). — $^{d}$) Dc$_2$ M इह (for इव). T$_2$ G$_{2-4}$ [अ]भवत्ते (for [उ]पवर्तते). — After 8, K$_1$ B Dc$_2$ Dn$_{1.}$ n$_3$ D$_6$ ins.:

652* वेदान्साङ्गान्सर्वशास्त्रैरुपेता-
नधीतवानस्मि तव प्रसादात् ।
इहैव गर्भे तेन पितर्ब्रवीमि
नेदं त्वत्तः सम्यगिवोपवर्तते ।
[Line 4=(var.) 8$^{d}$.]

**9** $^{b}$) Ś$_1$ K D$_{3.5}$ क्रोधाद् (for कोपाद्). — $^{c}$) T$_2$ G वक्रं वर्धं° (G$_1$ क्रुद्धो वर्तं°) (for कुक्षौ वर्तं°). — $^{d}$) Ś$_1$ K$_2$ G$_1$ अष्टवक्रः; T$_1$ अष्टधैव (for अष्टकृत्वः).

**10** $^{a}$) G$_2$ पितृशापाद् (for वक्र एव). K$_4$ Dc D$_3$ [अ]भिजज्ञे; G$_2$ [अ]जायद् (for [अ]भ्यजायद्). — $^{b}$) K$_4$ Dc D$_3$ त्वष्टा° (for अष्टा°). M$_2$ कथितो (for प्रथितो). D$_3$ ब्राह्मणेषु; S मानवेषु (for वै महर्षिः). — $^{c}$) B$_{1-3}$ Dc D$_{2.4.6}$ अस्य; T$_1$ G$_1$ M$_2$ तथा; M$_1$ यथा (for तस्य). S [अ]प्या(T$_1$ ह्यस्या-; G$_1$ M [अ]स्या)सीन् (for [आ]सीद्वै). — $^{d}$) K$_4$ संबभूव; S वै ब° (for ब°).

**11** $^{a}$) D$_{1.2}$ सा (for सं-). Dc D$_{1.2}$ [अ]थ (for तु). Ś$_1$ K Dc D$_{1-3}$ M$_2$ ततः; G$_4$ तथा (for तदा). T$_1$ स्म

C. 3. 10609
B. 3. 132. 12
K. 3. 134. 12

स तेन तुल्यो वयसा बभूव ॥ १०

संपीड्यमाना तु तदा सुजाता
विवर्धमानेन सुतेन कुक्षौ ।
उवाच भर्तारमिदं रहोगता
प्रसाद्य हीनं वसुना धनार्थिनी ॥ ११

कथं करिष्याम्यधना महर्षे
मासश्चायं दशमो वर्तते मे ।
न चास्ति ते वसु किंचित्प्रजाता
येनाहमेतामापदं निस्तरेयम् ॥ १२

उक्तस्त्वेवं भार्यया वै कहोडो
वित्तस्यार्थे जनकमथाभ्यगच्छत् ।
स वै तदा वादविदा निगृह्य
निमज्जितो बन्दिनेहाप्सु विप्रः ॥ १३

उद्दालकस्तं तु तदा निशम्य
सूतेन वादेऽप्सु तथा निमज्जितम् ।
उवाच तां तत्र ततः सुजाता-
मष्टावक्रे गूहितव्योऽयमर्थः ॥ १४

ररक्ष सा चाप्यति तं सुमन्त्रं
जातोऽप्येवं न स शुश्राव विप्रः ।
उद्दालकं पितृवच्चापि मेने
अष्टावक्रो भ्रातृवच्छ्वेतकेतुम् ॥ १५

ततो वर्षे द्वादशे श्वेतकेतु-
रष्टावक्रं पितुरङ्के निषण्णम् ।
अपाकर्षद्गृह्य पाणौ रुदन्तं
नायं तवाङ्कः पितुरित्युक्तवांश्च ॥ १६

यत्तेनोक्तं दुरुक्तं तत्तदानीं
हृदि स्थितं तस्य सुदुःखमासीत् ।
गृहं गत्वा मातरं रोदमानः
पप्रच्छेदं क्व नु तातो ममेति ॥ १७

ततः सुजाता परमार्तरूपा

---

माता (for सुजाता). — [b]) B Dc Dn $D_{4-6}$ $T_{2}$ $G_{3}$ सा; $D_{1.2}$ प्र- (for वि-). — [c]) $T_{1}$ $G_{1.2.4}$ वचो रहः (for रहोगता). — [d]) $T_{1}$ $G_{2.4}$ $M_{1}$ हीना (for हीनं). $Ś_{1}$ $K_{1}$ वसु नाम चार्थिनी.

**12** [a]) $K_{4}$ $B_{1}$ $Dn_{2}$. $n_{3}$ $D_{1.2}$ अधुना (for अधना). — [c]) $B_{2}$ Dn $D_{4.6}$ $T_{2}$ $G_{3}$ [ए]व (for च). $K_{2}$ $B_{4}$ $T_{1}$ $G_{2.4}$ $M_{1}$ मे (for ते). $K_{3}$ तव; $D_{2}$ $T_{1}$ $G_{1}$ वस्तु (for वसु). $B_{1.4}$ (m as in text) प्रदातुं; Dc सुजाता; $D_{1}$ $T_{1}$ प्रजातं; $D_{2}$ प्रसूता; $T_{2}$ (m as in text) $G_{2}$ प्रदाता. $K_{4}$ $M_{2}$ न चास्ति किंचिद्वसु ते (M₂ मे) प्रजाता. — [d]) $B_{1}$ $G_{4}$ $M_{2}$ एनाम् (for एताम्).

**13** [a]) $K_{4}$ चैवं; $T_{2}$ स्वयं; $G_{3}$ त्वेकं; $G_{4}$ त्वयं (for त्वेवं). $D_{1}$ जायया (for भार्यया). S कहोळो. — [b]) $G_{1}$ वित्तार्थी सन् (for वित्तस्यार्थे). — [c]) $Ś_{1}$ $K_{2.3}$ $D_{1-3}$ तथा; $T_{2}$ G जल्पन् (for तदा). Dc वेदविदा; $T_{2}$ $G_{2-4}$ वाग्विदा वै. — [d]) A few S MSS. वंदिना. $K_{1}$ चाप्सु; $D_{1}$ [इ]हास्य; S ह्यप्सु ($M_{2}$ [ए]वाप्सु) (for [इ]हाप्सु). $Ś_{1}$ $K_{1.2}$ पुत्र (for विप्रः).

**14** [a]) $Ś_{1}$ lacuna; K Dc $D_{1-3.5}$ तथा (for तदा). — [b]) $K_{1}$ Dc $G_{1}$ वादेन (for वादेऽप्सु). $K_{3}$ Dn $D_{4.6}$ transp. तथा and निमज्जितं. $T_{1}$ ततो; $T_{2}$ $G_{2-4}$ तदा (for तथा). $K_{4}$ B Dc $D_{1-3.5}$ निमज्जितं तदा ($K_{4}$ $D_{5}$ °तं च; $D_{1-3}$ °तं वै); $G_{1}$ निमज्जती तं (for तथा नि°). — [d]) $Ś_{1}$ K $D_{5}$ अष्टावक्रे नायमर्थो निवेद्यः.

**15** [a]) $Ś_{1}$ $K_{1.2}$ तथा; $K_{3.4}$ $D_{5}$ ततः; $T_{1}$ $G_{1.2}$ अनिशं; $T_{2}$ $G_{3}$ उदितं; $M_{1}$ अथ तं; $M_{2}$ अधिकं (for अति तं). $D_{1.2}$ M स्म (for सु-). B Dc Dn $D_{3.4.6}$ तमस्य (for [अ]ति तं सु-). — [b]) $D_{1.2}$ $T_{1}$ $G_{1}$ हि (for ऽपि). B D (except $D_{5}$) $M_{2}$ असौ; $T_{1}$ $G_{1}$ $M_{1}$ एनं; $G_{2}$ उदंतं (for एवं). B D (except $D_{5}$) $T_{1}$ $M_{2}$ नैव; $T_{2}$ $G_{3}$ तन्न; $G_{1.2.4}$ न च (for न स). — [c]) $D_{1-3}$ वै पितरं स; M पितरं सोभि- (for पितृवच्चापि). — [d]) B D (except $D_{1-3}$) तथाष्टा° (for अष्टा°). $D_{1-3}$ M भ्रातरं (for भ्रातृवत्).

**16** [b]) $K_{4}$ त्वष्टा° (for अष्टा°). — [c]) $Ś_{1}$ $K_{1.2}$ अपाकृष्यद्; $D_{1.2}$ उपाकर्षद्. $Ś_{1}$ $K_{1.2}$ गृह्यमाणो (for गृह्य पाणौ). — [d]) $Ś_{1}$ $K_{1.2}$ $T_{1}$ $G_{1.4}$ इत्युवाच; $K_{3.4}$ $D_{1.3.4}$ (om. इति) उक्तवांश्च; $D_{2}$ आवर्तमानः.

**17** [a]) S (except $T_{1}$) तत् (for यत्). $Ś_{1}$ $K_{2}$ द्वारतस्तत्; $K_{1.4}$ $D_{1.2.5}$ दुरितं तत्; S दुश्चरितं (for दुरुक्तं तत्). — [b]) $K_{4}$ तु; $G_{2}$ तद् (for सु-). M हृदि स्थितं शल्यमिवातिविद्धं ($M_{2}$ °दुःखं). — [c]) $K_{3}$ पृच्छमानः; B Dc Dn $D_{4.6}$ सोभिगम्य; $D_{1.2}$ $M_{2}$ सोथ राजन्; $D_{3}$ सोभिवाद्य; T G सोथ विप्रः (for रोदमानः). $M_{1}$ गत्वा गृहं रोदमानो जनित्रीं.

**18** [b]) S तत्त्वमस्या° (for सर्वमेवा°). — [c]) $K_{4}$ Dc

शापाद्भीता सर्वमेवाचचक्षे ।
तद्वै तत्त्वं सर्वमाज्ञाय मातु-
रित्यब्रवीच्छ्वेतकेतुं स विप्रः ॥ १८
गच्छाव यज्ञं जनकस्य राज्ञो
बह्वाश्चर्यः श्रूयते तस्य यज्ञः ।
श्रोष्यावोऽत्र ब्राह्मणानां विवाद-
मन्नं चाग्र्यं तत्र भोक्ष्यावहे च ।
विचक्षणत्वं च भविष्यते नौ
शिवश्च सौम्यश्च हि ब्रह्मघोषः ॥ १९
तौ जग्मतुर्मातुलभागिनेयौ
यज्ञं समृद्धं जनकस्य राज्ञः ।
अष्टावक्रः पथि राज्ञा समेत्य
उत्सार्यमाणो वाक्यमिदं जगाद ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

# १३३

अष्टावक्र उवाच ।
अन्धस्य पन्था बधिरस्य पन्थाः
स्त्रियः पन्था वैवधिकस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य
समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ १
राजोवाच ।
पन्था अयं तेऽद्य मया निसृष्टो
येनेच्छसे तेन कामं व्रजस्व ।

C. 3. 10622
B. 3. 133. 2
K. 3. 135. 2

transp. तत्त्वं and सर्वं. Ś1 आदाय; G1 आख्याय (for आज्ञाय). B Dn D4. 6 T1 G1. 2 रात्रौ; T2 G3. 4 मात्रा (for मातुर्).

**19** b) T2 G3. 4 ह्याश्चर्यं वा (for बह्वाश्चर्यः). D1-3 G1 M2 चास्य; T2 G2-4 M1 ह्यस्य (for तस्य). K3 T2 G3. 4 राज्ञः (for यज्ञः). — c) Dc प्रेक्षावस्तत्र; S श्रोष्यावहे (for श्रोष्यावोऽत्र). K3. 4 D1-3 M1 विवादान् (for °दम्). — d) Dn D4. 6 अर्थं; D5 ज्ञानं (for अन्नं). Ś1 K1-3 D1-3 M2 भोक्ष्याव विप्र (M2 तात); D5 श्रोष्यावहे च.

**20** d) N प्रोत्सा° (for उत्सा°). S बभाषे (for जगाद).

Colophon om. in Ś1 K1-3 D5. — *Major parvan :* T2 G2-4 M1 आरण्य. — *Sub-parvan :* K4 D1 (both om. sub-parvan name) mention only लोमशतीर्थयात्रा, followed by अष्टावक्रीय; B Dc Dn1. n3 D2-4. 6 T G1. 3 M2, likewise, only अष्टावक्रीय (G1 °वक्रोपाख्यान). — *Adhy. no.* (figures, words or both): Dn1 131; Dn2. n3 T1 132 (as in text); D1 138; T2 G M1 133; M2 135. — *Śloka no.:* Dn1. n3 23; Dn2 D1 22.

## 133

**1** Cf. Āpastamba Dharma Sūtra 2. 5. 11. 5-7 (Kashi Skt. Series, Benares, 1932). — a) G1. 2 M1. 2 (*sup. lin.* as in text) स्थविरस्य (for बधि°). — b) K4 D1 स्त्रियश्च; B1. 3 Dc स्त्रियाश्च; B2 Dn2 D3 स्त्रियाः (for स्त्रियः). K4 विकलस्य; B Dc Dn D3m. 4. 6 T2 G3 भारवाहस्य (D3 orig. वेत्रधिकस्य); D1. 5 वधिकस्य; G2. 4 M वै पथिकस्य (for वैव°). — c) Dn1. n3 D5 ब्राह्मणानां समेत्य; D1-3 ब्राह्मणानां च पंथाः.

**2** a) T2 (before corr.) G4 अध्वा (for पन्था). Ś1 K B Dc D4 [अ]तिसृष्टो; Dn [अ]तिदिष्टो; M विसृष्टो (for निसृष्टो). D1. 2. 3m पंथा मया तेयमथावसृष्टो (D3 orig. पंथा विप्रो वदति तथैव तद् ध्रुवं). — b) B1. 3. 4 Dn D4. 6 [इ]च्छसि. — c) Ś1 K1. 2 ब्राह्मणेभ्यो (for पावको). Ś1 K2 बलीयान्; K1 गरी° (for लघी°). — d) T2 G2. 4 om. अपि. Dc सं- (for नित्यं). — After 2, S ins.:

653* लोमशः ।
स एवमुक्तो मातुलेनैव सार्धं
यथेष्टमार्गो यज्ञनिवेशनं तत् ।
धर्मेण संप्राप्य निवारितः स-
न्द्वारि द्वाःस्थं वाक्यमिदं बभाषे ।
[(L. 1) T1 G1 M2 om. स.]

**3** a) D1. 2 स राजन्; G1 स तात (for स्व तात). Ś1 K1-3. 4m Dc2 D3. 5 प्राप्तौ स्व (K1. 2 सु-) यज्ञं तव

C. 3. 10622
B. 3. 133. 2
K. 3. 135. 2

न पावको विद्यते वै लघीया-
निन्द्रोऽपि नित्यं नमते ब्राह्मणानाम् ॥ २

अष्टावक्र उवाच ।

यज्ञं द्रष्टुं प्राप्तवन्तौ स्व तात
कौतूहलं नौ बलवद्वै विवृद्धम् ।
आवां प्राप्तावतिथी संप्रवेशं
काङ्क्षावहे द्वारपते तवाज्ञाम् ॥ ३
ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां
विवक्षू वै जनकेन्द्रं दिदृक्षू ।
न वै क्रोधाद्व्याधिनैवोत्तमेन
संयोजय द्वारपाल क्षणेन ॥ ४

द्वारपाल उवाच ।

बन्देः समादेशकरा वयं स्म
निबोध वाक्यं च मयेर्यमाणम् ।
न वै बालाः प्रविशन्त्यत्र विप्रा
वृद्धा विद्वांसः प्रविशन्ति द्विजाग्र्याः ॥ ५

अष्टावक्र उवाच ।

यद्यत्र वृद्धेषु कृतः प्रवेशो
युक्तं मम द्वारपाल प्रवेष्टुम् ।
वयं हि वृद्धाश्चरितव्रताश्च
वेदप्रभावेन प्रवेशनार्हाः ॥ ६
शुश्रूषवश्चापि जितेन्द्रियाश्च
ज्ञानागमे चापि गताः स्म निष्ठाम् ।
न बाल इत्यवमन्तव्यमाहु-
र्बालोऽप्यग्निर्दहति स्पृश्यमानः ॥ ७

द्वारपाल उवाच ।

सरस्वतीमीरय वेदजुष्टा-
मेकाक्षरां बहुरूपां विराजम् ।
अङ्गात्मानं समवेक्षस्व बालं
किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ८

---

संदिदृक्षू ($K_4$ orig. प्राप्तावात्वां तव यज्ञं दिदृक्षू); B $Dc_1$ Dn $D_{4.6}$ प्राप्तौ स्व यज्ञं नृप सं($B_1$ $Dn_2$ नृपतिर्)दिदृक्षू. — b) T G om. नौ. $M_1$ transp. नौ and बलवत्. N $M_1$ om. वै. $G_4$ transp. बलवत् and वै. N नरेंद्र (for विवृद्धम्). — c) $Ś_1$ K $D_5$ $M_1$ transp. आवां and प्राप्तौ. $D_{1.2}$ ins. हि after आवां. $K_3$ M संप्रवेशे; $D_{1.3}$ त्वत्सकाशं; T G संप्रवेष्टुं. B Dc Dn $D_{4.6}$ प्राप्ताविहावामतिथी प्रवेशं. — d) $Ś_1$ $K_{1.2}$ B D (except Dc) द्वारपतेस्; $K_4$m द्वारपाले.

**4** a) N $T_2$ $G_{3.4}$ ऐंद्रद्युम्ने. — b) $Dn_2$ जनकं वै; $G_4$ जनकं तं (for जनकेन्द्रं). $D_{1.2}$ विवक्षू वै जनकं संप्रयातौ. — c) $M_2$ मा (for न). $T_3$ क्रुद्धो; $G_1$ क्रुद्धौ (for क्रोधाद्). $Ś_1$ व्यधनेन; $K_2$ वाधनेन (for व्याधिनैव). $K_{1.3.4}$ B Dc Dn $D_{1-4.6}$ तौ वै ($K_{1.4}$ $D_3$ तव; $K_3$ स च; $D_{1.2}$ आवां) क्रोधव्याधिना दह्यमानौ. — d) $Ś_1$ $K_2$ $D_5$ संयोजये. $M_1$ ins. [आ]वां after °योजय. $Ś_1$ $K_2$ द्वारपाले. $M_2$ क्षणे त्वा (for क्षणेन). $K_{1.3.4}$ B Dc Dn $D_{1-4.6}$ वयं ($K_1$ $D_{1.3}$ अयं; $K_3$ स्वयं; $K_4$ आवां) च नौ द्वारपालो रुणद्धि. — After 4, $D_{1.2}$ ins.:

654* मा च त्वमावां व्याधिना तप्यमाना-
वभिभू त्वं बालकौ बालिशौ च ।
समायातौ मातुलभागिनेयौ
संमोक्तव्यौ द्वारपाल क्षणेऽस्मिन् ।

**5** a) $Ś_1$ B Dc $D_{4.6}$ $T_2$ $G_{2.3}$ M वंदेः; $K_{1.2.4}$ Dn $D_5$ $T_1$ $G_4$ वंदे. $Ś_1$ $K_{1-3}$ स्मः; $D_3$ हि; $D_5$ भो (for स्म). — b) $K_3$ तं वाक्यं (for वाक्यं च). T G मयेरितं त्वं (for मयेर्य°). $B_4$ M निबोध तद्वा($M_2$ तं वा)क्यमितोधिगम्य. — c) $Ś_1$ K $D_3$ विप्र; $G_4$ वृद्धा (for विप्रा). $D_1$ ममैव वाक्यं च ततोधिगम्य. — d) $D_1$ न वै; $G_4$ विप्रा (for वृद्धा). $K_4$ $D_3$ विद्वांसश्च; B Dn $D_{4.6}$ विदग्धाः; $D_1$ बालाः; $D_2$ ये स्युः; S ह्यत्र (for विद्वांसः). B Dn $D_{4.6}$ [अ]त्र विप्राः (for द्विजाग्र्याः). — After 5, $Ś_1$ $K_{1.2}$ ins. a colophon.

**6** b) T G $M_1$ मया (for मम). B Dn $D_{2.4.6}$ $M_2$ युक्तं प्रवेष्टुं मम द्वारपाल. — d) $Ś_1$ K $D_{1.3}$ वे($D_1$ वा)दप्रवादेन; $D_5$ M वेद($M_1$ देव)प्रतापेन; T G तपःप्रभावे($G_4$ °वेशे)न. $B_{1-3}$ Dn $D_{4.6}$ समन्विताश्च; T G निवेशनार्हाः.

**7** b) T G ज्ञानागमैश्च. $D_{1.2}$ M चैव (for चापि). $D_1$ गताश्च (for गताः स्म). M परे निविष्टाः (for गताः स्म निष्ठाम्). — c) $Ś_1$ $K_{1.2}$ B $Dn_1$ $D_5$ $T_1$ G इत्येव (for इत्यव-). — d) $Ś_1$ $K_2$ हि (for ऽपि). S दहते.

**8** a) $K_4$ $T_1$ $G_{1.2.4}$ ईरयन्; $M_1$ ईरयेर्; $M_2$ ईरयेद् (for ईरय). $Dn_2$ $M_1$ देव° (for वेद°). — b) $Ś_1$ K $D_5$ हि विप्र; $T_1$ विजानन्; $G_1$ विजानात्; $M_1$ विराजन् (for विराजम्). — d) B Dc Dn $D_{4.6}$ दुर्लभो ($B_1$ °र्बलो) वै मनीषी.

अष्टावक्र उवाच।

न ज्ञायते कायवृद्ध्या विवृद्धि-
र्यथाष्ठीला शाल्मलेः संप्रवृद्धा।
ह्रस्वोऽल्पकायः फलितो विवृद्धो
यश्चाफलस्तस्य न वृद्धभावः॥ ९

द्वारपाल उवाच।

वृद्धेभ्य एवेह मतिं स्म बाला
गृह्णन्ति कालेन भवन्ति वृद्धाः।
न हि ज्ञानमल्पकालेन शक्यं
कस्माद्बालो वृद्ध इवावभाषसे॥ १०

अष्टावक्र उवाच।

न तेन स्थविरो भवति येनास्य पलितं शिरः।
बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः॥ ११

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥ १२

दिदृक्षुरस्मि संप्राप्तो बन्दिनं राजसंसदि।
निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने॥ १३

द्रष्टास्यद्य वदतो द्वारपाल
मनीषिभिः सह वादे विवृद्धे।
उताहो वाप्युच्चतां नीचतां वा
तूष्णीं भूतेष्वथ सर्वेषु चाद्य॥ १४

द्वारपाल उवाच।

कथं यज्ञं दशवर्षो विशेस्त्वं
विनीतानां विदुषां संप्रवेश्यम्।
उपायतः प्रयतिष्ये तवाहं
प्रवेशने कुरु यत्नं यथावत्॥ १५

C. 3. 10636
B. 3. 133. 16
K. 3. 135. 17

---

**9** a) D1. 2 न सा वृद्धिर्या च कायस्य वृद्धिः. — b) G2 M शल्मलेः. Ś1 K1. 2 यथा वने शल्मलिः संप्रवृद्धः; Dc D1 T1 G4 यथाष्ठीलाः शाल्मलेः संप्रवृद्धाः. — c) T2 G2–4 यश्च (for ह्रस्वो). M [ऽ]ल्पको यः (for ऽल्पकायः). D1 सुप्रवृद्धो; D2 T2 G3 संप्रवृद्धो; T1 G1. 4 स वृक्षो; G2 M स वृद्धो (for विवृद्धो). — d) K1 यच्चा°; B1 T1 यथा°; D1 यस्मा° (for यश्चा°). T2 G1–3 M1 नो (for न).

**10** G1 om. the ref. B1 Dc1 द्वाःस्थ उ°. — a) Ś1 K1–3 एवेत्य (for एवेह). T2 (after corr.) G3 मतीस्; G4 मतिस्. Ś1 K1. 2 सु-; D1 च; T2 G3. 4 तु (for स्म). — c) T1. 2 (before corr.) G1. 2. 4 ज्ञातुम् (for ज्ञानम्). Ś1 K1 D2 अल्पजातेन; K3. 4 Dc D1. 3 °वीर्येण. — d) Ś1 K1–3 प्रज्ञ; K4 D3 M प्राज्ञ; B Dc Dn D1. 3. 4–6 स्थविर (for वृद्ध). Ś1 K1–3 D1. 2 T2 G3 [आ]बभाषे; K4 B1 Dc D3 T1 G1 M [अ]भिभाषसे; Dn D4–6 प्रभाषसे (for [अ]वभाषसे).

**11** =(var.) Manu 2. 156. — a) Hypermetric! Ś1 K1. 3 D1. 2 वृद्धो (for स्थविरो). K4 D3 स स्याद् (for भवति). — c) D1. 2 यो वै युवाप्यधीयानः (cf. Manu, *loc. cit.*).

**12** =Manu 2. 154. — b) Dc D1 S (except M2) वित्तैर्न च (for वित्तेन न).

**13** b) S (mostly) वंदिनं. — c) T2 G3. 4 विद्वन्; many MSS. द्वास्थ (for द्वाःस्थ).

**14** a) K4 द्दयसेद्य (for द्रष्टा°). G2. 4 ह्यद्य (for [अ]द्य). Ś1 ब्रुवतो; T1 G1. 2. 4 [आ]वयोर् (for वदतो). T2 G3 ins. अस्मान् after वदतो (anuṣṭubh rhythm); see below B D. K1 द्रष्टास्यत्येभ्यक्ष्यते द्वारपाल. — For $14^{ab}$, B D subst. (changing over to anuṣṭubh rhythm):

655* द्रष्टास्यद्य वदतोऽस्मान्द्वारपाल मनीषिभिः।
सह वादे विवृद्धे तु बन्दिनं चापि निर्जितम्॥

[(L. 1) D1. 2 द्रष्टव्योत्र महाप्राज्ञ. — (L. 2) D1. 2 उच्चताप्यथ नीचता.]

— K4 T2 G3 ins. after $14^{ab}$: B D (except D1. 2) ins. after 655*:

656* पश्यन्तु विप्राः परिपूर्णविद्याः
सहैव राज्ञा सपुरोधमुख्याः।

[(L. 2) K4 सपुरोहितेन (for सपुरोध°).]

— D1. 2 om. $14^{cd}$. — c) M1 स्विद् (for वापि). — d) B1 S [ए]षु; B2–4 Dn D4–6 [ए]व (for [अ]थ). Ś1 चास्य; B Dn D4. 6 T2 G (G1 corrupt) [अ]थाद्य; T1 चाथ; M [अ]थो वै (for चाद्य).

**15** T G2. 3 द्वास्थः (for द्वारपाल उ°). — a) D1. 2 [ऽ]द्य विप्र (for विशेस्त्वं). — After $15^{a}$, D1. 2 ins.:

657* प्रवेक्ष्यसे बन्दिनं नानुमन्य।

— b) Ś1 K1. 2 संप्रविश्यं; B Dc2 Dn D4–6 T2 G1. 3 M संप्रवेशं; T1 G2. 4 संप्रवेशः. D1. 2 विनीतानां स्थविराणां प्रविश्यं. — T1 om. $15^{cd}$; D1 om. $15^{d}$. — T2 G2–4 M1 ins. after 15: T1 (which om. $15^{cd}$) ins. after

C. 3. 10637
B. 3. 133. 17
K. 3. 135. 19

अष्टावक्र उवाच ।

भो भो राजञ्जनकानां वरिष्ठ
सभाज्यस्त्वं त्वयि सर्वं समृद्धम् ।
त्वं वा कर्ता कर्मणां यज्ञियानां
ययातिरेको नृपतिर्वा पुरस्तात् ॥ १६

विद्वान्बन्दी वेदविदो निगृह्य
वादे भग्नानप्रतिशङ्कमानः ।
त्वया निसृष्टैः पुरुषैराप्तकृद्भि-
र्जले सर्वान्मज्जयतीति नः श्रुतम् ॥ १७

स तच्छ्रुत्वा ब्राह्मणानां सकाशा-
द्ब्रह्माद्वैतं कथयितुमागतोऽस्मि ।
क्वासौ बन्दी यावदेनं समेत्य
नक्षत्राणीव सविता नाशयामि ॥ १८

राजोवाच ।

आशंससे बन्दिनं त्वं विजेतु-
मविज्ञात्वा वाक्यबलं परस्य ।
विज्ञातवीर्यैः शक्यमेवं प्रवक्तुं
दृष्टश्चासौ ब्राह्मणैर्वादशीलैः ॥ १९

अष्टावक्र उवाच ।

विवादितोऽसौ न हि मादृशैर्हि

---

$15^{ab}$:

658* एष राजा संश्रवणे स्थितस्ते
स्तुह्येनं त्वं वचसा संस्कृतेन ।
स चानुज्ञां दास्यति प्रीतियुक्तः
प्रवेशने यच्च किंचित्तवेष्टम् ।

**16** $^{b}$) $K_{1.2.4}$ $D_1$ सभार्यस्त्वं; $K_3$ $D_{2.3}$ (before corr.) सभाग्यस्त्वं; B Dn $D_{3.4.6}$ $T_2$ $G_3$ त्वं वै सम्राट्; Dc सम्राट् त्वं वै; $T_1$ $G_1$ सुसाम्राज्यं; $T_2$ (before corr.) $G_4$ साम्राज्यं यत्; $G_2$ साम्राज्यं वै; $M_1$ सम्राट् त्वं; $M_2$ साम्राज्यं त्वं (for सभाज्यस्त्वं). — $^{c}$) Dc $D_{1.2}$ M वै (for वा). $T_2$ $G_{2.3}$ M याज्ञियानां.

**17** $^{a}$) $K_{1.2}$ (by transp.) बंदी विद्वान्; $Dn_1$. $n_3$ $D_2$ वृद्धान्बंदी. S (mostly) वंदी. $K_4$ B D (except $D_{1-3.5}$). $T_2$ (before corr.) $G_3$ वाद° (for वेद°). $K_{1.2}$ विगृह्य. — $^{b}$) $D_2$ रुग्णान् (for भग्नान्). $D_1$ $T_1$ $G_1$ वादे न ($D_1$ तु) भग्नान्प्रति°. — $^{c}$) $Ś_1$ $K_{1-3}$ $D_3$ सृष्टैः; B Dc Dn $D_{4.6}$ [अ]भिसृष्टैः; $D_{1.2}$ $T_2$ $G_{3.4}$ वि°; $D_5$ [अ]नु° (for नि°).

**18** $^{a}$) B $D_{4.6}$ $M_2$ स तं ($B_2$ सुतं); Dc $T_2$ $G_{2-4}$ एतत्; Dn सोहं; $T_1$ $G_1$ तदहं; $M_1$ तद्वै (for स तत्). $D_{1.2}$ ततोहं वै (for स तच्छ्रुत्वा). $B_{1.3}$ $D_1$ T G समीपे; $B_{2.4}$ Dn $D_{4.6}$ सकाशे; M समीपाद् (for सकाशाद्). — $^{b}$) $Ś_1$ $K_4$ $D_{1.2}$ $T_1$ $G_1$ ब्रह्माद्य वै; $K_1$ ब्रह्मादिभिः; $K_{2.3}$ $B_4$ Dn $D_{4.6}$ ब्रह्माद्वैतं; $B_2$ ब्रह्मद्वैतं; $D_3$ $T_2$ $G_{2-4}$ ब्रह्माद्यं वै; $D_5$ ब्रह्मग्नं वै. $D_{1.2}$ शंसितुम् (for कथयितुम्). — $^{c}$) S वंदी.

**19** $K_1$ om. the ref. $D_{1.2}$ जनक उ°. — $^{a}$) $K_2$ B Dn $D_{4-6}$ $T_1$ वै (for त्वं). — $^{b}$) $K_1$ सोविज्ञात्वा; $K_2$ $B_{2-4}$ Dc Dn $D_{4-6}$ अविज्ञाय त्वं; $B_1$ $D_1$ अविज्ञाता; $D_2$ अविज्ञाय; $T_1$ $G_1$ विज्ञाय वा (for अविज्ञात्वा). Dc वाक्यवरं; $G_2$ वादबलं. T $G_{2.3}$ M त्वमस्य; $G_1$ त्वमस्मि (for परस्य). $K_4$ अविज्ञाय वाक्यं च बलं परस्य; $G_4$ अज्ञाय वाक्यं च बलं त्वमस्य. — $^{c}$) $T_2$ $G_{2-4}$ अज्ञात° (for विज्ञात°). Dc वाक्य° (for शक्य°). — $^{d}$) $K_4$ $Dc_1$ Dn $D_{4.6}$ $T_1$ $G_1$ वेद° (for वाद°). — After 19, $K_4$ $B_{2-4}$ Dc Dn $D_{4.5}$ (marg.).$_6$ T G ins.:

659* आशंससे त्वं बन्दिनं वै विजेतु-
मविज्ञात्वा तु बलं बन्दिनोऽस्य ।
समागता ब्राह्मणास्तेन पूर्वं
न शोभन्ते भास्करेणेव ताराः ।
आशंसन्तो बन्दिनं जेतुकामा- [5]
स्तस्यान्तिकं प्राप्य विलुप्तशोभाः ।
विज्ञानमत्ता निःसृताश्चैव तात
कथं सदस्यैर्वचनं विस्तरेयुः ।

[Lines 1–2 = (var.) $19^{ab}$. — (L. 1) $B_4$ $D_5$ $T_1$ आशंसमानो; $T_2$ G °माना (for °से त्वं). T G कुमारः (for विजेतुम्). — (L. 2) $B_2$ अविज्ञाय. $K_4$ $D_5$ ते बलं; $B_4$ वाग्बलं. $K_4$ $D_5$ हि (for ऽस्य). $T_1$ अविज्ञाना वंदिना हंत जेतुं; $T_2$ G अविज्ञानात्ते ह्य($G_1$ °त्तम)शक्ता विजेतुं. — (L. 3) $K_4$ $D_5$ संघशस्ते (for तेन पूर्वं). — (L. 5) T G आशानुबंधो हि तवात्र यत्नः ($G_{1.2}$ यत्तत्). — (L. 6) T G स वंदिमासाद्य तथा विनश्यति ($T_1$ °द्य सदोधिगच्छेत्; $G_1$ °द्य सदोथ गच्छेत्; $G_4$ °द्यं तवाद्य नश्यति). — (L. 7) $K_4$ $D_5$ विज्ञानवंतो निभृताश्च तात; T G विज्ञानवंतो निकृतास्तु ($T_1$ $G_1$ °ता यत्र) तात. — (L. 8) $K_4$ $D_5$ कथं सदसि त्वमिमं वै समर्थः; T G कथं सदस्तर्तुमिदं समर्थः.]

**20** $^{a}$) Dc $D_{1.2}$ न नु; S (except $G_1$) न तु. $D_{1.2}$ मादृशेन; $T_2$ $G_{3.4}$ मादृशैरिह. — $^{b}$) $Ś_1$ $K_{1.2.4}$ $D_3$ सोहंकृतस्; $D_{1.2}$ नांगी°; $G_4$ डंभी°. $D_{1.2}$ तैश्च (for तेन). — $^{d}$) $Ś_1$ $K_{1.2}$ B Dc Dn $D_{3-6}$ इवाचलाक्षं (for इवाब°). $K_3$

सिंहीकृतस्तेन वदत्यभीतः ।
समेत्य मां निहतः शेष्यतेऽद्य
मार्गे भग्नं शकटमिवाबलाक्षम् ॥ २०
राजोवाच ।
षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ २१
अष्टावक्र उवाच ।
चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ २२
राजोवाच ।
वडवे इव संयुक्ते श्येनपाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ २३
अष्टावक्र उवाच ।
मा स्म ते ते गृहे राजञ्शात्रवाणामपि ध्रुवम् ।
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् ॥ २४
राजोवाच ।
किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति ।
कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ॥ २५
अष्टावक्र उवाच ।
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ २६
राजोवाच ।
न त्वा मन्ये मानुषं देवसत्त्वं
न त्वं बालः स्थविरस्त्वं मतो मे ।
न ते तुल्यो विद्यते वाक्प्रलापे
तस्माद्द्वारं वितराम्येष बन्दी ॥ २७

C. 3. 10650
B. 3. 133. 30
K. 3. 135. 32

इति श्रीमहाभारते आरण्यकपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

$D_{1.2}$ $M_1$ मार्गौ भग्नः शकट इवाबलाक्षः.

**21** [a]) N त्रिंशकद्वादशांग($Ś_1$ $K_{1.2}$ $D_5$ °शार-; B Dn °शांश)स्य; $T_1$ $G_1$ षण्णाभेर्द्वादशारस्य. — [d]) $G_{2.4}$ वरः (for परः).

**22** $M_1$ om. (hapl.) 22–23. — [a]) $Ś_1$ $K_{1.2}$ °पर्वार्धं; $K_3$ $M_2$ °पर्व त्वा; $K_4$ $D_5$ °पर्व तु; $D_{1.2}$ °पर्वाद्यं; $D_3$ $G_2$ °पर्व त्वं; T $G_{1.3.4}$ °पर्वत्वात्. — [b]) $K_1$ द्वादशाप्रति; $T_1$ $G_4$ $M_2$ द्वादशः पथि; $G_1$ द्वादशः प्रथिः; $G_2$ द्वादशप्रथि. — [c]) $Ś_1$ $K_{2.3}$ Dc $D_3$ च; $K_1$ मे; $K_4$ $D_1$ वतं; $D_2$ त्वं (for वै). — [d]) MSS. °गतिः, °गतिं also.

**23** $M_1$ om. 23 (cf. v.l. 22). — [a]) S बडवे, बडबे. $K_4$ $B_2$ $D_{2.3}$ संपृक्ते; $G_4$ संवृत्ते. — [b]) $T_1$ $G_{1.2.4}$ $M_2$ श्येनं पाते. — $G_1$ om. $23^{cd}$.

**24** [a]) $D_{1.3}$ मास्तु (for मा स्म). S भूत् ($G_2$ भूस्) (for the *first* ते). $T_2$ $G_{2-4}$ त्वद्; M स्व- (for the *second* ते). $K_3$ स्यातां (for राजन्). — [b]) $K_3$ इह; $T_2$ $G_{2-4}$ वेद् (for अपि). $Ś_1$ $K_{1.4}$ (before corr.) ध्रुवे. — [c]) $Ś_1$ °सारथिम्. $Ś_1$ आगंतु; K B Dc Dn $D_{4-6}$ आगंता ($K_3$ आधत्ता); $D_{1-3}$ $T_1$ $G_1$ आधाता; $T_2$ $G_3$ आधत्त; M आहर्ता (for आधत्ते); cf. $23^c$. — [d]) = (var.) $23^d$. $Ś_1$ $K_1$ ते; $K_4$ यं (for तम्). $B_1$ नृप (for च तम्).

**25** [a]) Hypermetric! $Dn_1$. $n_2$ स्वप्नङ्; $D_{1.2}$ M सुप्तो; $G_1$ सुप्तान् (for सुप्तं). T G om. न. $Ś_1$ K $D_{1-3}$ M निमिषेत्; $B_4$ (corrupt) [अ]ति सति (for निमिषति). ❀ Cn : स्वप्नङिति स्वपितृषोर्नजिङिति। जकारान्तस्य स्वप्नजशब्दस्य स्वप्नावस्थावद्वाचित्वम्। सुषुप्त्यवस्थां प्राप्तं किं न निमिषति लुप्तदृङ् न भवतीति प्रश्नार्थः। ❀ — [b]) $T_2$ $G_{3.4}$ जानन् (for जातं). $Ś_1$ $K_{1.2}$ चोपते; $T_2$ $G_{2-4}$ चेंगते (cf. v.l. 26).

**26** $D_1$ om. (hapl.) 26. — [a]) T G om. न. $K_{1.2.4}$ $M_2$ निमिषेद्. — [b]) $T_1$ अंडे जातं; $M_2$ अंडाज्जातं. $K_1$ चोपते; $T_2$ $G_{2-4}$ चेंगते (cf. v.l. 25).

**27** [a]) All MSS. except $Ś_1$ $K_{1-3}$ $M_2$ त्वां (for त्वा). $K_{3.4}$ B D (except $D_{1.5}$) $G_4$ $M_1$ देवसत्त्व. — [b]) $Ś_1$ $B_{2-4}$ Dn $D_{4.6}$ सं- (for the *second* त्वं). — [c]) $D_1$ $G_2$ $M_1$ वाक्प्रलापैस्. — [d]) Dc $T_2$ $G_{2-4}$ विद्वन्; $M_2$ वादिन् (for बन्दी).

Colophon om. in $Ś_1$ $K_{1.2}$. — *Major parvan :* $T_2$ $G_{2-4}$ $M_1$ आरण्य. — *Sub-parvan :* $D_3$ तीर्थयात्रा, followed by अष्टावक्रीय. $K_3$ $D_{1.5}$ (all om. sub-parvan name) mention only लोमशतीर्थयात्रा, followed by अष्टावक्रीय; and $K_4$ B Dc $Dn_1$. $n_3$ $D_{2.4.6}$ T $G_{1.3}$, likewise, only अष्टावक्रीय ($G_1$ °वक्रोपाख्यान). — *Adhy. no.* (figures, words or both) : $Dn_1$ 132; $Dn_2$. $n_3$ 133 (as in text); $D_1$ 139; S 134 ($M_2$ 136). — *Śloka no. :* Dn 30; $D_1$ 28.

# १३४

C. 3. 10651
B. 3. 134. 1
K. 3. 136. 1

अष्टावक्र उवाच ।
अत्रोग्रसेनसमितेषु राज-
न्समागतेष्वप्रतिमेषु राजसु ।
न वै विवित्सान्तरमस्ति वादिनां
महाजले हंसनिनादिनामिव ॥ १
न मेऽद्य वक्ष्यस्यतिवादिमानि-
न्ग्लहं प्रपन्नः सरितामिवागमः ।
हुताशनस्येव समिद्धतेजसः
स्थिरो भवस्वेह ममाद्य बन्दिन् ॥ २

बन्द्युवाच ।
व्याघ्रं शयानं प्रति मा प्रबोधय
आशीविषं सृक्किणी लेलिहानम् ।
पदाहतस्येव शिरोऽभिहत्य
नादष्टो वै मोक्ष्यसे तन्निबोध ॥ ३
यो वै दर्पात्संहननोपपन्नः
सुदुर्बलः पर्वतमाविहन्ति ।
तस्यैव पाणिः सनखो विशीर्यते
न चैव शैलस्य हि दृश्यते व्रणः ॥ ४

## 134

1 a) Ś1 K1 °सेनः. Dn2 °प्रमुखेषु; D1. 3 °स्वमितेषु; M °समितौ तु (for °समितेषु). Ś1 K D1-3. 5 राजसु (see below); M सत्रे (for राजन्). — b) K1. 2 स सागरेषु (for समा°). Ś1 K D1-3. 5 राजन् (see above); T1 सत्सु (for राजसु). — c) G2. 4 मे (for वै). T1 विवक्षांतरम्; G2 विवत्सांतरम्. Ś1 K1. 2 न वै तितिक्षाम्यहमत्र वादिनः; K3. 4 D5 न वै विवक्षांतरमत्र वादिनां; B Dc Dn D3 (marg. sec. m.). 4. 6 नावैमि बंदिं वरमत्र वादिनां; D1-3 न वै तितिक्षाम्यहमद्य वादिनां. — d) S (except G1 M2) महाजने. K3. 4 T1 G1 हंसविवादिनां; D1 G4 °विनादितां; D2. 3 T2 G3. 3 M °विनादिनां; D5 हंस च वादिनां. Ś1 महाहंसः सरसि निनादिनामिव; K1. 2 महाहंसाः सरसि निरादिनामिव; B Dc Dn D4. 6 महाजले हंसमिवाददामि; D3 (marg. sec. m.) महाहंसः शरदि विनादिनामिव.

2 a) Ś1 K3 [अ]तिवादमानि; K1. 2 °वादमऽधिद्; K4 D3. 5 °वादमानिन् (or °मानी). T1 G1 न वंदिनं (G1 मेद्य) वै मोक्ष्यति वादिमानी; T2 G3. 4 न मोक्ष्यसे वै वदमानो निमज्जन्; G2 न मोक्ष्यसे वदमानो हि मेद्य; M न मेद्य मोक्ष्यस्यतिवादवादिन्. — b) Ś1 B D1. 5 ग्रहं; K1. 2 गृह; K3. 4 (m as in text) Dc अहं; S जलं (for ग्लहं). T1 M2 प्रसक्तः; G1 प्रसक्तं. Dc इवागतः; T1 अवगाहः; T2 G2-4 इवाध्वगः. — c) K4 D1-3 G1 समृद्ध° (for समिद्ध°). — d) Ś1 K1. 2 स्थितो (for स्थिरो). S वंदिन्.

3 All MSS. except T G2. 4 M1 om. the ref. — a) S (except M2) om. मा. K1 बोधयस्व; K2 B4 Dn D3-6 प्रबोध; B1-3 विबोध; Dc निबोध; T G M1 बोधयित्वा; M2 बुबोधीर् (for प्रबो°). — b) MSS. सृग्विनी, सृक्किणी, सृक्किणि, सृक्कणी, सृक्कणी, etc. B1 (m as in text) D (except D1-3. 5) संलिहानं. — c) K1. 4 B1. 4m Dc D1-3 पदा स तस्य; K3 पदाग्रतस्य; D4. 6 G1. 2. 4 M1 पदाहितस्य; T1 पादाहतस्य. Ś1 K1. 4 B1. 4 G2. 4 M2 [ए]व; K2 B4m Dn D4-6 T G1. 3 [इ]ह (for [इ]व). K1 [ऽ]भिहन्व; K3 T1 G1 M2 निहत्य; K4 [ऽ]भिहन्यान्. — d) K1 न दृश्यसे; T2 (before corr.) तेनादत्ते; G4 तेनादष्टो (for नादष्टो वै). K1. 3. 4 B1 D1-3 मे; T1 G1. 2 [ऽ]यं (for वै). T1 G1 M2 मोक्ष्यते.

4 a) D1. 2 T1 G1. 2. 4 [उ]पपन्नं. — b) Ś1 K1. 3. 4 D1. 2 आविखाति; D3 अभिहन्यात्; T1 अभिघाति; T2 G2-4 आशु हंति; G1 M अभिहंति. — c) K1 [ऽ]वशीर्यते; B4 Dn D4. 6 विदीर्यते. — d) S चापि (for चैव). T2 G2-4 च (for हि).

5 Before 5, S (except M2) ins. अष्टावक्रः. — c) Ś1 K1. 4 D1 नीचैर्भूताश्च; K3 D3. 5 T1. 2 (before corr.) G1. 2. 4 M निकर्षभूता; D2. 3 (sup. lin.) नीचीभूताश्च (for निकृष्ट°). — d) K1. 4 अनुडुहो; B Dn D4. 6 T2 G3 ह्यनडुहो. — After 5, D1. 2 ins.:

660* आसनं तु समास्थैवं संवादं बन्दिना सह ।
अष्टावक्रः संचिकीर्षन्प्रजगर्ह हसन्मुहुः ।

D1 cont.: K1. 2 B Dc Dn D4. 6 T2 (marg. sec. m.) G3 ins. after 5:

661* यथा महेन्द्रः प्रवरः सुराणां
नदीषु गङ्गा प्रवरा यथैव ।

हनूमानुवाच ।

नास्ति शक्तिर्ममोत्थातुं व्याधिना क्लेशितो ह्यहम् ।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ७

भीम उवाच ।

निर्गुणः परमात्मेति देहं ते व्याप्य तिष्ठति ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ८
यद्यागमैर्न विन्देयं तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ॥ ९

हनूमानुवाच ।

क एष हनुमान्नाम सागरो येन लङ्घितः ।
पृच्छामि त्वा कुरुश्रेष्ठ कथ्यतां यदि शक्यते ॥ १०

भीम उवाच ।

भ्राता मम गुणश्लाघ्यो बुद्धिसत्त्वबलान्वितः ।
रामायणेऽतिविख्यातः शूरो वानरपुंगवः ॥ ११
रामपत्नीकृते येन शतयोजनमायतः ।
सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ १२
स मे भ्राता महावीर्यस्तुल्योऽहं तस्य तेजसा ।
बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥ १३
उत्तिष्ठ देहि मे मार्गं पश्य वा मेऽद्य पौरुषम् ।
मच्छासनमकुर्वाणं मा त्वा नेष्ये यमक्षयम् ॥ १४

वैशंपायन उवाच ।

विज्ञाय तं बलोन्मत्तं बाहुवीर्येण गर्वितम् ।
हृदयेनावहस्यैनं हनूमान्वाक्यमब्रवीत् ॥ १५
प्रसीद नास्ति मे शक्तिरुत्थातुं जरयानघ ।

C. 3. 11182
B. 3. 147. 15
K. 3. 149. 16

---

शक्यं ममोत्थानं ($D_5$ °तुं). — $^{b}$) S ($G_1$ om.) जरया (for व्याधिना). $K_1$ $T_2$ $G_{2-4}$ [ऽ]स्म्यहं; $K_3$ ह्ययं; $K_4$ भृशं (for ह्यहम्).

**8** $^{a}$) $K_4$ स; B Dc Dn $D_{4.6}$ तु; $D_{1-3}$ ते; T $G_{2-4}$ [अ]सौ; $G_1$ [अ]यं; M [अ]त्र (for [इ]ति). — $^{b}$) $K_2$ तं (for ते). $B_2$ आवृत्य; $B_3$ प्राप्याव- (for ते व्याप्य). $B_{1.4}$ D (except $D_5$) देहं व्याप्यावतिष्ठते. — $^{c}$) A few MSS. and Cnp ज्ञातविज्ञेयं.

**9** $^{a}$) Ś$_1$ निर्णीयं; $K_{1.3}$ Dc $D_{1-3.5}$ जानीयां; $K_2$ निर्णेयं; $K_4$ विज्ञेयं; $B_{2-4}$ Dn $D_{4.6}$ विद्यां च (for विन्देयं). — $^{c}$) Ś$_1$ $K_1$ क्रामयित्वा; $K_2$ क्रामये त्वा; $D_3$ क्रमये त्वां (for क्रमेयं त्वां). $K_4$ श्रस्तं; B Dn $D_{4-6}$ $G_{1.4}$ चैव (for चेमं). — $^{d}$) A few MSS. हनुमान्; $K_4$ विश्वस्तम्.

**10** $^{c}$) All MSS. except Ś$_1$ $T_2$ $G_3$ $M_2$ त्वां (for त्वा). $K_4$ S सतां; B D (except $D_{1-3}$) नर- (for कुरु-). — $^{d}$) B ज्ञायते यदि (for यदि शक्यते).

**11** $^{a}$) S (except $G_4$) गुणैः (for गुण-). — $^{b}$) Ś$_1$ $K_{1.3}$ Dc $D_{1.3}$ $T_2$ $G_3$ °गुणा°; $B_4$ $G_4$ °सम°; $T_1$ °गणा° (for °बला°). — $K_4$ om. $11^{c}$–$12^{d}$. — $^{c}$) Dc $M_1$ [ऽ]भि-; $D_{1.2}$ हि; T G च (for ऽति-). — $^{d}$) B Dn $D_{4.6}$ श्रीमान्; Dc श्रुतो (for शूरो). $K_{1-3}$ $B_3$ Dc $D_{1.2.5}$ (repeating the word) -वानरः (for -पुंगवः).

**12** $K_4$ om. 12 (cf. v.l. 11). — $^{a}$) Ś$_1$ K ($K_4$ om.) $B_1$m Dc $D_{1-3.5}$ °पत्न्याः (for °पत्नी-). — $^{b}$) B Dn $D_{4.6}$ °योजनविस्तृतः.

**13** $^{c}$) $T_1$ परदमे; $G_4$ वरतमो (for परा°). — $^{d}$) Ś$_1$ K $D_{1-3.5}$ च (for [अ]हं). $T_1$ तस्य (for तव). — After 13, S ins.:

721* इदं देशमनुप्राप्तः कारणेनास्मि केनचित् ।

**14** $^{a}$) T $G_{1-3}$ मार्गं मे (by transp.). — $^{b}$) Ś$_1$ $K_{1.2}$ वा मम; $K_4$ $B_{2-4}$ Dn $D_{4.6}$ मे चा($B_2$ $D_4$ वा)द्य (for वा मेद्य). — $G_1$ om. $14^{cd}$. — $^{d}$) $K_3$ मत्वा; $K_4$ मा च; $B_1$ Dc $D_{1-3}$ मा त्वां; $B_{2-4}$ Dn $D_{4.6}$ त्वां वा; T $G_{2-4}$ अहं; $M_2$ हत्वा (for मा त्वा).

**15** $^{b}$) $K_1$ गर्हितं; B Dn $D_{4.6}$ दर्पितं; $Dc_2$ गर्जितं; $G_1$ $M_2$ पांडवं (for गर्वि°). — $^{c}$) Ś$_1$ [अ]वहास्य; Dc विहस्य; S [अ]पहा($G_4$ °ह)स्य (for [अ]वहस्य). Ś$_1$ [इ]मं; $K_{1.2}$ [इ]दं; $Dn_2$ $T_1$ [ए]वं (for [ए]नं). — $^{d}$) A few MSS. हनुमान्. $G_1$ M इदम् (for वाक्यम्).

**16** Before 16, B D (except $D_{2.3.5}$) $G_1$ ins. हनूमानुवाच ($G_1$ om. उ°). — $^{b}$) $D_5$ संतप्तो (for उत्थातुं). Ś$_1$ K Dc $D_{2.3.5}$ रुजया (for जरया). $G_1$ M हि वै (for [अ]नघ). $D_1$ उत्थानं तु रुजानघ. — $^{c}$) Ś$_1$ $K_{2.3}$ Dc त्वेनं; $K_1$ त्वेतं; $K_4$ न्वैतत्; $D_5$ [ए]वाद्य; T $G_{1.3}$ ह्येतत्; $G_2$ वीर; $G_4$ राजन् (for त्वेतत्). — $^{d}$) T G उत्क्षिप्य ($G_1$ उत्क्षिप्य) (for उत्सार्य). — After 16, B Dc Dn $D_{4.6}$ ins.:

722* वैशंपायन उवाच ।
एवमुक्ते हनुमता हीनवीर्यपराक्रमम् ।
मनसाचिन्तयद्भीमः स्वबाहुबलदर्पितः ।
पुच्छे प्रगृह्य तरसा हीनवीर्यपराक्रमम् ।
सालोक्यमन्तकस्यैनं नयाम्यद्येह वानरम् ।

C. 3. 11182
B. 3. 147. 16
K. 3. 149. 16

ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम् ॥ १६
सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना ।
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥ १७
उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् ।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ १८
उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रुकुटीमुखः ।
स्विन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक ह ॥ १९
यत्नवानपि तु श्रीमाँल्लाङ्गूलोद्धरणोद्धुतः ।
कपेः पार्श्वगतो भीमस्तस्थौ व्रीडादधोमुखः ॥ २०
प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ।
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥ २१
सिद्धो वा यदि वा देवो गन्धर्वो वाथ गुह्यकः ।
पृष्टः सन्कामया ब्रूहि कस्त्वं वानररूपधृक् ॥ २२

हनूमानुवाच ।

यत्ते मम परिज्ञाने कौतूहलमरिंदम ।
तत्सर्वमखिलेन त्वं शृणु पाण्डवनन्दन ॥ २३
अहं केसरिणः क्षेत्रे वायुना जगदायुषा ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥ २४
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
सर्ववानरराजानौ सर्ववानरयूथपाः ॥ २५
उपतस्थुर्महावीर्या मम चामित्रकर्शन ।
सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निना यथा ॥ २६

---

On the other hand, S (except M2) ins. after 16:

723* एवमुक्तस्तु बलवान्भीमो भीमपराक्रमः ।

[Before the line, G1 M1 ins. वैशं°. — G1 स (for तु).]

**17** Before 17, Ś1 K3. 4 D1–3. 5 M2 ins. वैशं°; K3. 4 D1–3 cont. उवाच. — b) S स्वयं (for स्मयन्). D1. 2. 5 पांडवः (for पाणिना). — c) Ś1 K1 D5 तं न; Dc1 न वा; Dn2 न तु (for न च). G1 [अ]शक्तश् (for [अ]शकच्).

**18** a) T1 उच्चैः क्षिप्तुं; T2 G3 उच्चिक्षिप्तं; G1 M2 °क्षिप्सुः; G2 उत्क्षेप्तुं च; G4 M1 उच्चिक्षिपुः (for °क्षेप). — b) Ś1 K1. 2 इंद्राशनिमिवो°; T2 G3 M1 इंद्रध्वजमिवो°. — c) K3 D1. 2 T1 M नोच्चंतुम् (for नोद्धर्तुम्).

**19** a) D1 उत्क्षिप्य भ्रूर्; G1 M उच्चिक्षिप्सुर् (G1 °प्सुं). Dc2 विवृत्तास्यः. — b) Dc2 °तलं. — d) B D (except D1–3. 5) तं (for ह).

**20** a) Dc तत्; D3 T1 च (for तु). Dc शीघ्रं; G1. 2 M क्षिप्रं (for श्रीमान्). — b) Ś1 K D1–3. 5 लांगूलोद्धरणाय सः (D5 च); B Dc G1 °णोद्यतः; Dn °णोद्धुरः; D4 °णोन्द्धतः; T1 G2–4 °णे ततः; M °णोद्धतः; text as in D6 only! — c) Ś1 K D1–3. 5 जानुभ्यामगमद् (for कपेः पार्श्वगतो). T G3. 4 पार्श्वे (for पार्श्व-). T1 G4 ततो (for -गतो). G2 तस्थौ; M2 राजन् (for भीमस्). — d) G2 भीमो (for तस्थौ). Ś1 K D1–3 व्रीडन्नधो°; B Dc Dn D4–6 व्रीडानताननः; T2 G2–4 °दवाङ्मुखः.

**21** a) T G3. 4 M प्रणम्य चैनं (for प्रणिपत्य च). B2 तु; G1 [ए]व (for च).

**22** b) D5 T1. 2 (after corr.) G2–4 वापि (for वाथ). — c) T G हि मया (for कामया). Ś1 K Dc D1–3. 5 काम्यया (D1 को मया; D2. 3 कामया; D5 कृपया) पृच्छतो ब्रूहि. — d) G1 °पुंगव (for °रूपधृक्). Ś1 श्रोतव्यं स्याद्यदा मयि. — After 22, N (except Ś1) ins.:

724* न चेद्गुह्यं महाबाहो श्रोतव्यं चेद्भवेन्मम ।

[K4 ते (for the first चेद्). K D1–3. 5 °भाग (for °बाहो). K B2 Dc D1–3. 5 स्याद् (for the second चेद्). K1. 2 यदा मयि; K3. 4 Dc D1–3. 5 मया यदि. B1–3 भवेन्मया.]

— B Dc Dn D4. 6 cont.:

725* शिष्यवत्त्वां तु पृच्छामि उपपन्नोऽस्मि तेऽनघ ।

**23** a) K3. 4 Dc D1–3. 5 यदि ते मत्- (for यत्ते मम). Ś1 K1 Dn2 D5 -परिज्ञानं. — c) Dc D5 तच्छृणुष्व यथाश्रद्धं (D5 मया तथ्यं). — d) K3. 4 D1–3 कौरव° (for पाण्डव°). Dc वदतो मे नरोत्तम; D5 कथ्यमानं नरोत्तम.

**24** b) K1. 3. 4 B D °युना (D3 °त्मना) (for °युषा). — d) A few MSS. हनुमान्. Ś1 K Dc D1–3. 5 नामतः (for वानरः).

**25** c) B D (except D1–3. 5) T1 G1 सर्वे (for सर्व-). Ś1 K2. 3 D1–3 -राजौ तौ; B Dc Dn D4. 6 T1 M1 -राजानः; T2 G3. 4 -राजानं. — d) B Dn D4. 6 M तथा; T G2–4 सर्वे; G1 तदा (for सर्व-). — After 25, B1 ins. line 1 of 726*.

**26** a) Dc °त्मानो (for °वीर्या). K2 जातः कमलपत्राक्षः. — Ś1 K Dc D1–3. 5 ins. after 26a: B1 (leaving lacuna for line 2), after 25:

726* तयोर्भ्रात्रोर्महात्मनोः ।
तयोर्नासीत्समो वीर्ये.

[(L. 1) B1 °भाग (for °त्मनोः). — (L. 2) K4 D1–3. 5 द्वयोर् (for तयोर्). Ś1 K1 om. न.]

— b) Ś1 K1–3 B Dn D4–6 G1 °कर्षण (for °कर्शन).

निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे ।
ऋश्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् ॥ २७
अथ दाशरथिर्वीरो रामो नाम महाबलः ।
विष्णुर्मानुषरूपेण चचार वसुधामिमाम् ॥ २८
स पितुः प्रियमन्विच्छन्सहभार्यः सहानुजः ।
सधनुर्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः ॥ २९
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ।
वञ्चयित्वा महाबुद्धिं मृगरूपेण राघवम् ॥ ३०
हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः ।
दृष्टवाञ्शैलशिखरे सुग्रीवं वानरर्षभम् ॥ ३१
तेन तस्याभवत्सख्यं राघवस्य महात्मनः ।
स हत्वा वालिनं राज्ये सुग्रीवं प्रत्यपादयत् ।
स हरीन्प्रेषयामास सीतायाः परिमार्गणे ॥ ३२
ततो वानरकोटीभिर्यां वयं प्रस्थिता दिशम् ।
तत्र प्रवृत्तिः सीताया गृध्रेण प्रतिपादिता ॥ ३३
ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।

C. 3. 11206
B. 3. 148. 6
K. 3. 150. 6

— $^c$) Ś1 K1. 2 D1. 2 सुग्रीवे च (for °वेण).

**27** $^a$) D4. 6 स्म; T1 तु (for स). T G2. 3 तदा (for ततो). — $^c$) N T2 G3. 4 ऋष्य° (K1 ऋषि°) (for ऋश्य°). — $^d$) D1–3 ह्यवसच् (for न्य°). T G2–4 पुरा (for चिरम्).

**28** $^d$) N (except Ś1 K2) वसुधातलं; G1 M °तले (for °मिमाम्).

**29** $^a$) T G2–4 यः (for स). — $^b$) B1 सभार्यः सह चा°; D1. 2 सभार्यश्च सहा°. — $^d$) Ś1 K1–3 B3 °स्थितः; D5 °गतः (for °श्रितः).

**30** $^a$) K4 हृता वीर; M1 हृता सीता (for जनस्थानाद्). — M1 om. (hapl.) 30$^b$ and the prior half of line 1 of 727*. — $^b$) B D (except D1–3. 5) S (M1 om.) छलेनापहृता for (रावणेन हृता). K3 बलाद्धृता (by transp.). K3 पुरा; T1 वने; T2 G M2 वनात् (for बलात्). K4 शुभा जनकनंदिनी. — After 30$^{ab}$, K4 B D (except D1–3. 5) S ins.:

727* राक्षसेन्द्रेण बलिना रावणेन दुरात्मना ।
सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा ।

[(L. 1) M1 om. the prior half (see above). — (L. 2) K4 G4 सुवर्णचित्ररूपेण; Dc सुवर्णवर्णचित्रेण. T1 हरिणेन स राक्षसः; T2 G2–4 रक्षसा मृगरूपिणा.]

— $^c$) K4 S नरश्रेष्ठं; B Dn D4. 6 नरव्याघ्रं; D1. 2 महाबाहुं; D5 महात्मानं (for महाबुद्धिं). — $^d$) K4 B Dc Dn D4. 6 G1. 2. 4 मारीचेन तदानघ (Dc तु राघवं; G1. 2 तदा वने; G4 दुरात्मना). — After 30, K4 B D (except D5) S ins. an addl. colophon [*Adhy. name :* K4 M2 हनूमत्समागमः; B Dn D4. 6 G1 हनूमद्भीमसंवादः; Dc D2. 3 हनूमद्भीमसमागमः; D1 गंधमादनप्रवेशे हनूमद्भीमसमागमः. — *Adhy. no.* (figures, words or both): Dn1. n2 146; Dn3 147; D1 154; T1 139; T2 G M1 149; M2 151. — *Śloka no.:* Dn1 33; Dn2. n3 34; D1 35.]

**31** Before 31, K4 B D (except D5) S ins. हनूमानुवाच (S om. उवाच). — $^b$) Dc सबांधवः (for स राघवः). Ś1 K1–3 D1–3. 5 रामोथ रघुनंदनः.

**32** $^b$) Ś1 K1. 2 राघवेण; K4 T1 M1 सुग्रीवस्य (for राघवस्य). — $^c$) Ś1 K3 Dc D3 राज्यं (for राज्ये). — $^d$) K1. 2 Dc सुग्रीवे. B Dn D4. 6 अभिषिक्तवान् (for प्रत्य°). — $^e$) K4 B D (except D1–3. 5) S स राज्यं प्राप्य सुग्रीवः. — K3 om. (hapl.) 32$^f$–33$^c$. — After 32, K4 B D (except D1–3. 5) S ins.:

728* वानरान्प्रेषयामास शतशोऽथ सहस्रशः ।

**33** K3 om. 33$^{abc}$ (cf. v.l. 32). — After 33$^a$, K4 B D (except D1–3. 5) S ins.:

729* सहितोऽहं नरर्षभ ।
सीतां मार्गन्महाबाहो.

— $^b$) K4 B Dc Dn D4. 6 S प्रयातो (K4 B1 Dc T1 G1. 2. 4 M1 प्रस्थितो; M2 सहितो) दक्षिणां दिशं; D1. 2 यां दिशं प्रस्थिता वयं; D5 जीववान्प्रस्थितो दिसं. — $^c$) K1. 4 B Dn D3–6 T2 G3 M ततः (for तत्र). — $^d$) K3 गृध्रेंद्रेण महात्मना; B D (except D1–3. 5) S गृध्रेण सुमहात्मना. — After 33, K3. 4 B D (except D1–3. 5) S ins.:

730* संपातिना समाख्याता रावणस्य निवेशने ।
[Posterior half = 35$^b$.]

**34** T1 om. (hapl.) 34$^a$–35$^b$. — After 34$^{ab}$, S (except T1) ins.:

731* संपातिगृध्राधिगतप्रवृत्तिः पाण्डुनन्दन ।
[T2 G2–4 °वाक्याधिगता प्रवृत्तिः; G1 °गृध्राधिपतिप्रवृत्त्या.]

— $^c$) K3 B D (except D3) T2 G1. 2 °विस्तारम्. — $^d$) K4 [अ]प्लुवं (for [आ]प्लुतः). Ś1 K1. 2 आप्लुतः सहसार्णवं; Dc अंतरं सहसाप्लुतं. — After 34, K3. 4 B D (except D1–3. 5) S (except T1) ins.:

732* अहं स्ववीर्यादुत्तीर्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुरसुतोपमाम् ।

[(L. 1) K4 M2 स्ववीर्यादहमुत्तीर्य. G1 M2 वरुणा° (for मकरा°).]

C. 3. 11206
B. 3. 148. 6
K. 3. 150. 6

शतयोजनविस्तीर्णमर्णवं सहसाप्लुतः ॥ ३४
दृष्टा सा च मया देवी रावणस्य निवेशने ।
प्रत्यागतश्चापि पुनर्नाम तत्र प्रकाश्य वै ॥ ३५
ततो रामेण वीरेण हत्वा तान्सर्वराक्षसान् ।
पुनः प्रत्याहृता भार्या नष्टा वेदश्रुतिर्यथा ॥ ३६
ततः प्रतिष्ठिते रामे वीरोऽयं याचितो मया ।
यावद्रामकथा वीर भवेल्लोकेषु शत्रुहन् ।
तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत् ॥ ३७
दश वर्षसहस्राणि दश वर्षशतानि च ।
राज्यं कारितवान्रामस्ततस्तु त्रिदिवं गतः ॥ ३८

---

**35** T1 om. 35ab (cf. v.l. 34). — a) Ś1 K1. 2 दृष्ट्वा (for दृष्टा). D1-3 च सा (by transp.). Ś1 K1. 2 सीता (for देवी). K3. 4 B Dc Dn D4. 6 S (T1 om.) दृष्टवान् भरत(K4 S [T1 om.] पांडव)श्रेष्ठ. — b) Ś1 K2 राक्षसस्य (for राव°). — After 35ab, K3. 4 B D (except D1. 2. 5; D3 marg. *sec. m.*) S ins.:

733* समेत्य तामहं देवीं वैदेहीं राघवप्रियाम् ।
दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणाम् ।

[(L. 2) K4 D3 S (except G2) सप्राकारां स (T2 G3. 4 M °राट्ट)तोरणां (for the posterior half).]
— M2 om. 35c-36b. — c) K4 S (M2 om.) पुनश्चापि (by transp.); B1-3 Dc D1. 3. 5 चास्मि पुनर्; B4 Dn D2. 4. 6 चास्य पुनर्. — d) T1 तस्य (for तत्र). — After 35, K4 B D (except D1. 2. 5; D3 marg. *sec. m.*) S ins.:

734* मद्वाक्यं चावधार्याशु रामो राजीवलोचनः ।
अबद्धपूर्वमन्यैश्च बद्ध्वा सेतुं महोदधौ ।
वृतो वानरकोटीभिः समुत्तीर्णो महार्णवम् ।

[(L. 2) B2-4 Dc Dn D3. 4. 6 स बुद्धिपूर्वं सैन्यस्य (for the prior half). — (L. 3) Cf. 33a. K4 T1 G1. 4 M1 °त्तीर्य (for °तीर्णो).]

**36** K3 om. 36; K4 S om. 36ab. — a) Dn D4 वीर्येण (for वीरेण). — b) B4 Dn D4-6 एव (for सर्व-). — B D (except D1-3. 5) ins. after 36ab: K4 S (M2 om. line 1), after 734*:

735* रणे स राक्षसगणं रावणं लोकरावणम् ।
निशाचरेन्द्रं हत्वा तु सभ्रातृसुतबान्धवम् ।
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणम् ।
धार्मिकं भक्तिमन्तं च भक्तानुगतवत्सलम् ।

[(L. 1) T1 [s]श (for स). — (L. 2) T G2-4 वै (for तु). K4 °बल°; B4 °पुत्र° (for °सुत°). T G2-4 सभृत्यं सहबांधवं (for the posterior half). — (L. 4) K4 दृढभक्तिं; G4 बुद्धिमंतं (for भक्ति°). B2 T G2-4 M1 °वत्सलः.]
— c) B (B1 marg.) D (except D1-3. 5) ततः (for पुनः). K4 S प्रत्याहृत्य ततः सीतां. — d) K4 S नष्टां वेदश्रुतिं यथा (K4 G1 M °श्रुतीमिव !). — After 36, K4 B D (except D1-3. 5) S ins.:

736* तथैव सहितः साध्व्या पत्न्या रामो महायशाः ।
गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः ।
अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः ।

[(L. 1) K4 राज्यं प्राप्य (for साध्व्या पत्न्या). Dc प्रीत्या (for पत्न्या). — (L. 2) T G3 हि; G1 वै; G2. 4 M1 [s]भि- (for ऽति-). K4 रेमे दाशरथिर्वीरो ह्ययोध्यामागतस्ततः. — (L. 3) T G3. 4 अध्युवास (for अध्यावसत्). K4 ततः पार्थ (for ततोऽयोध्याम्). B1-3 विभुः; G1. 2 M गणैः (for प्रभुः). K4 प्रजारंजनतत्परः; T G3. 4 द्विषतां कंटको विभुः (for the posterior half).]

**37** a) K4 B D (except D1-3. 5) प्रतिष्ठितो (B4 प्रीतः स्थितो). K4 B1. 3 D (except D1-3. 5) राज्ये; S राजन् (for रामे). — b) K3 D1-3. 5 वरो (for वीरो). K4 B Dc Dn D4. 6 S रामो (S र ज्ये) नृपत्तिसत्तमः (T1 [s]सौ रघुसत्तमः). — After 37ab, K4 B D (except D1-3. 5) S ins.:

737* वरं मया याचितोऽसौ रामो राजीवलोचनः ।

— c) K4 B D (except D1-3. 5) T G1-3 M1 [इ]यं ते; G4 M2 लोके (for वीर). — d) K4 T G2. 3 M तिष्ठेल्लोकेषु; G1 त्रिषु लोकेषु; G4 तिष्ठंति तव. K4 शाश्वती (for शत्रु°). — e) Ś1 K1. 3 D1-3 तिष्ठेयम्; B1 जीवेहम् (for जीवेयम्). D1 T G2-4 इत्येव; G1 इत्युक्तः (for इत्येवं). K4 तावत्प्राणान्धारयेयं. — f) K4 मां तथेति (for तथास्त्विति). B4 D1 वचो (for च सो). — After 37, K3. 4 B D (except D1-3. 5) S ins.:

738* सीताप्रसादाच्च सदा मामिहस्थमरिंदम ।
उपतिष्ठन्ति दिव्या हि भोगा भीम यथेप्सिताः ।

[(L. 1) S (except G1) तदा (for सदा). — (L. 2) K3 मे दिव्या; S दिव्या वै (for दिव्या हि). B2 transp. दिव्या and भोगा. G1 मया (for यथा).]

**38** c) K3 च रतवान्; G1 च कृतवान् (for कारितवान्). K4 राज्यं कृत्वा महाबाहुस्; M2 रामो राज्यं पालयित्वा. — d) K3 ततश्च; K4 ततोऽसौ; T1 स ततः; T2 G M1 ततः स (for ततस्तु). B1m. 2 Dc Dn D1. 2. 4. 6 स्वभ(D1 °भु)वनं; B2m D3 त्रिभुवनं; B4 स्वर्भवनं; M2 स्वर्गमितो (for तु त्रिदिवं).

तदिहाप्सरसस्तात गन्धर्वाश्च सदानघ ।
तस्य वीरस्य चरितं गायन्त्यो रमयन्ति माम् ॥ ३९
अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन ।
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम् ।
धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत ॥ ४०
दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्चासि तत्सरोऽभ्यर्ण एव हि ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

# १४८

वैशंपायन उवाच ।
एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् ।
प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ।
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ॥ १
मया धन्यतरो नास्ति यदार्यं दृष्टवानहम् ।
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् ॥ २
एवं तु कृतमिच्छामि त्वयार्याद्य प्रियं मम ।
यत्ते तदासीत्प्लवतः सागरं मकरालयम् ।

C. 3. 11227
B. 3. 149. 4
K. 3. 151. 4

---

**39** D3 reads 39–41 after 3. 148. 3. — a) K1. 2 तमिहा°; K4 सदेवा°; T1 सदिहा° (for तदिहा°). — b) T1 G4 तदा°; T2 G3 तथा°; G1. 2 यथा° (for सदा°). — c) T1 राम° (for वीर°). — d) B Dc D4 M गायंतो. K4 वै मनोरमं; D1 रमयंति च.

**40** For D3 cf. v.l. 39. — a) Ś1 K1. 2 मार्गस्तु; D5 स मार्गो (for च मार्गो). — b) K4 G1 M पुरुषर्षभ; B2 भरतर्षभ (for कुरु°). — d) B1 तमिमं; B2. 3 Dc T1 तवेदं (Dc2 तदेवं); Dn2. n3 D6 T2 (before corr.) G2 तमेवं (for तवेमं). K4 भीम दुर्गमं; S दुर्गमं नरैः (for देव°). — After 40cd, S ins.:

739* त्वामनेन पथा यान्तं यक्षो वा राक्षसोऽपि वा ।

— Dc2 om. 40ef. — e) Ś1 त्वा; K1–3 D1–3. 5 त्वां (for [अ]पि). — f) M कौरव (for भारत).

**41** For D3 cf. v.l. 39. — b) T G3. 4 मानवाः (for मानुषाः). — c) K3 G4 [अ]पि; K4 (m as in text) T1 G1. 2 M त्वं (for [अ]सि). — d) D3 वा (for हि). K4 (m as in text, with v.l. तु for हि) त एव सरसश्च तु; B Dc Dn D4. 6 T G3. 4 M अत एव सरश्च तत् (M1 हि तत्सरः); D5 सरसोभ्यास एष हि; G1 तत्सर्वं वेद्मि पांडव; G2 अतोवसरतश्च तत् (sic).

Colophon. — *Major parvan:* Ś1 K1. 2 T2 G2–4 आरण्य; D4 [आ]र्वै [ऽ]रण्येय (sic). — *Sub-parvan:* K4 (om. sub-parvan name) mentions only कदलीखंड; Dc, likewise, only गंधमादनप्रवेश (followed by सौगंधिकाहरण and कदलीखंड); D1, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश); T2 G3, only गंधमादन(followed by सौगंधिकयात्रा); and G1, only सौगंधिकाहरण. — *Adhy. name:* K3 D1–3. 5 हनुमद्भीम(D2 °द्भीमसेन)समागमः; B Dc Dn D4. 6 G1 हनु(MSS. °नू also)मद्भीमसंवादः; T2 G3 हनुमद्वाक्यं. — *Adhy. no.* (figures, words or both): Dn1. n3 147 (as in text); Dn2 148; D1 155; S 150 (M2 152). — *Śloka no.:* Dn1 23; Dn2. n3 22.

## 148

**1** b) Ś1 K1. 2 महाबलः (for प्रता°). — Ś1 K1 om. 1cd. — c) K4 B1 प्रीतो (for प्रीत्या). — d) K3 वानरं (for भ्रातरं). — f) A few MSS. हनुमंतं. Ś1 K1. 2 महाकपिं (for कपी°).

**2** Before 2, M1 ins. भीमः. — a) T1 यथा; T2 G2–4 मत्तो (for मया). Dc M °तमो (for °तरो). — d) Ś1 K1. 2 Dc D5 तुष्टिश्च; D1–3 G1. 2 M1 प्रीति° (for तृप्ति°). T G3. 4 तथा तृप्ति(T1 °प्त)श्च दर्शनात्.

**3** a) K3 B2. 3 D2. 4. 5 S एकं (G1 एतत्) (for एवं). — b) Ś1 K1. 2 D6 त्वयाचार्य; K3 त्वया ह्यर्थ; T G2–4 त्वयार्येण; G1 त्वयैवाद्य (for त्वयार्याद्य). D1. 2 मम प्रियं (by transp.); D3 मनःप्रियं. K4 त्वया यत्प्रियं वचः; B Dc Dn D4. 6 त्वयाद्य (B4 सत्वया) प्रियमात्मनः. — c) B4 Dn1. n3 T2 G1. 3 यस्त्वेतदासीत्प्लु°. — d) Ś1 K1. 2 वरुणा° (for मकरा°). — f) Ś1 तम् (for तद्). — After

C. 3. 11227
B. 3. 149. 4
K. 3. 151. 4

रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ३
एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः ।
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ४
न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित् ।
कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम् ॥ ५
अन्यः कृतयुगे कालस्त्रेतायां द्वापरेऽपरः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ६
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः ।
कालं समनुवर्तन्ते यथा भावा युगे युगे ।
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ॥ ७
तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तामि कालो हि दुरतिक्रमः ॥ ८

भीम उवाच ।

युगसंख्यां समाचक्ष्व आचारं च युगे युगे ।
धर्मकामार्थभावांश्च वर्ष्म वीर्यं भवाभवौ ॥ ९

हनूमानुवाच ।

कृतं नाम युगं तात यत्र धर्मः सनातनः ।
कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे ॥ १०
न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ ११
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन्कृतयुगे तात तदा न क्रयविक्रयाः ॥ १२

---

3, D3 reads 3. 147. 39–41.

**4** K4 G1 M2 om. 4$^{ab}$. — $^{b}$) T G2. 3 ततो (for च ते). — $^{c}$) Ś1 K1 तु (for स).

**5** Before 5, M1 ins. हनू°. — $^{a}$) T1 G1 तदशक्यं; G3. 4 तन्न शक्यं (for न तच्छक्यं). — $^{b}$) Ś1 K1. 2 रूपं चाप्रतिमं भुवि; K4 न चैवान्येन केनचित्; G1 रूपमन्येन वा पुनः. — D2 om. (hapl.) from काला° (in 5$^{c}$) up to प्रध्वंसनः (in 6$^{c}$). — $^{d}$) B Dn D4. 6 T1 G2 न सा वर्तति सांप्रतं. — After 5, S ins.:

740* ततोऽद्य दुष्करं द्रष्टुं मम रूपं नरोत्तम ।
[G1 M तेन तद् (for ततोऽद्य). G1 भीम (for द्रष्टुं).]

**6** D2 om. up to प्रध्वंसनः (cf. v.l. 5). — $^{d}$) T G2–4 न तादृग् (for नाद्य तद्). Ś1 K1. 2 च (for मे).

**7** $^{b}$) B2 Dc Dn2 देव- (for देवाः). K4 दिव्या ब्रह्मर्षयस्तथा; D4 S सिद्धा (T1 M1 सिद्ध-) देवर्षयस्तथा (T1 °दा). — $^{c}$) Ś1 K1–3 Dc D1–3. 5 T1 सर्वेनु° (for समनु°). — $^{d}$) Ś1 K1–3 B1 D5 यथा भावि; D1. 2 T2 (after corr.) G1. 3 तथा भावा; T2 (before corr.) G2 भावाभावा. — After 7$^{cd}$, S (except M1) ins.:

741* कालं कालं समासाद्य नराणां नरपुंगव ।

— M1 om. (hapl.) 7$^{e}$–9$^{b}$. — $^{e}$) Ś1 K2 B1 बलं वर्ष्म-; Dc वर्ष्मवीर्य-; T1. 2 (before corr.) बलवस्तु; G3 बद्धवस्तु (for बलवर्ष्म-). K1 -प्रभावश्च; K3 -प्रभावाश्च; G1 -प्रभावान्हि (for -प्रभावा हि). K4 बलं पुरुषभावश्च. — $^{f}$) Ś1 K1–3 D1–3. 5 हीयंते च; G1 प्रभवंति (for प्रहीयन्ति).

**8** M1 om. 8 (cf. v.l. 7). — $^{a}$) Ś1 K1. 2 तु महद्; K3 तव मे; B3. 4 Dn बत तद्; D1. 2 मम तद् (for तव तद्). — $^{b}$) B3 °त्रव (for °द्वह). K4 द्रष्टुं शक्नोमि भारत. — $^{c}$) D1–3 G1. 2 M °वर्तेहं (for °वर्तामि).

**9** M1 om. 9$^{ab}$ (cf. v.l. 7). — $^{a}$) D1. 3 T1 G1. 2. 4 M2 ममा° (for समा°). — $^{b}$) Ś1 K1. 2 त्वाचारं; K4 D1–3. 5 S (except G4; M1 om.) आचारान् (for आचारं). — $^{c}$) D5 T1 G2. 4 धर्मार्थकाम-; T2 G3 धर्मार्थभाव- (for धर्मकामार्थ-). Ś1 K1. 2 -भावानां; T2 G3 -कामांश्च (for -भावांश्च). — $^{d}$) Ś1 K1. 2 कर्मवीर्य(K1 °र्यं)भवाभवं; K3 धर्मं वीर्यभवाभवौ; K4 तथा वीर्यभ°; B1–3 D4. 6 T G3. 4 M2 वर्ष्मवीर्ये (B1 वर्ष्मवीर्यौ; B2m कर्मबीजं; B3 D4. 6 T1 M2 वर्ष्मवीर्य-) भ°; B4 Dn D3 कर्मवीर्ये (D3 °र्यं) भ°; Dc धर्मं वीर्यं भ°; D1. 2 कर्म वीर्यं भवाभवान्.

**10** A few MSS. हनुमान्. — $^{a}$) K4 G1 M युगश्रेष्ठं; G4 युगं तत्र (for युगं तात). — $^{d}$) Ś1 K1–3 D1–3. 5 नरोत्तम (for युगो°).

**11** $^{b}$) Ś1 K1. 2 Dc D1. 5 न च क्षीयंति; K3 B Dn D2–4. 6 क्षीयंते न च (by transp.); T G2. 3 न क्षीयंति च. K4 न च प्रक्षीयंति प्रजाः (sic). — $^{c}$) B1 °युगे काले (for °युगं नाम). — $^{d}$) B1 कालेन गुणितां गताः; T2 G2. 3 कालो तु मह(G3 गुण)तां गतः.

**12** $^{ab}$) Ś1 K B1–3 Dc2 D1–3 M1 °गंधर्वा (for °गन्धर्व-). T1 -किंनराः (for -पन्नगाः). — $^{c}$) K4 काले (for तात). — $^{d}$) T1 नादानं; G3. 4 न दान- (for तदा न). Ś1 K1 B1–3 Dn D3m. 4. 6 क्रयविक्रयः; K3 B4 D5 M1 °विक्रयौ; Dc क्रमविक्रमौ. K4 D1. 3 दानाध्ययनविभ्रमाः.

**13** B4 transp. 13$^{a}$ and 14$^{c}$. — $^{a}$) Ś1 K1–3 D5 °यजुऋग्वेद- (K2 °दाः; D5 °दा); K4 Dc D1–3 °ऋग्यजुर्वे(K4 °र्भे)दाः; B Dn D4. 6 G1 °ऋग्यजुर्वर्णाः (for °यजुऋग्वर्णाः). — $^{b}$) Ś1 K1. 2 transp. न and च. K4 G2 मानसी (for

न सामयजुऋग्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मः संन्यास एव च ॥ १३
न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि पैशुनम् ॥ १४
न विग्रहः कुतस्तन्द्री न द्वेषो नापि वैकृतम् ।
न भयं न च संतापो न चेर्ष्या न च मत्सरः ॥ १५
ततः परमकं ब्रह्म या गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥ १६
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन्स्वकर्मनिरताः प्रजाः ॥ १७
समाश्रमं समाचारं समज्ञानमतीबलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥ १८
एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥ १९
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् ॥ २०
आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः ॥ २१
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ।
त्रेतामपि निबोध त्वं यस्मिन्सत्रं प्रवर्तते ॥ २२
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ।
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः ॥ २३

C. 3. 11248
B. 3. 149. 24
K. 3. 151. 26

---

मानवी ). $D_3$ क्रिया चासीत्प्रबाधिनी. — $^{c}$) $T_1$ $G_{1.2}$ $M_2$ अभिधाय; $T_2$ $G_{3.4}$ °धान- (for °ध्याय). $K_4$ यच्च; $M_1$ नात्र; $M_2$ यत्र (for तत्र). — $^{d}$) Ś$_1$ $K_{1.4}$ $D_{1.2.4}$ धर्म-; $K_2$ धर्मे (for धर्मः). $T_1$ सत्यं च; $T_2$ $G_{2-4}$ स्वाध्याय (for संन्यास).

**14** $^{a}$) Ś$_1$ $K_{1.2}$ नैतस्मिन्; $D_3$ तस्मिंश्च (for न तस्मिन्). $D_{1.2}$ युगसंसर्गो; T $G_{2.3}$ वागसंसर्गो ($T_1$ °र्गे). $K_4$ न च तस्मिन्नुपासर्गो. — $^{b}$) $D_{1.2}$ वैकृतं; $G_4$ नाधयो (for व्याधयो). — $B_4$ transp. $13^{a}$ and $14^{c}$. — $^{c}$) Ś$_1$ नाभिसरणं; $K_{1-3}$ $D_{1-3}$ नाभिच($D_3$ °त्र)रणं (for नापि रुदितं). — $^{d}$) $T_2$ $G_{2-4}$ न च (for नापि). B Dc Dn $D_{4.6}$ वैकृतं (for पैशुनम्); cf. $15^{b}$.

**15** $Dn_3$ om. (hapl.) $15^{ab}$. — $^{a}$) Ś$_1$ $K_2$ Dc विग्रह-कृता (Dc °तस्); $K_1$ हि ग्रह कुता (sic); $T_1$ $G_4$ विग्रहः क्रुधस्; $T_2$ $G_3$ विग्रहः कृतस् (for विग्रहः कुतस्). $K_4$ न विभ्रमः कुतः स्तंभो. — $^{b}$) $K_4$ नास्ति; $B_2$ Dn ($Dn_3$ om.) $D_{4.6}$ न च (for नापि). Ś$_1$ $K_{1-3}$ Dc $D_5$ मत्सरः; B Dn ($Dn_3$ om.) $D_{4.6}$ पैशुनं; $D_{1-3}$ [अ]शोभनं (for वैकृतम्); cf. $14^{d}$. — $^{c}$) $Dn_3$ नासूयं; $T_1$ $G_1$ न भियो (for न भयं). B Dn $D_{4.6}$ $T_2$ $G_3$ नापि (for न च). — $^{d}$) $K_4$ नापि (for the second न च). Ś$_1$ $K_{1-3}$ $D_5$ वै कलिः; Dc विभ्रमः (for मत्सरः).

**16** $D_5$ om. $16^{a}$–$18^{b}$. — $^{a}$) Ś$_1$ $K_2$ $B_{1.3.4}$ Dc $Dn_2$ $D_{4.6}$ $M_1$ तपः (for ततः). $K_4$ ब्रह्मन् (for ब्रह्म). — $^{b}$) $K_4$ B D (except $D_{1-3}$) सा (for या). $B_4$ $T_1$ पुरा (for परा). — $^{d}$) Ś$_1$ $K_{1-3}$ Dc $D_{1-3}$ प्रभुः; $B_1$ तथा (for तदा).

**17** $D_5$ om. 17 (cf. v.l. 16). — $^{b}$) $Dc_2$ शुभ° (for कृत°). — $^{c}$) T $G_{2-4}$ संभवंति (for समभवन्). — $^{d}$) $D_{1-3}$ T $G_{1.3.4}$ °धर्म° (for °कर्म°).

**18** $D_5$ om. $18^{ab}$ (cf. v.l. 16). — $^{a}$) Ś$_1$ समाश्रयाः; $K_{1.2}$ $M_1$ °श्रमाः; $K_4$ स्वमाश्रम-; $B_{1-3}$ Dn $D_{1.2.4.6}$ °श्रयं (for °श्रमं). Ś$_1$ $K_{1.2}$ समाचाराः. — $^{b}$) Ś$_1$ $K_{1.2}$ सर्वे-; $K_4$ स्वं च (for सम-). $K_{3.4m}$ B D ($D_5$ om.) $T_2$ (after corr.) $G_{1.3}$ -ज्ञानं (for -ज्ञान-). Ś$_1$ $K_{1.2}$ $M_1$ -मतीबलाः; $K_{3.4m}$ $D_3$ महीतलं; $K_4$ -त्रिधेर्बलं; B Dc Dn $D_{1.2.4.6}$ $T_2$ (after corr.) $G_3$ च ($B_1$ अ-; Dc $D_{1.2}$ हि) केवलं; $T_1$ $G_1$ -मतिर्बलं; $G_2$ -मतिं बलं (for -मतीबलम्). — $^{c}$) T G सर्वे° (for सम°). — $^{d}$) Ś$_1$ $K_{1.2}$ $D_5$ $T_2$ $G_{1-3}$ वर्ण-; $T_1$ सर्व- (for वर्णा). Ś$_1$ $K_2$ -धर्माः; $K_1$ -धर्मः; $D_5$ $G_2$ -धर्मम् (for धर्मान्). Ś$_1$ $K_{1.2}$ समाप्नुवन्; $Dn_2$ $D_{1.2}$ अवाप्नुयुः; $T_2$ $G_3$ अवाप्नुयात्.

**19** $^{a}$) Ś$_1$ $K_{1.2}$ $D_5$ एकवर्ण-; B $D_6$ °देव-; Dn $D_4$ एकं ($Dn_1$ $D_4$ °क-) देवं (for एकवेद-). B Dn $D_6$ $T_2$ $G_3$ -सदा° (for -समा°).

**20** $^{a}$) $K_2$ $Dn_2$ $D_4$ चातुराश्रम°; $K_4$ T $G_{2-4}$ $M_2$ चतुराश्रम°. — $^{c}$) $T_1$ °संयोगाः; $T_2$ (before corr.) $G_4$ °संयोगां.

**21** $^{d}$) $K_{1.3}$ $D_{1.4}$ $T_1$ $G_4$ $M_2$ °र्वर्णस्य; $T_2$ (before corr.) °र्वर्ण्यं च. $T_2$ (before corr.) शाश्वतं.

**22** $^{d}$) $K_{1.2}$ $D_{1.2}$ सत्वं; $K_3$ M सर्वं; $B_1$ $D_3$ (m as in text) $T_{1.2}$ (before corr.) $G_{1.2.4}$ सत्वं (for सत्रं).

**23** $^{a}$) T $G_{3.4}$ हीयते; $G_2$ ग्रस्य° (for ह्रस°). $Dn_2$ पादेन ऊनो धर्मश्च. — $^{b}$) T $G_{2-4}$ वै हरिः (for चाच्युतः).

**24** $D_2$ $T_1$ $G_4$ om. (hapl.) $24^{a}$–$25^{b}$. — $^{a}$) Ś$_1$ धर्माः (for यज्ञाः). $D_3$ स्वधर्मस्थाः क्रियावंतो (=$25^{c}$). — $^{b}$) $K_3$ धर्मश्च; $D_4$ $M_1$ धर्म्या° (for धर्मा°). $D_3$ क्रतो यज्ञः प्रवर्तते (text reading was written and erased).

C. 3. 11248
B. 3. 149. 25
K. 3. 151. 26

ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः ।
त्रेतायां भावसंकल्पाः क्रियादानफलोदयाः ॥ २४
प्रचलन्ति न वै धर्मात्तपोदानपरायणाः ।
स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन् ॥ २५
द्वापरेऽपि युगे धर्मो द्विभागोनः प्रवर्तते ।
विष्णुर्वै पीततां याति चतुर्धा वेद एव च ॥ २६
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथापरे ।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे ॥ २७
एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया ।
तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥ २८
एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः ॥ २९
सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तदा दैवतकारिताः ॥ ३०
यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः ।
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ॥ ३१
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ।
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥ ३२
तामसं युगमासाद्य कृष्णो भवति केशवः ।
वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥ ३३
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ।
उपद्रवाश्च वर्तन्ते आधयो व्याधयस्तथा ॥ ३४

---

— After 24^ab, Ś1 K1. 2 read 28^cd for the first time, *repeating* it, in its proper place. — B2 D4. 6 om. 24^c–25^b; D3 om. 24^cd. — ^c) T2 G1–3 °संयुक्ताः; M1 °संकल्पात्. — ^d) Dn T2 G3 °पगाः (for °दयाः).

**25** B2 D2. 4. 6 T1 G4 om. 25^ab (cf. v.l. 24). — ^a) Ś1 K1. 2 प्रचलंते; K4 T2 G2. 3 M प्रचरंति. Ś1 K1–3 Dc D1. 3. 5 न ते; K4 T2 G3 ततो; G2 तपो- (for न वै). K3 B1 धर्मास्; T2 G3 धर्मान्; G2 धर्म (for धर्मात्). — ^b) D1. 3 °धर्म° (for °दान°). — After 25^ab, B1. 3. 4 Dc *repeat* 24^ab ! — ^c) D5 M2 स्वकर्मस्थाः. K4 प्रजाः सर्वा (for क्रिया°). — ^d) K4 राजन्; B Dn D4. 6 T G2–4 नरास् (for जनास्).

**26** ^a) K2. 3 Dc Dn D4–6 T2 G3 च; B4 हि; D1. 2 तु (for ऽपि). — ^b) K3 D4 द्विभागो न; B4 द्विपादोनः; S (except G1) द्विभागेन. — ^c) Ś1 K1–3 Dc Dn3 D1–3. 5 च (for वै). S (except G3; T2 before corr.) विष्णुः पीतत्वमायाति.

**27** Ś1 K1. 2 om. 27^ab. — ^b) D5 [अ]परे द्विजाः; T1 परे तदा; T2 G3 परे तथा; G1. 2. 4 [अ]परे तथा; M2 [अ]परे जनाः (and तथा also) (for तथापरे). K4 B2 Dn3 D1. 2 om. 27^cd. — ^d) D3 [अ]वेदा° (for [अ]नृच°). T G सत्यं चैवानृतं तथा (T1 तदा).

**28** ^b) K1. 3 वर्तते; G4 नियता; M1 क्रियते; M2 धीय° (for नीय°). — Ś1 K1. 2 *repeat* 28^cd here, reading it for the first time after 24^ab. — ^c) Ś1 K1. 2 (all first time) तपोधर्म°; G2 °प्रयुक्ता.

**29** =(var.) 5. 43. 25^abcd. — ^a) B1 °देवस्य (for °वेदस्य). K4 [अ]ज्ञाने (for [अ]ज्ञानाद्). Ś1 K1. 2 Dc M2 एकस्य वेदस्याज्ञानाद्. — ^b) S (except T1 M2) स्मृताः (for कृताः). — ^c) Ś1 K2–4 B D (except D1. 3) T2 G3 M2 सत्वस्य (for सत्यस्य). K4 चैव; T1 चैक-; M1 चापि (for चेह). D3 (*sup. lin.* as in text) M2 विज्ञानात्; M1 [अ]विज्ञानात् (for विभ्रंशात्). — ^d) K4 B1. 3 Dc M2 सत्वे (for सत्ये).

**30** ^a) = 5. 43. 26^c. K3 B1. 4 Dc M2 सत्वात्; T1 सत्यं (for सत्यात्). T G3. 4 प्रमुच्य° (for प्रच्यव°). — ^d) Dc2 T G तथा (for तदा). Ś1 K1. 2. 4 दैवेन; K3 ते देव-; B D वै दैव- (B3 Dn D2. 4 देव-) (for दैवत-).

**31** ^a) K4 S (except T1 G1) तैर् (for यैर्). — ^c) K4 G1. 2 M यज्ञ° (for स्वर्ग°).

**32** ^b) K3 D3 नश्यंति (for क्षीयन्ति). K1 D4. 6 G4 धर्मतः (for [अ]धर्मतः).

**33** ^c) Ś1 K1 Dc प्रणश्यंति (for प्रशा°). — ^d) K3 D2. 3 G1 M2 धर्मा यज्ञ-; G4 यज्ञधर्म- (by transp.). T1 M1 तदा (for तथा).

**34** K1. 2 om. (hapl.) 34^ab; D2 om. (hapl.) 34. — ^a) T2 (after corr.) क्षुज्ज्वरं (for व्याधयस्). K3 स्नेहा; Dc Dn3 M2 तंद्रीर्; T G2–4 चैव (for तन्द्री). — ^b) T1 क्रोधा दोषा° (by transp.); G1 दोषाः क्रौर्या°. K3 दोषो क्रोधो दमास्तथा. — T1 om. (hapl.) 34^cd. — ^c) D3 उपप्लवा°. B2 Dn प्र- (for च). K3. 4 D1. 5 G1. 2. 4 M वर्धते (for वर्तन्ते). — ^d) T2 (after corr.) G4 ईतयः (for आधयः). B Dc Dn D1. 3m. 4–6 T2 G3 क्षुज्ज्वरं (for व्याधयस्). M1 धर्मश्च क्षीयते क्रमात्.

**35** Ś1 K1. 2. 4 B2–4 D3 G1 om. (hapl.) 35^cd. — ^c) K3 Dc D5 M धर्मेष्वावर्तमानेषु.

युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः ।
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥ ३५
लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः ।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥ ३६
एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते ।
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥ ३७
यच्च ते मत्परिज्ञाने कौतूहलमरिंदम ।
अनर्थकेषु को भावः पुरुषस्य विजानतः ॥ ३८
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
युगसंख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम् ॥ ३९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

# १४९

भीम उवाच ।
पूर्वरूपमदृष्ट्वा ते न यास्यामि कथंचन ।
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना ॥ १
वैशंपायन उवाच ।
एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवंगमः ।
तद्रूपं दर्शयामास यद्वै सागरलङ्घने ॥ २
भ्रातुः प्रियमभीप्सन्वै चकार सुमहद्वपुः ।
देहस्तस्य ततोऽतीव वर्धत्यायामविस्तरैः ॥ ३
तद्रूपं कदलीषण्डं छादयन्नमितद्युतिः ।
गिरेश्चोच्छ्रयमागम्य तस्थौ तत्र स वानरः ॥ ४
समुच्छ्रितमहाकायो द्वितीय इव पर्वतः ।
ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भृकुटीकृतलोचनः ।

C. 3. 11269
B. 3. 150. 5
K. 3. 152. 6

**36** $^{b}$) T1 भावा लोके प्रवर्तिताः. — $^{c}$) D1 T1 G1. 2 °क्षये (for °क्षय-). K1 D1. 2 -कृतो धर्मः; K4 G2 -कृतान्धर्मान् (for -कृता धर्माः). — $^{d}$) Ś1 K1. 2 D1-3. 5. 6 प्रधानानि; T2 G3 प्रयाणानि (for प्रार्थ°). Ś1 K1 प्र-; K3 (both) वि- and प्र-; K4 B2. 3 D1. 2 T1 G1. 2. 4 M2 च (for वि-). M1 प्रार्थनापूर्विकाः स्मृताः.

**37** D1 om. 37; T1 om. 37$^{ab}$. — $^{b}$) Ś1 K1-3 Dc D3. 5 G1 नचिराद् (for अचिराद्). Ś1 K1-3 Dc D5 प्रतिपत्स्यते; K4 संप्रवर्तते; D2. 3 यत्प्रवर्त्स्यते. — $^{c}$) K4 (hypermetric) एतच्च (m ह्येतत्); T G चैव (G1 चेमं) (for त्वेतत्).

Colophon. — *Major parvan:* Ś1 K1. 2 T2 G2-4 M1 आरण्य. — *Sub-parvan:* K4 B1. 3. 4 Dn D4. 6 (all om. sub-parvan name) mention only कदलीखंड (K4 °खंडप्रवेश); B2, likewise, only गंधमादनप्रवेश (followed by कदलीषंड); Dc, only पुष्पाभिहरण and कदलीखंड; D1, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश); and G1, only सौगंधिकाहरण. — *Adhy. name:* K3 हनुमद्भीमसेनसमागमे युगसंख्या; Dc D1-3 हनुमद्भीमसमागमः; Dn D4. 6 हनूमद्दर्शनं; D5 युगसंख्यानं; G1 हनुमद्भीमसंवादे युगसंख्याकथनं; M1 युगधर्मकथनं. — *Adhy. no.* (figures, words or both): Dn1. n2 148 (as in text); Dn3 149; D1 156; T1 150; T2 G M 151 (M2 153). — *Śloka no.:* Dn D1 40.

## 149

**3** $^{b}$) M सुमहद् (M2 °द्दा-) कपिः. — After 3$^{ab}$, S ins. (a variant of 2$^{cd}$):

742* तद्रूपं यत्पुरा तस्य बभूवोदधिलङ्घने ।

— $^{c}$) Ś1 च वीरस्य (for ततोऽतीव). K1. 2 स देहस्तस्य वीरस्य; K4 स्वं देहं वर्धयामास. — $^{d}$) K3 D1-3 [अ]वर्धतायाम°; K4 हनुमान्पवनात्मजः; M वृद्ध आयाम°.

**4** $^{a}$) Ś1 K1. 2 D1-3 तद्दीर्घं; K4 B1-3 Dn D4. 6 M सद्रुमं; B4 Dc सद्रूपं (for तद्रूपं). Many N MSS. °खंडं (for °षण्डं). — $^{c}$) Ś1 K1. 2 चिरं चोच्छ्रायम्; B1 (m as in text) शिखरोच्छ्रयम्; Dn2. n3 D1. 2 गिरिश्चो°; T2 G2-4 गिरेश्चोच्छ्रायम्. M1 om. च. K3. 4 B D आक्रम्य; G1 आसाद्य; M1 आवृत्य (for आगम्य). — $^{d}$) B3 Dn D4. 6 च (for स). K4 तस्थौ गिरिरिवापरः.

**5** $^{b}$) D1-3. 5 भास्करः (for पर्वतः). K4 तत्रासौ वानरोत्तमः. — $^{d}$) B2-4 D (except D1-3. 5) °कुटिलाननः.

**6** $^{a}$) K3. 4 D1-3 विसिस्मये; K3 °स्मितेन; B Dn2 S

C. 3. 11270
B. 3. 150. 6
K. 3. 152. 6

दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः ॥ ५
तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः ।
विसिस्मिये तदा भीमो जहृषे च पुनः पुनः ॥ ६
तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम् ।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ॥ ७
आबभाषे च हनुमान्भीमसेनं स्मयन्निव ।
एतावदिह शक्तस्त्वं रूपं द्रष्टुं ममानघ ॥ ८
वर्धेऽहं चाप्यतो भूयो यावन्मे मनसेप्सितम् ।
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ॥ ९
तदद्भुतं महारौद्रं विन्ध्यमन्दरसंनिभम् ।
दृष्ट्वा हनूमतो वर्ष्म संभ्रान्तः पवनात्मजः ॥ १०
प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः ।
कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम् ॥ ११
दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो ।
संहरस्व महावीर्य स्वयमात्मानमात्मना ॥ १२
न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम् ।
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ १३
विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै ।
यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् ॥ १४
त्वमेव शक्तस्तां लङ्कां सयोधां सहवाहनाम् ।
स्वबाहुबलमाश्रित्य विनाशयितुमोजसा ॥ १५
न हि ते किंचिदप्राप्यं मारुतात्मज विद्यते ।
तव नैकस्य पर्याप्तो रावणः सगणो युधि ॥ १६
एवमुक्तस्तु भीमेन हनूमान्प्लवगर्षभः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा ॥ १७
एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ १८
मया तु तस्मिन्निहते रावणे लोककण्टके ।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ १९
तेन वीरेण हत्वा तु सगणं राक्षसाधिपम् ।

---

(except G$_1$) °सिष्मिये. K$_3$ Dc D$_5$ पार्थो (for भीमो). — d) D$_{1-3}$ जहर्षे; T G$_{2-4}$ जहर्ष.

**8** c) T$_2$ G$_{2.3}$ एव (for इह). — d) B$_4$ Dn D$_{2.6}$ T$_2$ G$_3$ द्रष्टुं रूपं (by transp.).

**9** a) Ś$_1$ वर्धतश्च; K D$_{2.3}$ वर्धते; B$_2$ G$_4$ M वर्धेयं; Dc वर्धये; T$_1$ यदेवं; G$_2$ यदैवं. T$_1$ G$_4$ [अ]भूतोयं (for [अ]तो भूयो). — b) D$_1$ यावान्मे; T$_1$ यन्मे तन्. K$_1$ T$_2$ G$_{2.3}$ मनसीप्सितं; B$_{2.3}$ D (except D$_{1-3}$) T$_1$ मनसि स्थितं. K$_4$ यावदिच्छा भवेन्मम.

**10** Before 10, K$_{3.4}$ B Dc Dn D$_3$ (marg.). $_{4.6}$ T$_2$ G$_3$ ins. वैशंपायन उ° (T$_2$ G$_3$ om. उ°). — b) B (B$_1$ marg.). Dn D$_{4.6}$ °पर्वत°. — c) Some MSS. हनुमतो. K$_4$ D$_5$ T G$_{2-4}$ रूपं (for वर्ष्म).

**11** d) Some MSS. हनुमंतम्. Ś$_1$ K$_{1.2}$ अवस्थितः; K$_4$ M$_2$ उपस्थितः (for अवस्थितम्).

**13** a) Dc नाहं (for न हि). K$_4$ G$_1$ शक्तोस्मि (for शक्नोमि). B$_1$ S ते (for त्वां). D$_{1-3}$ द्रष्टुं त्वां न हि शक्नोमि.

**14** a) Ś$_1$ T$_1$ G$_4$ महा-; T$_2$ G$_3$ महान्; G$_1$ [ए]व मे (for [ए]व मे). — d) Dn$_2$ T$_2$ G$_{2-4}$ °यात् (for °गात्).

**15** b) Ś$_1$ K$_{1.2}$ transp. स- and सह-. Dn D$_6$ सु- (for स-). K$_4$ T G$_{1.3.4}$ °रावणां (for °वाहनाम्). — d) B$_{1.2.4}$ Dn D$_{4.6}$ अंजसा (for ओजसा).

**16** c) Ś$_1$ K D$_{1-3.5}$ अपर्याप्तस्तवैकस्य; T$_1$ G$_2$ न चैवैकस्य प°; T$_2$ G$_{1.3.4}$ न चैव तव प°; M तवैवैकस्य पर्याप्तो. — d) Ś$_1$ राक्षसः (for रावणः). M न चासौ राक्षसाधमः.

**17** Before 17, K$_{1.2}$ B D (except D$_{2.3.5}$) ins. वैशं° उ°. — a) K$_{3.4}$ D$_{3.5}$ स (for तु). — b) Some MSS. हनुमान्. B$_1$m. $_4$ Dn D$_{4.6}$ प्लवगोत्तमः; T G$_{2.3}$ भरतर्षभ; G$_1$ प्लवगेश्वरः; G$_4$ मनुजर्षभ.

**18** Before 18, N (except K$_4$; D$_3$ marg. *sec. m.*) ins. हनू(*or* °नु)मानुवाच. — d) K$_4$ यथासौ; M$_2$ न चासौ (for ममासौ). Ś$_1$ K D$_5$ °धिपः (for °धमः). G$_1$ रावणः सगणो युधि (=16$^{d}$).

**19** a) B D (except D$_{1-3.5}$) G$_1$ M निहते तस्मिन् (by transp.). — b) D$_2$ सबले (for रावणे). B$_2$ °लोकवारणे; T G$_{2-4}$ °रावणे. — c) K$_{3.4}$ D$_{1.2}$ न स्याद् (for नश्येद्). — d) K$_4$ D$_{1.2}$ समी° (for उपे°). Ś$_1$ तदेनं निरीक्षितं (sic); K$_1$ D$_3$ [इ]त्यत एवं समीक्षितं; K$_2$ D$_5$ [अ]त एतत्समी°; T G$_{2-4}$ तत एवमुपे°; G$_1$ M$_2$ [इ]त्यत एतदुपे°; M$_1$ [इ]त्येवमेतदुपे°.

**20** a) B Dn D$_{4.6}$ T G$_{2-4}$ तं हत्वा; M$_1$ गत्वा तु (for हत्वा तु). Ś$_1$ K Dc D$_{1-3.5}$ तेन हत्वा तु (D$_{1.2}$ सु-; D$_3$ स) वीरेण (Dc रामेण). — b) B$_1$m. $_{2.4}$ Dn D$_{1.4.6}$ T G °धमं (for °धिपम्). — c) K$_3$ Dc$_2$ D$_4$ T$_1$ G$_2$ स्वपुरीं; G$_1$

आनीता स्वपुरं सीता लोके कीर्तिश्च स्थापिता ॥ २०
तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ।
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः ॥ २१
एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ २२
न च ते तरसा कार्यः कुसुमावचयः स्वयम् ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः ॥ २३
बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ २४
मा तात साहसं कार्षीः स्वधर्ममनुपालय ।
स्वधर्मस्थः परं धर्मं बुध्यस्वागमयस्व च ॥ २५
न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥ २६
अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥ २७
आचारसंभवो धर्मो धर्माद्वेदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥ २८
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥ २९
पण्याकरवणिज्याभिः कृष्याथो योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥ ३०
त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते ॥ ३१
सा चेद्धर्मक्रिया न स्यात्त्रयीधर्ममृते भुवि ।
दण्डनीतिमृते चापि निर्मर्यादमिदं भवेत् ॥ ३२
वार्ताधर्मे ह्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः ।

C. 3. 1197
B. 3. 150. 33
K. 3. 152. 34

---

स्वां पुरीं; M2 स्वपुरे (for स्वपुरं). — d) Ś1 K Dc D1–3. 5 लोके च (Dc लोकेषु) स्थापितं यशः; B Dn D4. 6 T G2–4 कीर्तिश्च (Dn D6 °श्चा-) स्थापिता नृषु.

**23** b) Ś1 K1. 4 T1 G1. 2 M कुसुमा(Ś1 K4 M2 °मो)-पचयः; G4 कुसुमानयनं. — c) Ś1 वि-; G2 M2 [इ]ह (for हि). G1 विजानता (विशेषतः also).

**24** b) Ś1 K Dc D2. 3. 5 पुरुषर्षभ. — c) G2. 4 देवता हि (for दैव°).

**25** b) B Dn D4. 6 परि- (for अनु-). D1–3 -पालयन्. — c) T G स्वधर्मस्थापनं धर्म्यं. — d) K1. 2 D1. 3 गणयस्व; K3. 4 B4 Dn-D2. 4–6 गमयस्व; T1 [आ]गमनेस्य (for [आ]-गमयस्व). Ś1 बुध्या विगणय स्वयम्.

**26** a) Ś1 K B2. 4 D1–3. 5 शास्त्रम्; M धर्मान् (for धर्मम्). Ś1 D1 अव° (for अवि°). — b) Ś1 वृद्धानविगणय्य वा. — c) N धर्मार्थौ (for धर्मो वै). Ś1 K2 विचितुं (for वेदितुं). N शक्यौ; G1 शक्यं.

**27** a) Ś1 K1–3 यश्च; S (except T2 G3) ह्यत्र (for यत्र) — c) B1–3 Dn D4. 6 T1 स विज्ञेयो; D1. 2 विख्यातव्यो; T2 G3 विज्ञातव्ये. Dc हि भागेन (for वि°). — d) T2 G2–4 तत्र (for यत्र). B4 बुद्धयः (for [अ]बुद्धयः).

**28** a) Dc °प्रभवो. — b) B1. 3 Dn D4. 6 धर्मे वेदाः प्रतिष्ठिताः. — D4. 6 om. (hapl.) 28[cd]. — c) S (except T1) वेदाद् (for वेदैर्). — d) B3 M2 यज्ञे; T2 G यज्ञाद् (for यज्ञैर्). Ś1 K2 B2–4 D1. 2 वेदाः (for देवाः).

**29** a) Ś1 K D3. 5 °विधानज्ञैर्. — b) Ś1 मृष्यंति; K1. 2 तुष्यंति; K3 तृप्यंति; K4 D1–3 ऋध्यं(D3 इध्यं-[*sup. lin.* इज्यं])ति (for धार्यन्ति). — c) K1 °नौर्युक्तैः (sic); K3. 4 Dc Dn1 D1–4 °नःप्रोक्तैः; B2 °नज्ञैश्च (for °नोक्तैश्च). — D4 om. (hapl.) from मानवाः (in 29[d]) up to धार्यंते (in 30[c]). — d) Ś1 K D1–3 ऋध्यंति (K3 तृप्यंति) (for धार्यन्ति).

**30** D4 om. up to धार्यंते (cf. v.l. 29). — a) S बल्याकर°. — b) D5 कृष्यर्थो; T G2. 4 M कृष्यार्थैर् (for कृष्याथो). K3. 4 B Dc Dn D3. 6 T2 (after corr.) G3 कृष्या(G3 °षि-)गोजा(K4 °वैर्गो)विपो°; D2 कृष्या योषाविपो°; G1 कृष्या चाधानिपो°; text as in Ś1 K1. 2 D1. — c) Ś1 K1. 2. 4 D1. 3 (m as in text). 5 विद्यया (for वार्त°). K4 धर्मैः; D3 लोको; T1 धर्मं (for सर्वं). — d) Ś1 K1. 2 धर्मैरे-भिर्; D3 धर्मोपेतैर्; T1 सर्वं धर्मैर् (for धर्मैरेतैर्).

**31** a) Ś1 K D1–3. 5 M त्रयीति (K3 त्रयी तु) निश्चिता वृद्धैः (Ś1 बुद्धैः; M वार्ता); T G दंडनीतिस्त्रयीवार्ता (G2 °र्ताः). — b) Ś1 K D1–3. 5 विधानतः; T1 मनोमताः; T2 G2–4 जगुर्मताः (for विजा°). — c) T1. 2 (before corr.) G2. 4 M1 प्रवृत्ताभिर् (for प्रयु°). — d) T2 G3 प्रवर्तते (for विधी°).

**32** a) Ś1 K1. 2 सर्व-; K3 D5 सा वै; K4 D3 सतां; D1. 2 सा च (for सा चेद्). D1 कर्म-; D3 धर्मः (for धर्म-). B Dc Dn D4. 6 -कृता (B2 -कृते) (for -क्रिया). — b) T1 त्रयीधर्मं न ते; M2 °धर्मादृते. — c) G1 M विना (for ऋते). — d) Ś1 D1 ऋतं (for इदं).

C. 3. 11298
B. 3. 150. 33
K. 3. 152. 34

सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ॥ ३३
द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णिकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ॥ ३४
याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥ ३५
शुश्रूषा तु द्विजातीनां शूद्राणां धर्म उच्यते ।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिनाम् ॥ ३६
क्षत्रधर्मोऽत्र कौन्तेय तव धर्माभिरक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥ ३७
वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
सुस्थितः शास्ति दण्डेन व्यसनी परिभूयते ॥ ३८
निग्रहानुग्रहैः सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥ ३९
तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ॥ ४०
राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रः पराक्रमः ।
निग्रहानुग्रहौ चैव दाक्ष्यं तत्कार्यसाधनम् ॥ ४१
साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥ ४२
मन्त्रमूला नयाः सर्वे चाराश्च भरतर्षभ ।

---

**33** $^{a}$) $K_1$ हि वर्तंत्यो; $K_{3.4}$ Dc $D_{1-3}$ $G_1$ M ह्यति- ( $K_4$ $G_1$ $M_2$ ह्यधि-; $D_3$ स्वति )ष्टंत्यो; Dn $D_{4.6}$ $T_2$ (after corr.) $G_{3.4}$ ह्यवर्तिन्यो. — Ś$_1$ $K_1$ om. (hapl.) 33$^{cd}$. — $^{c}$) $K_4$ $D_{1-3.5}$ अ- (for सु-)! — $^{d}$) $K_{2.3}$ B Dn $D_{4.6}$ $T_2$ (after corr.) $G_3$ M धर्मं; $G_1$ धर्मे (for धर्मैः). $K_4$ $D_{1-3.5}$ सीदंति (for सूयन्ति).

**34** $^{a}$) Ś$_1$ $K_{1.2}$ परमो (for अमृतं). $D_1$ तच्च (for धर्मो). $K_4$ द्विजानामथ ये धर्मा; B Dn $D_{4.6}$ $T_2$ $G_3$ द्विजातीनामृतं धर्मो. — $^{b}$) Ś$_1$ K Dc $D_{2.3.5}$ धर्मश्च ( $K_3$ धर्मान् ); $D_1$ धर्मैश्च (for ह्येकश्च). T G °लक्षणः ( $G_1$ °वर्णकः ).

**35** $^{a}$) B Dc Dn $D_{1.4.6}$ °ध्यापनं; $D_{2.5}$ °ध्ययने; $T_1$ $G_{1.4}$ °ध्यापना (for °ध्यापने). $K_{1.2}$ चोभौ; B D (except $D_{1-3.5}$) विप्रे (for चोभे). — $^{b}$) B D (except $D_{1-3.5}$) धर्मश्चैव ( $B_{1.3}$ Dc °कः ); $G_4$ ब्राह्मणस्य (for ब्राह्म°). S (except $G_2$ $M_1$) परि- (for प्रति-). — $^{c}$) $K_3$ $B_{1.3}$ Dc $D_{1-3}$ S च; $K_4$ तु (for वै).

**36** $^{a}$) $K_2$ $G_4$ [अ]ति; $K_3$ [आ]शु; Dn $D_{4.6}$ T $G_3$ $M_2$ च (for तु). — $^{c}$) A few MSS. भैक्ष्य-. $T_1$ चापि; $T_2$ $G_{2-4}$ चैव; $G_1$ धर्मो; $M_1$ एव; $M_2$ हीनो (for हीनास्). — $^{d}$) $T_1$ $G_1$ M यथैव. Ś$_1$ $K_2$ Dn $D_{4.6}$ गुरुवासिताः; $K_1$ °वासितः; $K_3$ B Dc $D_{1-3.5}$ °वासिनः ( $B_2$ °सेविताः ).

**37** $^{a}$) Ś$_1$ K D (except $D_{1-3.5}$) क्षत्रधर्मेण; $B_{2.4}$ °धर्मोथ; $T_2$ (before corr.) $G_4$ तत्र धर्मोत्र. $M_1$ तथैव चात्र कौंतेय. — $^{b}$) Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ कुरु (for तव). $K_4$ कर्माभि-; B धर्मोभि- ( $B_2$ °थ ); Dn $D_{4.6}$ $T_2$ $G_{3.4}$ धर्मोत्र; $T_1$ धर्मोपि; $G_2$ धर्मो हि (for धर्माभि-). $T_2$ (before corr.) कारणं (for -रक्षणम्).

**38** $^{b}$) $T_2$ (before corr.) $G_4$ श्रिया° (for श्रुता°). — $^{c}$) Ś$_1$ $K_{1.2}$ स्वस्थितः; $K_3$ सुस्निग्धः; B D (except $D_{3.5}$) $G_1$ आस्थितः. Ś$_1$ $K_{1.2}$ चास्ति; $B_{2.4}$ Dc शांति-; $G_{2.4}$ शाधि. Ś$_1$ $K_{1.2}$ धर्मेण (for दण्डेन). $K_4$ सुस्थितस्यापि दंडेन; $T_1$ सुस्थिरश्चाप्यदं°.

**39** $K_4$ om. 39$^{a}$–41$^{b}$; $D_{1-3.5}$ om. 39. — $^{a}$) Ś$_1$ K ( $K_4$ om. ) निग्रहानुहे; S °हप्रग्रहे. — $^{b}$) S नेता (for राजा). — $^{c}$) $K_3$ B D ( $D_{1-3.5}$ om. ) भवंति (for भवति). — $^{d}$) $K_{2.3}$ B D ( $D_{1-3.5}$ om. ) मर्यादाः °स्थिताः.

**40** $K_4$ om. 40 (cf. v.l. 39). — $^{a}$) T $G_{2-4}$ तस्माद्देशेषु दुर्गेषु. — $^{d}$) Ś$_1$ $K_{1.2}$ वृद्धिक्षयौ; $K_3$ $T_2$ (before corr.) $G_4$ $M_1$ वृद्धिः क्षयं; $B_2$ वृद्धिं क्षयं; $B_3$ $T_1$ $G_2$ $M_2$ वृद्धिक्षयं. Ś$_1$ $K_2$ यथा (for तथा).

**41** $K_4$ om. 41$^{ab}$ (cf. v.l. 39). — $^{a}$) $K_3$ B D $M_2$ राज्ञामुपायश्चारश्च. — $^{b}$) Ś$_1$ $K_1$ $D_6$ बुद्धिमंतः; $K_2$ B Dc Dn $D_{4-6}$ $M_1$ बुद्धिमंत्र-; $K_3$ $D_{2.3}$ T G $M_2$ बुद्धिर्मंत्रः ( $T_1$ °न्त्र- ). Ś$_1$ $K_2$ $B_{1.2.4}$ D (except $D_{1-3}$) $M_1$ पराक्रमाः; $T_1$ -विनिग्रहः; $G_2$ पराक्रमैः. — $^{c}$) $B_1$ निग्रहेषु ग्रहे; $B_{1m.2.4}$ D (except $D_{1-3.5}$) $T_2$ $G_3$ निग्रहप्रग्रहौ ( $B_2$ $T_2$ $G_3$ °हश्च ); $T_1$ $G_{2.4}$ निग्रहः प्रग्रहश्च; $M_2$ निग्रहानुग्रहं. - $K_3$ Dc $D_{1-3.5}$ चोभौ; $K_4$ $G_1$ M चापि (for चैव). — $^{d}$) $K_2$ $B_{1.2.4}$ Dn $D_{4.6}$ T $G_{2-4}$ वै; $K_4$ $B_3$ $D_{1.2}$ $G_1$ M चेत् (for तत्). B Dn $D_{4.6}$ $T_1$ $G_1$ कार्यसाधकं; M °साधकः.

**42** $K_1$ om. 42$^{a}$–43$^{b}$. — $^{c}$) $K_4$ B D (except $Dn_3$ $D_{1-3.5}$) कर्माणि (for कार्याणि).

**43** $K_1$ om. 43$^{ab}$ (cf. v.l. 42). — $^{b}$) $K_4$ चारश्च; $B_4$ $Dn_3$ $D_4$ चराश्च; $G_1$ चचार. T $G_{3.4}$ पालिता हि ( $T_1$ °तानि ) नरर्षभ; $G_2$ पालिता भरतर्षभ. — $^{c}$) Ś$_1$ $K_{1.2}$ $B_{3.4}$ $D_{4.6}$ सुमंत्रिते नये; $B_{1.2}$ Dn $D_5$ °तेन या; $T_1$ °तेषु तैः; $T_2$ G $M_1$ °तनयैः; $M_2$ °सुनयैः. S (except $T_1$) सद्भिस् (for

